अथ अन्वितार्थप्रकाशिकाख्यव्याख्यासहितं

# श्रीमद्भागवते एकादश

प्रारभ्यते ।

15965

॥ श्रीगणेशाय नमः ॥ आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि ॥ यत्सद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥ यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम् ॥ तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥ प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या ॥ गङ्गासहायजरठो हरितोषहेतोरेकादशे सुगममन्वयमातनोति ॥ ३ ॥ प्रथमे मुनिशापेन मुसलं लोहसम्भवम् ॥ सा-म्बादजायत श्लोका विंशतिः स्युश्चतुर्युताः ॥ उवाचैत्रयमङ्क्षूनाष्टाविंशतिरनुष्टुभः ॥ १ ॥ कृत्वेति ॥ जविष्ठं वेगवत्तरमाशु युद्धादिपर्यवसायिनं कलिं कलहं जनयन् सर्वान्त-र्यामित्वात्प्राणिषूत्पादयन् रामेण सहितः यदुभिश्च वृतः कृष्णो दैत्यानां पूतनाकंसादीनां वधं कृत्वा भुवो भारमवतारयत् अवातारयत् । अडभाव आर्षः ॥ १ ॥ ये इति ॥ दुर्द्यूतं कपटद्यूतं हेलनमवज्ञा कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणम् इत्यादिभिः साधनैः । आदिना गरदानादिभिः सपत्नैः शत्रुभिर्दुर्योधनादिभिः सुबहु यथा भवति तथा बहून् वारान् ये पाण्डुसुता युधिष्ठिरादयः कोपितास्तान्निमित्तं कृत्वा इतरेतरतः उभयोः पक्षयोः समेतान्मिलितान्नृपान् असुरांशभूतान्हत्वा ईशः श्रीकृष्णः

॥ श्रीगणेशाय नमः ॥ ॥ श्रीबादरायणिरुवाच ॥ कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ॥ भुवोऽवतारयद्भारं जविष्ठं जनयन्कलिम् ॥ १ ॥ ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वा निमित्तमितरेतरतः समेतान्हत्वा नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥ भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ॥ मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद्यादवं कुलमहो ह्यविषह्यमास्ते ॥ ३ ॥ नैवान्यतः परिभवोऽस्य भवेत्कथञ्चिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ॥ अन्तः कलिं यदुकुलस्य विधाय वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥

क्षितेर्भारं निरहरत् जहार । यद्वा । ये कोपिताः यैश्च सपत्नैः कोपिताः तानितरेतरतो निमित्तं कृत्वेत्यन्वयः ॥ २ ॥ भूभारेति ॥ स्वस्य बाहुभिर्गुप्तैः सुरक्षितैर्यदुभिर्निमित्त-भूतैर्भुवो भारभूता राजन्यानां दैत्यांशभूतानां पृतनाः सेनाः राजन्यास्तत्सेनाश्चेति वा विवाहादिच्छलेन निरस्य हत्वा अप्रमेयः यादवादिभिरज्ञातचिकीर्षः भगवान् कृष्णः अचिन्तयत् । ननु अवनेर्भूमेर्भारो लोकदृष्ट्या गतोऽप्यहं तम् अगतमेव मन्ये । यस्मात् अहो अविषह्यं सोढुमशक्यं यादवं कुलमास्ते अनेन स्वकुलत्वात्स्वयमपि हननमनुचित-मिति सूचितम् ॥३॥ नैवेति ॥ अहमेव संश्रयः आश्रयो यस्य तस्य नित्यं विभवैर्वीर्यैश्वर्यादिभिरुन्नहनस्य उच्छृङ्खलस्य अस्य यादवकुलस्य अन्यतो देवादिभ्योऽपि परिभवः तिरस्कारोऽपि कथंचिदपि नैव भवेद्विनाशस्तु दूरत इत्यर्थः । अतो यदुकुलस्यान्तर्मध्ये कलिं कलहं विधाय शान्तिमुपैमि । वर्तमानसामीप्ये वर्त्तमानवत् । ततश्च स्वधाम वैकुण्ठं यास्यामि वायुर्यथा परस्परसंघर्षणेन वेणुगुल्मस्य विनाशकं वह्निमुत्पाद्य स्वयमुपरतो भवति वेणुगुल्मश्च स्वयमेव विनश्यति तथेत्यर्थः । यद्वा । यदुकुलस्यान्तः

करोमि विधाय तेन च तस्य शान्तिं नाशं विधाय स्वधाम उपैमि । यथा वायुः वेणुस्तम्बस्य वंशसमूहस्य मथनोत्थं वह्निं विधाय तेनैव वंशसमूहस्य नाशं विधाय अन्तर्द्धानं याति तथेत्यर्थः ॥ ४ ॥ एवमिति ॥ हे राजन् सत्यसङ्कल्प ईश्वरः विभुः एवमुक्तप्रकारेण व्यवसितः कृतनिश्चयः कृष्णः विप्राणां शापस्य व्याजेन मिषेण स्वकुलं संजह्रे विनाशितवान् ॥ ५ ॥ स्वमूर्त्येति युग्मम् ॥ लोकानां प्राणिनां लावण्यस्य निर्मुक्तिस्त्याग्स्तिरस्कारो यया यामपेक्ष्य लोकेषु लावण्याधिक्यं नास्तीत्यर्थः । यद्वा । लोकानां लावण्यस्य निर्मुक्तिर्दानं यतः यत्सम्पर्केण लोका लावण्यवन्तो भवन्तीत्यर्थः । तया स्वमूर्त्या नृणां लोचनमाच्छिद्य आकृष्य ततोऽन्यस्याऽवलोकने लोचनस्याप्रवृत्तेः । तथा स्वगीर्भिस्ताः गिरः स्मरतां चित्तमाच्छिद्य तथा पदैस्तत्र तत्राङ्कितैस्तानि पदानि ईक्षमाणानामन्यतो गमनादिकाः क्रियाश्चाच्छिद्य एवं तदानीन्तनानां मनश्चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वेति समुदायार्थः । इतः उपरि जनिष्यमाणानां संसारतरणाय कौ पृथिव्यां शोभनाः श्लोकाः सुश्लोकाः ते कवीनां यस्यां तथाभूतां स्वकीर्तिं

एवं व्यवसितो राजन्सत्यसङ्कल्प ईश्वरः ॥ शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥५॥ स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ॥ गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥ ६ ॥ आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ ॥ तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः ॥ ७ ॥ राजोवाच ॥ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ॥ विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥ यन्निमित्तः स वै शापो यादृशो द्विजसत्तम ॥ कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ॥ ९ ॥ श्रीशुक उवाच ॥ बिभ्रद्वपुः सकलसुन्दरसन्निवेशं कर्माऽऽचरन्भुवि सुमङ्गलमाप्तकामः ॥ आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥

वितत्य विस्तार्य अनया श्रवणकीर्तनस्मरणादिविषयया कीर्त्या श्रवणादिकर्तारः अञ्जसा हि साधनान्तरप्रयासमन्तरेणैव नु निश्चितं तमः अविद्यामूलकं संसारं तरिष्यन्तीत्यभिप्रेत्य ईश्वरः श्रीकृष्णः स्वपदं स्वस्थानमगात् ॥ ६ ॥ ७ ॥ ब्रह्मण्यानामिति ॥ ब्रह्मण्यानां वदान्यानामुदाराणां नित्यं वृद्धोपसेविनां कृष्णचेतसां वृष्णीनां विप्रशापः कथमभूत् । कृष्णचेतसामित्यनेन मुनीनां कोपे जातेऽपि शापः कथं प्रादुरभूत् । कथंतरां सफलोऽभूत् इति सूचितम् ॥ ८ ॥ यन्निमित्त इति ॥ हे द्विजसत्तम यत् निमित्तं कारणं द्वारं यस्य तथाभूतः यादृशो वा तथा एकात्मनामन्योन्यमैकमत्यं प्राप्तानां भेदः कलहः कथं जातः । एतत्सर्वमेतस्मिन् मत्पृष्टे सर्वं प्रतिवक्तव्यं मे मह्यं यत्नेन वदस्व ॥ ९ ॥ बिभ्रदिति ॥ उदारकीर्तिः आप्तकामः पूर्णकामोऽपि कृष्णः स्थितः कृत्ये भूभारहरणे शेषो यस्य तादृशः सकलानां सुन्दराणां करचरणनेत्राद्यवयवानां संनिवेशो विन्यासविशेषो यस्मिंस्तथाभूतं वपुर्बिभ्रत् बिभ्राणो भुवि वर्तमानं द्वारकाख्यं धाम स्वस्थानमास्थाय अधिष्ठाय रममाणः सुमङ्गलं शुभावहं कर्माचरन् स्वकुलं संहर्तुमैच्छ-

न। तत्कार्षः ॥ १० ॥ कर्माणीति ॥ पुण्यानि निवहन्ति प्रापयन्तीति तथा तानि सुमङ्गलानि परमानन्दजनकानि तथा गायतो जगतः कलिमलापहराणि कर्माणि कृत्वा यदुदेवो वसुदेवस्तस्य गृहे निवसता कालात्मना यादवकुलं संजिहीर्षुणा भगवता निसृष्टा अन्तर्यामितया प्रेरिताः मुनयः पिण्डारकाख्यं द्वारकातः प्रागुदीच्यां दिशि नातिदूरे तीर्थविशेषं समगमन् । यद्वा । अश्वमेधादिकर्मार्थमाहूताः कर्माणि कारयित्वा निसृष्टा मुनयः इत्याद्यन्वयः ॥ ११ ॥ विश्वामित्र इति ॥ १२ ॥ क्रीडन्त इति सार्द्धम् ॥ तत्र पिण्डारकसमीपे क्रीडन्तो ये यदुनन्दनाः कुमाराः ते जाम्बवतीसुतं साम्बं स्त्रीवेषैर्वस्त्राभरणादिभिर्वेषयित्वा स्त्रीवेषं विधाय तान्मुनीनुपव्रज्य समीपमेत्यान्तरविनीता उद्धता अपि बहिर्विनीतवत् नम्रवत् उपसङ्गृह्य पादसङ्ग्रहणं कृत्वा पप्रच्छुः ॥ १३ ॥ एषेति सार्द्धम् ॥ हे विप्राः हे अमोघदर्शनाः एषा अन्तर्वत्नी गर्भिणी असितेक्षणा नीलकटाक्षा प्रसोष्यन्ती आसन्नप्रसवा पुत्रकामा वो युष्मान् साक्षात्प्रष्टुं विलज्जती । परस्मैपदमार्षम् । अस्मन्मुखेन पृच्छति अतः किंस्वित्संजनयिष्यति कन्यां वा पुत्रं वा तद् ब्रूतेति

कर्माणि पुण्यनिवहानि सुमङ्गलानि गायज्जगत्कलिमलापहराणि कृत्वा ॥ कालात्मना निवसता यदुदेवगेहे पिण्डारकं समगमन्मुनयो निसृष्टाः ॥ ११ ॥ विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ॥ कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥ क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ॥ उपसंगृह्य पप्रच्छुरविनीता विनीतवत् ॥ ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ॥ १३ ॥ एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ॥ प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यन्ती पुत्रकामा किंस्वित्संजनयिष्यति ॥ १४ ॥ एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ॥ जनयिष्यति वो मन्दा मुसलं कुलनाशनम् ॥ १५ ॥ तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम् ॥ साम्बस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयम् ॥ १६ ॥ किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः ॥ इति विह्वलिता गेहानादाय मुसलं ययुः ॥ १७ ॥ तच्चोपनीय सदसि परिम्लानमुखश्रियः ॥ राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥ १८ ॥

॥ १४ ॥ एवमिति ॥ हे नृप मुनयः एवं प्रलब्धाः उपहसिताः अत एव कुपिताः सन्तस्तान् यदुकुमारानूचुः । हे मन्दाः मन्दभाग्याः वो युष्माकं कुलस्य नाशनं मुसलं जनयिष्यतीति ॥ १५ ॥ तदिति ॥ तत् मुनिवचनं श्रुत्वा ते यदुकुमारा अतिसन्त्रस्ताः सन्तः सहसा आशु साम्बस्योदरं विमुच्य उद्घाट्य तस्मिन्नुदरे अयस्मयं लोहमयं मुसलं ददृशुः । अयस्मयादित्वाद्भत्वन्तेन रुत्वाद्यभावः ॥ १६ ॥ किमिति ॥ ततश्च नोऽस्माभिर्मन्दभाग्यैः किमेतद्ब्राह्मणवञ्चनेन कृतं नोऽस्मान्प्रति जनाः किं वदिष्यन्तीति वदन्तो विह्वलिता व्याकुलचित्ताः सन्तो मुसलमादाय गेहान् ययुः ॥ १७ ॥ तदिति ॥ तच्च मुसलं सदसि राजसभायामुपनीय परिम्लाना मुखस्य श्रीः [illegible] येषां ते यदुकुमाराः सर्वेषां यादवानां सन्निधौ राज्ञे उग्रसेनाय आवेदयांचक्रुः स्वकृतं सर्वं विज्ञापयामासुः । लज्जाभयाभ्यां श्रीकृष्णसमीपं तु न जग्मुः ॥ १८ ॥

श्रुत्वेति ॥ हे नृप द्वारका ओकः स्थानं येषां ते सर्वे अमोघमनिवर्त्यं विप्रशापं श्रुत्वा तथा मुसलं च दृष्ट्वा तावद्विस्मिता आश्चर्यं प्राप्तास्ततश्च भयेन सन्त्रस्ता व्याकुला बभूवुः ॥ १९ ॥ तदिति ॥ स यदुराजः आहुकः उग्रसेनोऽपि साम्बादीनां लज्जाभयाद्यनुदयाय श्रीकृष्णमपृष्ट्वैव तन्मुसलं चूर्णयित्वा चूर्णीकृतांस्तदवयवान् समुद्रसलिले प्रास्यत् प्रक्षिप्तवान् । अस्य चूर्णीक्रियमाणस्य मुसलस्यावशेषितमचूर्णीभूतं लोहं च अल्पमकिञ्चित्करं मत्वा समुद्रसलिले एव प्रास्यत् ॥ २० ॥ कश्चिदिति ॥ ततस्तत्र समुद्रे यदवशेषितं लोहं तत्कश्चिन्मत्स्योऽग्रसीत् गिलितवान् । तङ्भाव आर्षः । चूर्णानि तु समुद्रतरलैरुह्यमानानि वेलायां समुद्रतीरे लग्नानि सन्ति । एरकाः तृणविशेषा आसन् ॥ २१ ॥ मत्स्य इति ॥ अर्णवे तस्मिन् समुद्रे मत्स्यघ्नैः कर्तृभिरन्यैर्मत्स्यैः सह सोऽपि मत्स्यो जालेन गृहीतः तद्विदारणदशायां तस्योदरगतं मुसलशेषभूतं लोहं कश्चिल्लुब्धको व्याधो लब्धवान् । स च तल्लोहं शल्ये बाणस्याग्रेऽकरोत् तेन शराग्रं कारितवान् ॥ २२ ॥ भगवानिति ॥ कालरूपी भगवान् भगवत्त्वात् अविज्ञापिता अपि ज्ञाताः सर्वे अर्था

श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ॥ विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः ॥ १९ ॥ तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ॥ समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥ २० ॥ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ॥ उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः ॥ २१ ॥ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ॥ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥ २२ ॥ भगवाञ्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ॥ कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २३ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे विप्रशापो नाम प्रथमोऽध्यायः ॥१॥

॥ श्रीशुक उवाच ॥ गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ॥ अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥ को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् ॥ न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ २ ॥ तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ॥ अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥३॥

येन सः तथा विप्रशापमन्यथा कर्तुमीश्वरः समर्थोऽपि तत् अन्यथाकरणं नैच्छत् किं त्वन्वमोदत ॥ २३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमादेतामेकादशादिमे ॥ १ ॥ द्वितीये निमिजायन्तसंवादेनाह नारदः ॥ धर्मान् भागवतांस्तत्र श्लोकाः प्रोक्ताः शरेषवः ॥ अष्टोवाचेति पादाढ्या एकैषष्टिरनुष्टुभः ॥ २ ॥ गोविन्देति ॥ हे कुरूद्वह कृष्णोपासने लालसा उत्कटेच्छा यस्य सः नारदः गोविन्दस्य भुजाभ्यां गुप्तायां पालितायाम् अत एव नारदस्यैकत्रानवस्थानहेतुं दक्षशापं विफलयितुं शक्तायां द्वारकायामभीक्ष्णमवात्सीत् ॥ १ ॥ क इति ॥ हे राजन् अमरेष्वप्युत्तमैर्ब्रह्मादिभिरप्युपास्यं मुकुन्दचरणाम्बुजं सर्वतो मृत्युर्यस्य स को नु इन्द्रियवान् प्राणिमात्रान्तर्गतः पुमान्न भजेत् तद्भजने प्राणिमात्रमधिकारीत्यर्थः ॥ २ ॥ तमिति ॥ एकदा तु स्वगृहं प्रत्यागतमर्चितं सुखं यथा भवति तथासीनं तं सर्वशास्त्ररहस्यज्ञतया सुप्रसिद्धं देवर्षिं नारदमभिवाद्य प्रणम्य वसुदेव इदं वक्ष्यमाणमब्रवीत् ॥ ३ ॥

भगवन्निति ॥ हे भगवन् यथा पित्रोर्यात्रा आगमनमपत्यानां स्वस्तये भवति यथा च उत्तमश्लोकस्य वर्त्मभूतानां महतां यात्रा कृपणानां दीनानां स्वस्तये तथा भवतो यात्रा सर्वदेहिनां स्वस्तये भवति ॥ ४ ॥ भूतानामिति ॥ देवानां पर्जन्यादीनां चरितं भूतानां दुःखाय सुखाय च भवति तापवृष्ट्यादिना कीटादीनां मरणस्यापि दर्शनात् अच्युते आत्मा येषां तेषां त्वादृशां साधूनां तु चरितं सर्वेषां सुखायैव भवति ॥ ५ ॥ भजन्तीति ॥ ये जना देवान् यथा भजन्ति उच्चावचयज्ञादिकर्मणाऽऽराधयन्ति कर्मसचिवाः कर्माधीना देवा अपि तांस्तथैव भजन्ति तत्तत्कर्मतारतम्यानुसारेणैव फलं प्रयच्छन्ति। छाया यथा पुरुषानुसारिणी तथा ते कर्मानुसारिण इत्यर्थः। साधवस्त्वादृशा भगवद्भक्तास्तु दीनेषु तापत्रयाभिभूतेषु वत्सलाः प्रीतियुक्ताः स्वोपकारनिरपेक्षतत्तापनिराचिकीर्षव इत्यर्थः ॥ ६ ॥ ब्रह्मन्निति ॥ यद्यपि वयं त्वद्दर्शनेनैव कृतार्थास्तथाऽपि यान् धर्मान् श्रद्धया श्रुत्वा अनुष्ठाय मर्त्यो मरणधर्मा प्राणिमात्रं विश्वतः सर्वस्माद्भयान्मुच्यते तान् भागवतान्भगवत्परितोषकान्धर्मान् तव त्वां पृच्छामः ॥ ७ ॥ अहमिति ॥

वसुदेव उवाच ॥ भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् ॥ कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥ भूतानां देवचरितं दुःखाय च सुखाय च ॥ सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥ भजन्ति ये यथा देवान्देवा अपि तथैव तान् ॥ छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव ॥ याञ्छ्रुत्वा श्रद्धया मर्त्यो मुच्यते विश्वतो भयात् ॥ ७ ॥ अहं किल पुरानन्तं प्रजार्थे भुवि मुक्तिदम् ॥ अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥ यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ॥ मुच्येम ह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥ श्रीशुक उवाच ॥ राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ॥ प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥ नारद उवाच ॥ सम्यगेतद्व्यवसितं भवता भरतर्षभ ॥ यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥ श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ॥ सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥

पुरा पूर्वजन्मनि देवस्य हरेर्मायया विमोहितः अतः भुवि प्रजार्थः पुत्रलाभप्रयोजनः सन्नेवानन्तमनन्तप्रभावमत एव मुक्तिदम्भगवन्तमहमपूजयमाराधितवान्न मोक्षाय अत एव स भुवि मम पुत्रो जातः ॥ ८ ॥ यथेति ॥ हे सुव्रत यथा भवद्भिः हेतुभूतैः विचित्राणि व्यसनानि दुःखानि यस्मिंस्तस्मात् अत एव विश्वतो भयं यस्मिंस्तस्मात्संसारादञ्जसा सुखेन वयं मुच्येमहि तथा अद्धा स्फुटं नोऽस्मान् शाधि शिक्षय ॥ ९ ॥ राजन्निति ॥ धीमता विवेकिना वसुदेवेन एवं कृतः प्रश्नो यस्य तेन च उपस्थितैर्हरेर्गुणैर्हरिं संस्मारितः गुणैः सहितस्य हरेः संस्मारितः इति। अधीगर्थेति षष्ठी वा। देवर्षिर्नारदः प्रीतः संस्तं वसुदेवमाह स्म ॥ १० ॥ सम्यगिति ॥ हे सात्वतर्षभ यत्त्वं विश्वं भावयन्ति शोधयन्ति तान् भागवतान् धर्मान् पृच्छसे। तद्भावः। तदेतद्भवता सम्यग्व्यवसितं निश्चितम् ॥ ११ ॥ श्रुत इति ॥ गुरुमुखाच्छ्रुतः श्रवणानन्तरं स्वमुखेन पठितः ध्यातः मनसा

श्चिन्तितः आदृतः आस्तिक्यबुद्ध्या स्वीकृतः अनुमोदितः परैः क्रियमाणः संस्तुतो वा सद्धर्मो भागवतो धर्मः ये देवेभ्यो विश्वस्मै च द्रुह्यन्ति ते देवविश्वद्रुहस्तानपि सद्य एव पुनाति अनुष्ठितः सन्नल्पपापवतः पुनातीति तु किं पुनर्वक्तव्यम् । देव हे वसुदेवेति संबुद्धिर्वा ॥ १२ ॥ त्वयेति ॥ परमकल्याणस्वरूपं पुण्यं श्रवणं कीर्तनं च यस्य स देवो नारायणः अद्य त्वया तद्धर्मप्रश्नेन मम स्मारित इति महाननुग्रहः कृतः । यद्वा । कल्याणान्ता संबुद्धिः ॥१३॥ अत्रेति ॥ अत्रापि भगवद्धर्मनिर्णयेऽपि आर्षभाणाम् ऋषभपुत्राणां महात्मनः विदेहस्य निम्याख्यस्य च संवादरूपमिमं वक्ष्यमाणं पुरातनमितिहासमुदाहरन्ति वृद्धा वर्णयन्तीत्यर्थः ॥ १४ ॥ प्रियेति ॥ स्वयंभूर्ब्रह्मा तत्पुत्रस्य स्वायंभुवस्य मनोर्यः सुतः प्रियव्रतो नाम प्रसिद्धस्तस्य सुतः आग्नीध्रस्ततः तस्य सुतो नाभिस्तत्सुतो नाभिसुतः ऋषभः स्मृतः कथितः ॥ १५ ॥ तमिति ॥ तमृषभं मोक्षधर्माणां विवक्षया प्रवर्तनेच्छया अवतीर्णं वासुदेवस्य भगवतोंशमाहुः । वृद्धा वदन्ति तस्य च ब्रह्मपारगं ब्रह्मज्ञं सुतशतमासीत् । अत्र ब्रह्मशब्दस्तंत्रेण वेदपरः

त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ॥ स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥
आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥ प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ॥ तस्याग्नीध्रस्ततो नाभिर्ऋषभस्त-
त्सुतः स्मृतः ॥ १५ ॥ तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ॥ अवतीर्णं सुतशतं तस्यासीद्वेदपारगम् ॥ १६ ॥ तेषां वै भरतो ज्येष्ठो
नारायणपरायणः ॥ विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥१७॥ स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ॥ उपासीनस्तत्पदवीं
लेभे वै जन्मभिस्त्रिभिः ॥१८॥ तेषां नव नवद्वीपपतयोऽस्य समन्ततः ॥ कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९॥ नवाभवन्महा-
भागा मुनयो ह्यर्थशंसिनः ॥ श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥

परब्रह्मपरश्च बोध्यः ॥ १६ ॥ तेषामिति ॥ तेषां शतसङ्ख्याकानामृषभपुत्राणां तु मध्ये ज्येष्ठः पुत्रो भरतो नारायणः सर्वान्तर्यामी भगवानेव परं फलरूपं साधनरूपं चायनमाश्रयो यस्य तथाभूतः आसीत् । पूर्वमजनाभसंज्ञया विख्यातमप्येतद्वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् ॥ १७ ॥ स इति ॥ स भरतो भुक्तो भोगो यस्यास्तामिमां स्ववशवर्तिनीं भूमिं त्यक्त्वा गृहान्निर्गतस्तपसा हरिमुपासीनः सेवमानः त्रिभिर्जन्मभिस्तस्य हरेः पदवीं माहात्म्यं सायुज्यं लेभे ॥ १८ ॥ तेषामिति ॥ तेषां भरतानुजानामेकोनशतसङ्ख्याकानां मध्ये नव कुशावर्तेलावर्तब्रह्मावर्तमलयकेतुभद्रसेनेन्द्रस्पृग्विदर्भकीटनामानोऽस्य भारतवर्षस्य ये नव द्वीपास्तत्तुल्यनामानो भूखण्डास्तेषाम-धिपतयः समन्ततः समन्तात् बभूवुरित्यर्थः । एकाशीतिः सुताः कर्मतन्त्रप्रणेतारः कर्ममार्गप्रवर्त्तका द्विजातयः ब्राह्मणाः अभवन् ॥ १९ ॥ नवेति ॥ तेषां मध्ये नव पुत्राः महाभागाः अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः आत्मविद्यायां कृतश्रमाः वातरशनाः दिगम्बराः आत्मविद्यायां विशारदाः निपुणाः मुनयः आसन् ॥ २० ॥

तन्नामान्याह—कविरिति ॥ २१ ॥ त इति ॥ ते एते मुनयः सदसदात्मकं स्थूलसूक्ष्मात्मकं विश्वं भगवद्रूपं पश्यन्तः तत्राप्यात्मनोऽव्यतिरेकेण स्वस्मादभेदेन पश्यन्तो महीं व्यचरन् ॥ २२ ॥ अव्याहतेति ॥ अव्याहता अप्रतिहता इष्टा अभिप्रेता गतिर्येषां ते अथापि मुक्ताः क्वाप्यनासक्ताः सन्तः सुरादीनां लोकान्मुनिप्रभृतीनां भुवनानि स्थानानि च कामं यथेष्टं चरन्ति ॥ २३ ॥ त इति ॥ एकदा ते यदृच्छया अजनाभे वर्षे ऋषिभिर्वितायमानमनुष्ठीयमानं महात्मनो निमेः सत्रमुपजग्मुः ॥ २४ ॥ तानिति ॥ हे नृप सूर्यसङ्काशान् अतितेजस्विनः महाभागवतान् तान्दृष्ट्वा यजमानः निमिः अग्नयः आहवनीयादयो मूर्तिधराः विप्राश्च सर्वे एवोपतस्थिरे प्रत्युत्थितवन्तः ॥ २५ ॥ विदेह इति ॥ विदेहो निमिस्तान् नारायणपरान् अभिप्रेत्य ज्ञात्वा प्रीतः सन्नासनस्थान्कृत्वा यथार्हतः यथोचितं ज्येष्ठादिक्रमेण संपूजयांचक्रे ॥ २६ ॥ तानिति ॥ स्वरुचा स्व-

कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥२१॥ त एते भगवद्रूपं विश्वं सदसदात्मकम् ॥ आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीम् ॥ २२ ॥ अव्याहतेष्टगतयः सुरसिद्धसाध्यगन्धर्वयक्षसुरकिन्नरनागलोकान् ॥ मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभे महात्मनः ॥ २४ ॥ तान्दृष्ट्वा सूर्यसंकाशान्महाभागवतान्नृप ॥ यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥ विदेहस्तानभिप्रेत्य नारायणपरायणान् ॥ प्रीतः संपूजयाञ्चक्र आसनस्थान्यथार्हतः ॥ २६ ॥ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव ॥ पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥ विदेह उवाच ॥ मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ॥ विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥ दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ॥ तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥ अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ॥ संसारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥ धर्मान्भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ॥ यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

कान्त्यैव रोचमानान् न तु आभरणाद्यैः ब्रह्मपुत्रोपमान् सनकादितुल्यान् तान्नव मुनीन् दृष्ट्वा परमप्रीतः प्रश्रयेण विनयेनावनतः नृपो निमिः पप्रच्छ ॥ २७ ॥ मन्ये इति ॥ वो युष्मान् साक्षाद्भगवतो मधुद्विषः हरेः पार्षदान् अनुग्रहपात्रभूतान् मन्ये । हि यतः विष्णोर्भूतानि भक्ताः लोकानां पावनाय चरन्ति सर्वत्र पर्यटन्ति ॥ २८ ॥ दुर्लभ इति ॥ देहिनां मानुषो देहो दुर्लभः मोक्षसाधनत्वात् सोऽपि क्षणभङ्गुरः आशुतरविनाशी अतस्तत्रापि जन्मनि वैकुण्ठः प्रियो येषां वैकुण्ठस्य प्रिया वा तेषां भगवद्भक्तानां दर्शनमहं दुर्लभं मन्ये ॥ २९ ॥ अत इति ॥ हे अनघाः अतः पुनर्भवदर्शनस्य दुर्लभत्वात् आत्यन्तिकं निरतिशयं क्षेमं फलं भवतः पृच्छामः । अस्मिन् संसारे क्षणार्धोऽपि क्षणार्द्धकालभवोऽपि सतां भवादृशां सङ्गो नृणां शेवधिः निधिः निधिवत्परमानन्दप्रदः ॥ ३० ॥ धर्मानिति ॥ यैर्धर्मैः प्रसन्नः अजो भगवान् प्रपन्नाय शरणागताय महात्मा-

त्मानमपि दास्यति तान् भागवतान् भगवत्परितोषकरान् धर्मान् ब्रूत तत्रापि यदि नोऽस्माकं श्रोत्रमिति शेषः । श्रुतये श्रवणाय क्षमं योग्यं भवति यदि वयं तच्छ्रवणाधिकारिण इत्यर्थः ॥ ३१ ॥ एवमिति ॥ हे वसुदेव एवं निमिना पृष्टा महत्तमास्ते मुनयः भगवद्धर्मश्रवणोद्यतैः सदस्यैः सभ्यैः ऋत्विग्भिश्च सह वर्तमानं श्रवणायोद्यतं नृपं निमिं प्रीत्या प्रतिपूज्य सत्कृत्याब्रुवन् उत्तरमुक्तवन्तः ॥ ३२ ॥ प्रथममात्यन्तिकं क्षेमं कथयति—मन्ये इति ॥ अत्र संसारे असति अतितुच्छे देहेन्द्रियादौ आत्मभावात् आत्माभिमानाद्धेतोः नित्यं सर्वदा उद्विग्ना तापत्रयाद्भीता बुद्धिर्यस्य तस्य पुंसः अच्युतस्य पादाम्बुजयोरुपासनम् आराधनमेव अकुतश्चिद्भयं न कुतश्चिदपि भयं यस्मात् सर्वभयनिवर्तकमहं मन्ये । यत्र यस्मिन्नुपासने कृते सति विश्वात्मना सर्वप्रकारेण भीर्भयं निवर्तते ॥ ३३ ॥ य इति ॥ मन्वादिमुखेन वर्णाश्रमादिधर्मानुक्त्वाऽतिरहस्यत्वात् अविदुषामपि पुंसामञ्जः सुखेनात्मलब्धये स्वप्राप्तये ये वै गीतादिप्रसिद्धाः श्रवणकीर्तनादय उपाया भगवता स्वमुखेनैव प्रोक्तास्तान् हितान् परमफलहेतुभूतान् धर्मान् भागवतानेव विद्धि ॥ ३४ ॥ यानिति ॥ हे राजन् यान् भागवतान् धर्मान् आस्थाय आश्रित्य अनुतिष्ठन्निति यावत् नरो योगादिवन्न प्रमाद्येत विघ्नैर्न विहन्येत । किंच नेत्रे निमील्य

नारद उवाच॥ एवं ते निमिना पृष्टा वसुदेवमहत्तमाः॥ प्रतिपूज्याब्रुवन्प्रीत्या ससदस्यर्त्विजं नृपम्॥३२॥ कविरुवाच॥ मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम्॥ उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः॥३३॥ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये॥ अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्॥ ३४॥ यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित्॥ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात्॥ करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत्॥ ३६॥ भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः॥ तन्माययाऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा॥ ३७॥

धावन्नपि इह एषु भागवतधर्मेषु न स्खलेत् निमीलनं नामाज्ञानम्। यथाहुः। "श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते। एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः॥" इति अज्ञात्वापीत्यर्थः। धावन् अङ्गवैगुण्येनानुतिष्ठन्नपि न स्खलेत् फलान्न भ्रश्येत्। तथा न पतेत् प्रत्यवायेन नरकादौ न पतेदित्यर्थः। स्ववर्णाश्रमधर्मान् कश्चिदकुर्वाणोऽपि श्रवणादीन् भागवतधर्माननुतिष्ठन्नप्रत्यवैति स्वधर्मफलं च प्राप्नोतीत्यर्थः ॥ ३५ ॥ कायेनेति ॥ कायेन गमनादि वाचा वागिन्द्रियेण भाषणं मनसा संकल्पम् इतरेन्द्रियैर्दर्शनादि बुद्ध्या निश्चयम् आत्मना चित्तेन ध्यानादि अनुसृतः प्राप्तो यः सात्विकादिस्वभावस्तस्मात् । यद्वा । कायाद्यध्यासेनानुसृतात् ब्राह्मणत्वादिस्वभावात् तद्वशात् कायादिभिर्यद्यत् विहितमविहितं वा करोति तत्सकलं परस्मै परमेश्वराय नारायणाय समर्पयेत् । एतैः सर्वनियन्ता भगवान् प्रीयतामिति भावयेदित्यर्थः । इत्येवं चेत्सर्वोऽपि क्रियाकलापो भगवद्धर्म एव भवति ॥ ३६ ॥ भयमिति ॥ यस्मात् ईशात् भगवतः अपेतस्य विमुखस्यैव तस्य भगवतो मायया अस्मृतिः स्वरूपविस्मृतिः स्यात् । ततश्च विप-

र्ययो देवोऽहं मनुष्योऽहमित्यादिदेहाद्यात्माभिमानो भवति । ततश्च द्वितीयाभिनिवेशः एकस्मिन्नेवाद्वितीये सर्वात्मके ब्रह्मणि शत्रुमित्रादिभेदबुद्धिर्भवति । ततश्च भयं भवति । " द्वितीयाद्वै भयं भवति " इति श्रुतेः । अतो बुधो विवेकी गुरुरेव देवता आराध्यः आत्मा प्रेष्ठश्च यस्य तथादृष्टिः सन् यन्मायया अस्मृत्यादि भवति तमीशमेव एकया अनन्यया भक्त्या आ मोक्षमभिव्याप्य भजेत् ॥ ३७ ॥ अविद्यमान इति ॥ द्वयो द्वैतप्रपञ्चः अविद्यमानोऽपि ध्यातुः पुरुषस्य धिया मनसावभाति स्वप्नदृष्टः पदार्थः मनोरथविषयश्च पदार्थो यथा अविद्यमानोऽपि पुरुषधियैवावभाति तथेत्यर्थः। यस्मादेवं तत्तस्मात् कर्माणि सङ्कल्पयति विकल्पयति चेति तथा तन्मनो बुधो विवेकी निरुन्ध्यात् विषयेभ्यो नियच्छेत् । ततश्चैकया भक्त्या भजनात् संसारमूलमायानिवृत्त्या तद्भयनिवृत्तिः स्यान्नान्यथा ॥ ३८ ॥ शृण्वन्निति ॥ यानि लोके गीतानि प्रसिद्धानि सुभद्राणि तत् सः भगवानेवार्थः येषां तानि रथाङ्गं चक्रं पाणौ यस्य तस्य भगवतो जन्मानि कर्माणि नामानि च शृण्वन् गायंश्च विलज्जः असङ्गश्च सन् विचरेत् ॥३९॥ एवमिति ॥ एवंभूतं भगवज्जन्मादिश्रवणकीर्तनादिरूपं व्रतं वृत्तं यस्य सः स्वप्रियस्य भगवतो नामकीर्त्या जातः अनुरागः भगवति प्रेम यस्य सः अत एव द्रुतं श्लथत् चित्तं हृदयं यस्य

अविद्यमानोऽप्यवभाति हि द्वयोध्यातुर्धिया स्वप्नमनोरथौ यथा ॥ तत्कर्मसंकल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥
शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ॥ गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ॥ ३९ ॥ एवंव्रतः
स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ॥ हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥ खं वायुमग्निं सलिलं
महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ॥ सरित्समुद्रांश्च हरेः शरीरं यत्किं च भूतं प्रणमेदनन्यः ॥ ४१ ॥ भक्तिः परेशानुभवो विरक्तिरन्यत्र
चैष त्रिक एककालः ॥ प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥

सः उन्मादवत् ग्रहगृहीतवत् लोकबाह्यः दाम्भिकविलक्षणः प्रेमपरवशः कदाचिद्भक्तपराजितं भगवन्तमाकलय्य उच्चैर्हसति कदाचित्तद्वियोगमनुसन्धाय एतावन्तं कालमहमुपेक्षितोऽस्मीति कृत्वा रोदिति कदाचिदत्यौत्सुक्यात् रौति क्रोशति कदाचिद्भक्तानुग्रहार्थं भगवता कृतानि नानाविधानि कर्माणि स्मृत्वा गायति तद्रासादिलीलानुसन्धानेन स्वयमपि नृत्यति ॥ ४० ॥ खमिति ॥ खमाकाशं ज्योतींषि सूर्यचन्द्रनक्षत्राणि सत्वानि जन्तून् एवं खवाय्वादीन् यत्किं च भूतं स्थावरजङ्गमभूतमात्रं तत्सर्वं हरेः शरीरमिति भावयन् स्वयमप्यनन्यः अपृथक्सिद्धः स्वात्मन्यपि भगवच्छरीरत्वं भावयन्नित्यर्थः । प्रणमेत् ॥ ४१ ॥ नन्वियमारूढयोगैरप्यतिदुर्लभा गतिः कथं नाम कीर्त्तनमात्रेणैकत्रैव जन्मनि भवेदित्याशङ्क्याह–भक्तिरिति॥ प्रपद्यमानस्य निष्कपटं भगवद्भजनं कुर्वतः पुंसः भक्तिः प्रेमलक्षणापरेशानुभवः परेशस्य भगवतः अनुभवः स्वरूपस्फूर्त्तिः भगवतोऽन्यत्र धनपुत्रादि विरक्तिरित्येष त्रिक एककालः भजनसमकाल एव यथोत्तरं वर्द्धमानो भवति। यथा अश्नतः भुञ्जानस्य पुंसोऽनुघासं प्रतिग्रासं यथा तुष्टिः मनः-

सन्तोषः पुष्टिः उदरपूर्तिः क्षुदपायः क्षुन्निवृत्तिश्च स्युः। एवमेकैकस्मिन् भजने किंचित्प्रेमादित्रिके जायमानेऽनुवृत्त्या भजतः परमप्रेमादि जायते बहुग्रासभोजिन इव परमतुष्ट्यादि ॥ ४२ ॥ इतीति ॥ हे राजन् इत्येवमुक्तप्रकारेणानुवृत्त्या अच्युताङ्घ्रिं भजतो भागवतस्य यदा भक्त्यादयस्त्रयो भवन्ति तदा तत एव भक्त्यादित्रिकात् स साक्षात् परां सर्वत उत्कृष्टां शान्तिं संसारदुःखनिवृत्तिपूर्वकपरमानन्दभगवत्प्राप्तिरूपां मुक्तिमुपैति॥ ४३॥ अथेति ॥ अथ भागवतं भगवद्भक्तलक्षणादिकं ब्रूत। यो धर्मो यस्य सः अनिजभाव आर्षः। यादृशः यत्स्वभावः नृणां मध्ये यथा चरति यद्ब्रूते यैर्लिङ्गैः चिह्नैः स भगवतः प्रियो भवति इति। यद्वा। स भगवत्प्रियः अत्र क्रमाद्भागवतस्य धर्मस्वभावाचारवचनचिह्नप्रश्नाः ॥४४॥ यद्धर्म इत्यस्योत्तरमाह-सर्वेति ॥ यः आत्मनः स्वस्य सर्वभूतेषु भगवद्भावं ब्रह्मभावेन समन्वयं पश्येत् तथा आत्मन्यधिष्ठाने ब्रह्मणि भूतानि पश्येत्। यद्वा। आत्मनो हरेः सर्वभूतेषु स्थावरजङ्गमात्मकेषु अपि नियन्तृत्वेन वर्तमानस्य भगवद्भावं निरतिशयैश्वर्यादिमत्त्वमेव यः पश्येत् न तु तारतम्यम्। तथा भगवत्यप्रच्युतैश्वर्यादिरूपे आत्मनि हरावेव सर्वभूतानि पश्येत्। स एष भागवतोत्तमः ॥४५॥ ईश्वर इति ॥ य ईश्वरे प्रेम तदधीनेषु भगवद्भक्तेषु मैत्रीं बालिशेषु अज्ञजनेषु कृपां तद्दुःखप्रहाणेच्छां द्विषत्सु भगवत्-

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥ राजोवाच ॥ अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ॥ यथाऽऽचरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥४४॥ हरिरुवाच ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ॥ भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ॥ प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥४६॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते ॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥४७॥ गृहीत्वापीन्द्रियैरर्थान्यो न द्वेष्टि न हृष्यति ॥ विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ॥ ४८ ॥ देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ॥ संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥

द्भक्तद्वेषिषु च उपेक्षामौदासीन्यं करोति स मध्यमो भागवतो भेददर्शित्वात् ॥ ४६ ॥ अर्चायामिति ॥ यस्तु हरये हरिं प्राप्तुम् अर्चायामेव सर्वत्र विद्यमानमपि तमजानन् प्रतिमायामेव तस्य पूजां श्रद्धया ईहते करोति तस्य भक्तेषु तथान्येषु गोब्राह्मणान्यादिषु च पूजां न करोति स प्राकृतः स्मृतः उक्तः। प्रकृतिः प्रारम्भः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्याशयः ॥४७॥ अथ पुनरप्युत्तमभक्तलक्षणान्याह तत्रापि यथा चरति तथाह- गृहीत्वेति॥ य इन्द्रियैरर्थान् विषयान् गृहीत्वापि अपिशब्दाद्वासुदेवाविष्टचित्तो विषयान् अगृह्णन्नपि इदं विश्वं विष्णोर्मायां पश्यन् न द्वेष्टि न हृष्यति स वै भागवतोत्तमः ॥४८॥ देहेति ॥ यो निरन्तरं हरेः स्मृत्या देहेन्द्रियप्राणमनोधियां संसारधर्मैः जन्माप्ययक्षुद्भयतर्षकृच्छ्रैरविमुह्यमानः। आर्षः शानच् चानश् वा। देहादीनां धर्मान् जन्मादीनात्मन्यमन्यमानः स भागवतप्रधान उत्तमो भागवतः तत्र देहस्य जन्माप्ययौ उत्पत्तिविनाशौ प्राणस्य क्षुत् पिपासाया उपलक्षणम्। मनसो भयमिति कामक्रोधलोभमोहसुखदुःखादीनामुपलक्षणम्। बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्रं श्रमस्तैरिति विवेकः॥४९॥

नेति ॥ कामो भोगाभिलाषस्ततः कर्माणि शारीरव्यापारविशेषाः ततश्च बीजानि पुनः शरीरग्रहणहेतुभूतानि पुण्यपापानि तेषां यस्य चेतसि संभव उत्पत्तिर्न भवति स वासुदेव एवैको निलय आश्रयो यस्य स वै भागवतोत्तमः ॥ ५० ॥ यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति ॥ जन्म सत्कुले कर्म यागादि वर्णा ब्राह्मणत्वादयः आश्रमा ब्रह्मचर्यादयः जातयः देवमनुष्यत्वादयस्ताभिरहङ्कारनिमित्तभूताभिर्यस्य देहेऽहंभावो गर्वो न सज्जते स वै हरेः प्रियो भवति ॥ ५१ ॥ न यस्येति ॥ वित्तेषु स्वकीयं परकीयमिति बहुवचनं दारापत्यादिसङ्ग्रहार्थम् । आत्मनि देहे स्वः पर इति वा भिदा भेददर्शनं यस्य नास्ति तथा सर्वभूतेषु समः एकात्मदर्शी शान्तः रागादिरहितः यः स वै भागवतोत्तमः ॥ ५२ ॥ ...त्यस्योत्तरमाह—त्रिभुवनेति ॥ अजिते हरौ आत्मा येषां ते । यद्वा । न जितः आत्मा यैः ते अवशीकृतचित्ता सुरादयस्तैरपि विमृग्यात् तत्कृपां विना द्रष्टुमप्यशक्यात् भगवत्पदारविन्दात् यः त्रिभुवनविभवहेतवेऽपि त्रैलोक्यराज्यं प्रयच्छामि लवनिमिषार्द्धं भजनं त्यजेत्युक्ते तत्प्राप्त्यर्थमपि लवार्द्धमपि निमिषार्द्धमपि न चलति सः

न कामकर्मबीजानां यस्य चेतसि संभवः ॥ वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥ न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ॥ सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥ ५१ ॥ न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ॥ सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥ त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥ न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥ ५३ ॥ भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे ॥ हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ॥ प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥ ५५ ॥

इति श्रीभागवते महापुराणे एकादशस्कन्धे नारदवसुदेवसंवादे द्वितीयोऽध्यायः ॥ २ ॥

भगवत्पदतोऽन्यत्सारं नास्तीत्येवंरूपा अकुण्ठा अनपगता भगवत्स्मृतिर्यस्य सः वैष्णवाग्र्यः । यद्वा । त्रिभुवनविभवहेतवेऽप्यकुण्ठा प्रलोभयितुमशक्या स्मृतिर्यस्य य एव भगवत्पदारविन्दाल्लवनिमिषार्द्धमपि न चलतीत्यन्वयः । पुष्पिताग्रात्रयम् ॥ ५३ ॥ किंच विषयाभिसन्धिना चलनं कामसन्तापे सति भवेत् स च सन्तापः भक्तानां न भवेदित्याह—भगवत इति ॥ भगवतः उरवो विक्रमाः विन्यासा ययोस्तयोरङ्घ्र्योः शाखानामङ्गुलीनां ये नखास्त एव मणयः मणितुल्याश्चन्द्रस्थानीयास्तेषां चन्द्रिका शीतला दीप्तिस्तया निरस्तः कामादितापो यस्मिंस्तस्मिन् उपसीदतां भजतां हृदि सन्तापः कथं पुनः प्रभवति उद्भवति । अनुद्भवे दृष्टान्तमाह । चन्द्र इवेति । यथा रात्रौ चन्द्रे उदिते सति सूर्यतापो नोद्भवति तथेत्यर्थः ॥ ५४ ॥ विसृजति इति ॥ अवशेन ज्वरपतनमरणाद्यवस्थायां वैवश्यमापन्नेनाप्यभिहितमात्रोऽपि तस्याघौघं पापसमूहं नाशयतीति तथा भक्तस्तु निरन्तरमेव नामसङ्कीर्तनं करोतीति तस्य प्रणयः प्रेमैव रशना रज्जुस्तया धृतं हृदये निबद्धमङ्घ्रिपद्मं यस्य सः साक्षाद्धरिः स्वयमेव यस्य हृदयं न विसृजति न मुञ्चति स भागव-

तेषु प्रधानो मुख्यः उक्तः । इदं च सर्वलक्षणसारम् । यद् ब्रूते इत्यस्योत्तरं हरिनामानीति ज्ञेयम् । अन्यप्रश्नानामुत्तराण्युक्तानि ॥ ५५ ॥ इति श्रीकृष्णसेनार्थमन्वितार्थप्रकाशिकाम् ॥ द्वितीय एकादशस्य व्यधादङ्गसहायकः ॥ २ ॥ तृतीये मायातरणब्रह्मकर्मनिरूपणम् ॥ आर्षभैर्मुनिभिस्तत्र श्लोकाःसार्द्धाः शरेषवः ॥ उवाचार्षक्रमर्द्धाभ्यां षष्टिविद्यांदनुष्टुभाम् ॥ ३ ॥ विष्णोर्मायामिदं पश्यन्नित्युक्तमतो मायां पृच्छति–परस्येति ॥ मायिनां ब्रह्मादीनामपि मोहिनीं परस्येशस्य विष्णोर्मायां वयं वेदितुमिच्छामः । अतो नोऽस्मभ्यं भगवन्तः भवन्तः ब्रुवन्तु । भगवन्त इति सम्बुद्धिर्वा ॥ १ ॥ नेति ॥ संसारतापैर्निष्टप्तः तेषां संसारतापानां भेषजम् । औषधवन्निवर्तकं युष्मद्वचः जुषन् सेवमानः शृण्वन्नहम् । शता आर्षः । नानुतृप्ये तृप्तो न भवामि । तङार्षः ॥ २ ॥ मायायाः स्वरूपतो निरूपणासम्भवात्सृष्ट्यादिकार्यद्वारेण निरूपयितुमाह–एभिरिति ॥ हे महाभुज आद्यः पुरुषः यया शक्त्या भूतानामात्मा कारणभूतः स्वेषां स्वांशभूतानां जीवानां मीयन्त इति मात्राः शब्दादिविषयास्तेषां प्रसिद्धये भोगाय तथा आत्मप्रसिद्धये मोक्षाय चेत्यर्थः । एभिः ख्यातैः महाभूतैः उच्चावचानि उत्कृष्टान्यपकृष्टानि च भूतानि देवमनुष्यतिर्यगादिशरीराणि ससर्ज । एषा माया भगवत इति चरमश्लोकादस्य प्रतिश्लोकं

राजोवाच ॥ परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ॥ मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥ नानुतृप्ये जुषन्युष्मद्वचो हरिकथामृतम् ॥ संसारतापनिष्टप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥ अन्तरिक्ष उवाच ॥ एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥ ३ ॥ एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः ॥ एकधा दशधात्मानं विभजञ्जुषते गुणान् ॥ ४ ॥ गुणैर्गुणान्स भुञ्जान आत्मप्रद्योतितैः प्रभुः ॥ मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥ ५ ॥ कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् ॥ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरत् ॥ ६ ॥ इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान् ॥ आभूतसम्प्लवात्सर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥

सम्बन्धः ॥ ३ ॥ एवमिति ॥ एवं जीवस्योपकारार्थं पञ्चभिर्धातुभिर्महाभूतैः सृष्टानि देवादिशरीराणि प्रत्यगात्मतया प्रविष्टो भगवान् अन्तःकरणाभिमानितयैकधा ज्ञानकर्मेन्द्रियाभिमानितया च दशधात्मानं विभजन् गुणान् शब्दादिविषयान् जुषते जोषयति । यद्वा । तमात्मानं प्रति गुणान् विभजन् जुषते प्रीयते भुङ्क्ते इति वा ॥४॥ गुणैरिति ॥ ततश्च स प्रभुः देहाभिमानी जीवः आत्मनान्तर्यामिणा प्रद्योतितैश्चेतनीकृतैर्गुणैरिन्द्रियैर्गुणान् विषयान् भुञ्जानः सृष्टम् इदं देहमात्मानं मन्यमानः अत इह देहादौ सज्जते प्रसक्तो भवति ॥ ५ ॥ कर्माणीति ॥ ततश्च देहभृतम् देहाभिमानी जीवः पुनश्च भोगसिद्ध्यर्थं कर्मभिः कर्मेन्द्रियैः सनिमित्तानि उत्तरदेहहेतुवासनासहितानि कर्माणि कुर्वन् सुखेतरं सुखं च इतरत् दुःखं चेति सुखेतरं सुखदुःखात्मकं तत्तत् पूर्वकर्मणां फलम् । अदन्भाव आर्षः । गृह्णन्ननुभवन्निह संसारे भ्रमति ॥ ६ ॥ इत्थमिति ॥ इत्थं बहूनि अभद्राणि दुःखानि वहन्ति प्रापयन्तीति तथाभूताः कर्मणां फलभूताः गतीः देवमनुष्यतिर्यगादियोनीः गच्छन् अवशः कर्मपरवशः पुमान् जीवः आभूतसम्प्लवात् महाभूत-

प्रलयपर्यन्त सर्गप्रलयौ जन्ममरणे तत्परम्परामश्नुते प्राप्नोति ॥ ७ ॥ सृष्टिमुक्त्वा प्रलयमाह—धातूपप्लवेति ॥ धातूनां पञ्चमहाभूतानामुपप्लवे विनाशहेतौ प्रलयकाले आसन्ने प्राप्ते सति अनादिनिधनः जन्मविनाशशून्यः कालः द्रव्यगुणात्मकं द्रव्यं स्थूलं पृथ्व्यादिगुणः सूक्ष्मं शब्दादि तदात्मकं व्यक्तं प्रपञ्चमव्यक्ताय अव्यक्तं प्रकृतिस्तं प्रति नेतु मपकर्षति ॥ ८ ॥ शतेति ॥ तदा हि भुवि उल्बणा दुःसहा भयङ्करी शतवर्षपर्यन्ताऽनावृष्टिर्भविष्यति तेन कालेनोपचितमुष्णमुष्णत्वं यस्य स चासावर्कश्च स त्रीन् लोकान् प्रतपिष्यति । इत्यर्थः ॥ ९ ॥ पातालेति ॥ सङ्कर्षणमुखादुद्भूतोऽनलः ऊर्ध्वशिखः ऊर्ध्वज्वालः वायुना सहकारिणा ईरितः प्रेरितः पातालतलमारभ्य विष्वक् सर्वतो दिशं दहन् वर्द्धते ॥ १० ॥ सांवर्तक इति ॥ दाहानन्तरं च सांवर्त्तकः प्रलयकर्ता मेघगणो हस्तिहस्ताभिः गजशुण्डाप्रमाणस्थूलाभिर्धाराभिः शतं समाः शतवर्षपर्यन्तं वर्षति ततश्च विराट् ब्रह्माण्डं सलिले लीयते स्मेति निश्चयार्थे ॥ ११ ॥ तत इति ॥ हे नृप ततो ब्रह्माण्डात्मकोपाधिलयात्तदुत्सृज्य त्यक्त्वा वैराजः पुरुषः समष्टिजीवो हिरण्यगर्भाख्यः निरिन्धनः अनल इव सूक्ष्ममव्यक्तं विशते। तत्र " ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ " इति स्मृतेः। यावदधिकारमवस्थितिरधिकारिकाणामिति

धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ॥ अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥८॥ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ॥
तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ॥ ९ ॥ पातालतलमारभ्य सङ्कर्षणमुखानलः ॥ दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः
॥ १० ॥ सांवर्तको मेघगणो वर्षति स्म शतं समाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥११॥ ततो विराजमुत्सृज्य वैराजः
पुरुषो नृप ॥ अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ॥ १२ ॥ वायुना हृतगन्धा भूः सलिलत्वाय कल्पते ॥ सलिलं तद्धृतरसं ज्योति-
ष्ट्वायोपकल्पते ॥ १३ ॥ हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ॥ हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ १४ ॥

न्यायाच्च। वैराजशब्दाभिधेयस्य ब्रह्मणो ज्ञानित्वात्समाप्ताधिकारत्वाच्च स्वलोकवासिज्ञानिभिः सहाव्यक्तशब्दवाच्ये ब्रह्मणि लयात्मको मोक्ष एव अन्येषां तु जीवानामज्ञत्वेन सूक्ष्मदेहरूपोपाधिलयाभावात्सूक्ष्मशब्दवाच्यप्रकृतिलयद्वारा ब्रह्मणि लयो न मोक्ष इति बोध्यम् । परे तु ब्रह्मणोऽपि कर्मिज्ञानिभक्तत्वेन त्रैविध्यम् । आद्यस्य पुनरावृत्तिः द्वितीयस्य मुक्तिस्तृतीयस्य पार्षदत्वम् इत्याहुः ॥ १२ ॥ एवं विराजो लयमुक्त्वा तत्कारणानां महदादिपृथिव्यन्तानां प्रातिलोम्येन लयमाह—वायुनेति ॥ वायोर्हि गन्धरसहारित्वं प्रसिद्धं सांवर्त्तकेन वायुना हृतो गन्धो यस्याः सा भूः व्यावर्तकस्य गन्धस्य गतत्वात् सलिलत्वाय कल्पते सलिले लीयत इत्यर्थः । तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत् सलिलं ज्योतिष्ट्वायोपकल्पते ज्योतिषि स्वकारणे लीयत इत्यर्थः ॥ १३ ॥ हृतेति ॥ तमसो रूपतिरस्कारित्वं प्रसिद्धमेव । सांवर्त्तकेन तमसा हृतं रूपं यस्य तत् ज्योतिर्वायौ प्रलीयते अवकाशेन स्वकारणेन आकाशेन हृतः स्पर्शो यस्य स वायुस्तस्मिन्नभसि लीयते ॥ १४ ॥

कालेति सार्द्धम् ॥ शब्दस्य हि कालत एव नाशः प्रसिद्धः । कालात्मना कालरूपेणेश्वरेण हृतो गुणः शब्दो यस्य तन्नभः आत्मनि तामसाहङ्कारे लीयते । इन्द्रियाणीति ॥ हे नृप इन्द्रियादीनि वैकारिकैः सह अहङ्कारं प्रविशति । अत्रापि स्वकारण एव लयो बोध्यः । तथाहि तत्र इन्द्रियाणि बुद्धिश्च राजसाहङ्कारे प्रविशन्ति वैकारिकैः सात्विकाहङ्कारोत्पन्नैर्देवैः सह मनः सात्विकाहङ्कारे प्रविशतीति विवेकः । एवं त्रिविधैः स्वगुणैः स्वकार्यैः सहितः अहम् अहङ्कारः आत्मनि महति लीयते महांश्च प्रकृतौ सा च ब्रह्मणि लीयते ततश्च पुनः सृष्ट्यादिसमये सृष्ट्यादीनि भवन्तीति द्रष्टव्यम् ॥ १५ ॥ एषेति ॥ एषा महत्तत्वस्यापि कारणभूता त्रिवर्णा लोहितशुक्लकृष्णवर्णा रजःसत्वतमोमयी अत एव रजआदिभिः सर्गस्थित्यन्तकारिणी भगवतः शक्तिरूपा माया प्रकृतिप्रधानाऽव्यक्तादिनामान्तरवती अस्माभिस्तुभ्यं वर्णिता तत्कार्यनिरूपणेन निरूपिता भूयः किं श्रोतुमिच्छसि ॥ १६ ॥ यथेति ॥ हे महर्षे अकृतात्मभिः अवशीकृतचित्तैः दुस्तराम् ऐश्वरीमीश्वरस्य शक्तिरूपामेतां पूर्वोक्तां मायां स्थूलधियः स्थूले देहे धीः अहंबुद्धिर्येषां ते यथा येन प्रकारेण येन साधनेनाज्ञः सुखेन तरन्ति तदिदं साधनमुच्यताम् ॥ १७ ॥ कर्माणीति ॥ दुःखहत्यै दुःखनिरासाय सुखाय सुखप्राप्तये च कर्माणि

कालात्मना हृतगुणं नभ आत्मनि लीयते ॥ इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि ॥ १५ ॥ एषा माया भगवतः सर्गस्थित्यन्तकारिणी ॥ त्रिवर्णा वर्णितास्माभिर्भूयः किं श्रोतुमिच्छसि ॥१६॥ राजोवाच ॥ यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ॥ तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १७ ॥ प्रबुद्ध उवाच ॥ कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ॥ पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ॥ गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ॥ सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ २० ॥

आरभमाणानां मिथुनीचारिणां स्त्रिया सह मिथुनीभूय वर्तमानानां नृणां पाकविपर्यासं फलवैपरीत्यं पश्येत् । प्रत्युत तेभ्य एव कर्मभ्यो दुःखप्राप्तिं पश्येत् ॥ १८ ॥ नित्येति ॥ साधनदशायामाशावित्तव्ययादिदुःखं विद्यमानतादशायां संरक्षणवृद्ध्याद्यर्थं दुःखं विनाशे च शोकादिदुःखम् एवं नित्यमार्तिदेन दुःखप्रदेन दुर्लभेनात्यायासलभ्येन किं बहुना आत्ममृत्युना धनादिनिमित्तेन चोरशत्र्वादिभ्यो मरणस्य प्रसिद्धत्वात् एतानि सर्वाण्यपि विशेषणानि गृहादिष्वपि द्रष्टव्यानि । तथा कर्मसाधितैश्चलैरिति विशेषणद्वयं वित्तेऽपि द्रष्टव्यम् । तथा चैवं भूतैर्वित्तादिभिः का प्रीतिः किं सुखं स्यात् न किमपि ॥ १९ ॥ एवमिति ॥ एवं परं लोकमपि नश्वरं यतः तत् कर्मभिर्निर्मितम् । तथा तुल्येनातिशयेन ध्वंसेन च सह वर्त्तमानमित्यर्थः । तत्र तुल्ये स्पर्द्धा अतिशये असूया ध्वंसे शोकः । यथा मण्डलवर्तिनां खण्डभूमण्डलपतीनां राज्ञामैश्वर्यादिकं कर्म निर्मितत्वान्नश्वरं स तुल्यातिशयध्वंसतया स्पर्द्धादियुक्तं च तथेत्यर्थः । अतः तदपि दुःखदमेव विद्यात् ॥ २० ॥

तस्मादिति ॥ तस्मात् उत्तमं श्रेयो जिज्ञासुः सन् शाब्दे ब्रह्मणि वेदे तत्तात्पर्यज्ञापके मीमांसास्मृतिपुराणादौ च न्यायतो निष्णातं ज्ञाततत्वम् । अन्यथा संशयनिरासो न स्यात् । परे ब्रह्मणि च अपरो क्षानुभवेन निष्णातं ज्ञाततत्वम् । अन्यथा बोधसंचारो न स्यात् । उपशमाश्रयं रागादिरहितमिति ब्रह्मनिष्णातत्वलिङ्गम् । ईदृशं गुरुमेव प्रपद्येत शरणं गच्छेत् ॥ २१ ॥ तत्रेति ॥ तत्र गुरोः सन्निधौ गुरुरेव आत्मा आत्मवत्प्रियः दैवतं दैवतवदादरविषयश्च यस्य स तथाभूतः सन् . अमायया निष्कपटया अनुवृत्त्या गुरुसेवया भागवतान् धर्मान् शिक्षेत् । तङ्भाव आर्षः । यैर्धर्मैः सर्वात्मा बलिप्रभृतीनामात्मदश्च हरिस्तुष्येत् ॥ २२॥ भागवतान् धर्मानाह—सर्वत इति॥आदौ तावत् सर्वतः सर्वत्र देहपुत्रादौ मनसः असङ्गमनासक्तिं शिक्षेत् इति सर्वत्र द्वितीयान्तेष्वनुषङ्गः। साधुषु सङ्गं शिक्षेत् तथा भूतेषु यथोचितं दयादीन् शिक्षेत् । तथाहि हीनेषु दयां समेषु मैत्रीमुत्तमेषु प्रश्रयं विनयं च अद्धा साक्षात् निष्कपटं शिक्षेत् ॥ २३ ॥ शौचमिति ॥ शौचं बाह्यं देहस्य मृज्जलादिभिः । अभ्यन्तरं मनसः अदम्भादिभिः । तपः स्वधर्मानुष्ठानम् । तितिक्षा सहनम् । मौनं वृथालापत्यागः । स्वाध्यायः यथाधिकारं वेदपाठादि । आर्जवं वाङ्मनसयोरवक्रताम् । ब्रह्मचर्यं स्वदारनियमादि । अहिंसाम् अद्रोहम् ।

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ॥ शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥ तत्र भागवतान् धर्माञ्छिक्षेद्गुर्वात्मदैवतः ॥ अमाययाऽनुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥ २२ ॥ सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ॥ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २४ ॥ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ॥ विविक्तचीरवसनं सन्तोषो येन केनचित् ॥२५॥ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ॥ मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥ २६ ॥ श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २७ ॥

द्वन्द्वसंज्ञयोः सुखदुःखयोर्मानापमानयोश्च समत्वं हर्षशोकादिविकाररराहित्यं शिक्षेत् ॥ २४ ॥ सर्वत्रेति ॥ सर्वत्र स्थावरजङ्गमेषु सच्चिद्रूपेण आत्मेक्षां नियन्तृरूपेण ईश्वरान्वीक्षां कैवल्यमेकान्तचारित्वम् अनिकेततां गृहाद्यभिमानराहित्यं विविक्तानां शुद्धानां चीराणां वस्त्रखण्डानां वसनं परिधानं येन केनचित् प्रारब्धप्राप्तेनान्नादिना संतोषं शिक्षेत् ॥ २५ ॥ श्रद्धामिति ॥ भागवते भगवत्प्रतिपादके शास्त्रे श्रद्धाम् आदरातिशयम् अन्यत्र देवतान्तरप्रतिपादके शास्त्रे या अनिन्दा ताम् । मनआदीनां दण्डदमनं शिक्षेत् तानाह । सत्यं वाचः शमः मनसः दमः कर्मणो दण्डनम् । यद्वा । मनसः प्राणायामैः वाचो मौनेन कर्मणोऽनीहया दण्डनं सत्यं यथार्थभाषणम् । शमदमा अन्तःकरणबाह्येन्द्रियनिग्रहौ ॥ २६ ॥ श्रवणमिति ॥ अद्भुतकर्मणो हरेः जन्मनामवताराणां कर्मणां लीलानां गुणानां भक्तवात्सल्यादीनां च श्रवणं कीर्त्तनं च तस्य ध्यानं च किं बहुना तदर्थे भगवदाराधनार्थमेव अखिलानां कायवाङ्मनसां चेष्टितं व्यापारं शिक्षेदित्यर्थः ॥ २७ ॥

इष्टमित्यादौ द्वितीया आर्षी । निवेदनमिति कृद्योगे षष्ठीप्राप्तेः । तथा च इष्टादीनां यत्परस्मै भगवते निवेदनं समर्पणं तच्छिक्षेदित्यन्वयः । यद्वा । इष्टादिनाऽलक्ष्येत्यध्याहारः । यद्वा । यत् इष्टादिकं तस्य परस्मै हरये निवेदनं तच्च दारादीन् यत् व्याप्नुवत् । इणः शत्रन्तस्य रूपम् । इष्टमित्यादौ भावे निष्ठा । इष्टं वैदिकं यज्ञादि दत्तं स्मार्त्तं दानादि तपः एकादश्युपवासादि जप्तं मन्त्रजपादि । इडभाव आर्षः । वृत्तं सदाचारः कर्ममात्रं वा यच्चात्मनः स्वस्य प्रियं धनधामस्रक्चन्दनवस्त्राभरणादि दारादींश्च प्राणान् देहेन्द्रियान्तःकरणादीन् निवेदनं नाम तदीयत्वबुद्ध्या तदाराधनपरतया स्थापनम् । न पुनस्तत्राहन्ताममता कार्या ॥ २८ ॥ एवमिति ॥ एवं तथा कृष्ण एवात्मनाथः स्वामी येषां कृष्ण एवात्मनो जीवस्य नाथो येषामिति वा तेषु मनुष्येषु सौहृदं स्नेहातिशयम् । उभयत्र स्थावरे जङ्गमे च भगवति तद्भक्तेषु चेति वा । परिचर्यां पूजां च शिक्षेत् विशेषतश्च महत्सु भगवद्भक्तेषु साधुषु परकार्यसाधकेषु च नृषु परिचर्याम् शिक्षेत् । यद्वा । विशेषतो नृषु तत्रापि साधुषु स्वधर्मशीलेषु तत्रापि महत्सु भागवतेषु ॥ २९ ॥ परस्परेति ॥ पावनं यद्भगवद्यशस्तस्य भगवद्भक्तैः सह परस्परमनुकथनं शिक्षेत् । तेन च या मिथः रतिः प्रीतिः मिथस्तुष्टिः सन्तोषः मिथ आत्मनोऽहङ्कारस्य निवृत्तिः भवति तां च शिक्षेत् निर्वृति-

इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् ॥ २८ ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ॥ परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ २९ ॥ परस्परानुकथनं पावनं भगवद्यशः ॥ मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३० ॥ स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ॥ भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३१ ॥ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ॥ गायन्ति नृत्यन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३२ ॥ इति भागवतान्धर्मांञ्छिक्षन् भक्त्या तदुत्थया ॥ नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३३ ॥

रिति पाठे मिथ आत्मनः सौख्यं प्रेम वा ॥ ३० ॥ स्मरन्त इति ॥ एवं श्रवणादिसाधनभक्त्या सञ्जातया प्रेमलक्षणया भक्त्या अघौघहरं भक्तानामविद्यादिसर्वदोषहरं हरिं स्वयं स्मरन्तः मिथः स्मारयन्तश्चोत्पुलकां रोमोद्गमयुक्तां तनुं बिभ्रतीत्यन्वयः ॥ ३१ ॥ क्वचिदिति ॥ ततश्च देहाद्यध्यासनिवृत्त्या अलौकिकाः लौकिकजनविलक्षणाः सन्तः अच्युतचिन्तया भगवद्दर्शनं विना धिग्जीवितेनेति बुद्ध्या क्वचित् कदाचिद्रुदन्ति । भगवतश्चौर्यादिलीलां स्मृत्वा क्वचिद्धसन्ति क्वचिद्भक्ताधीनतां स्मृत्वा तत्प्राप्तिं संभाव्य नन्दन्ति । अतो हे हरे दीनवत्सल प्रसीदेत्यादि वदन्ति च । क्वचित्तस्य रासादिलीलामनुस्मृत्य स्वयमपि नृत्यन्ति गायन्ति च । क्वचिच्च अजं भगवन्तमनुशीलयन्ति तत्स्वरूपस्वभावादिकं विचिन्तयन्ति । क्वचिच्च परं परमपुरुषमेत्य प्राप्य निर्वृताः परमानन्दनिमग्नाः सन्तस्तूष्णीं भवन्ति ॥ ३२ ॥ इतीति ॥ इत्येवंविधान् भागवतान् धर्मान् शिक्षन् अभ्यसन् । शता आर्षः । नारायणपरः भगवदाराधननिष्ठः पुमान् तदुत्थया भगवद्धर्मानुष्ठानजन्यया भक्त्या परमप्रेमात्मिकया दुस्तरामपि मायामञ्जः सुखेनैव तरति ॥ ३३ ॥

नारायणेति ॥ नारायण इत्यभिधानं यस्य तस्य परमात्मनो ब्रह्मणः निष्ठां स्वरूपं नोऽस्मभ्यं यूयं वक्तुमर्हथ । हि यस्मात् यूयं ब्रह्मवित्तमाः ब्रह्मविदामतिश्रेष्ठाः ब्रह्मैव हि नारायणपरमात्मादिशब्दैः कथ्यते अतस्तन्निष्ठां वक्तुमर्हथेति । स्वामिपादास्तु ब्रह्मैव तावन्नारायण इति भगवानिति परमात्मा इति चोच्यते । तत्र किमेभिः शब्दैर्निर्विशेषं तदेव वस्तूच्यते अस्ति वा कोऽपि विशेषांशः इति व्याचक्षते ॥ ३४ ॥ स्थितीति ॥ हे नरेन्द्र यद्वस्तु अस्य जगतः स्थित्युद्भवप्रलयहेतुः स्वयं तु अहेतुः कारणरहितः यत् स्वप्नजागरसुषुप्तिषु सत् वर्तमानं देहाः इन्द्रियाणि असवः प्राणाः हृदयमन्तःकरणमेतानि येन संजीवितानि चेतनीकृतानि चरन्ति स्वस्वव्यापारे प्रवर्त्तन्ते तत्त्वं परं सत्यं नारायणादिशब्दवाच्यम् अवेहि जानीहि इति । स्वामिपादास्तु यः अस्य विश्वस्य स्थित्यादीनां हेतुः स्वयं तु अहेतुः स नारायण इति परमेव तत्वमवेहि । यत् स्वप्नादौ सत् अनुवर्त्तमानं बहिश्च समाध्यादौ सत् तद्ब्रह्मेति परमेव तत्वमवेहि । देहेन्द्रियादीनि येन जीवितानि सन्ति चरन्ति प्रवर्त्तन्ते तत्परमात्मेति परमेव तत्वमवेहि । एवं लक्षणभेदैर्नारायणादिनामभिरुच्यमानमपि परमेकमेव तत्वं जानीहि इत्याहुः ॥ ३५ ॥ अवेहीति प्राप्तं विषयत्वं वारयति—नैतदिति ॥ एतत् ब्रह्माख्यं परं तत्वं कर्मभूतं मनो न विशति न विषयीकरोति अत एव वागपि निरूपयितुं न शक्नोति। उतेत्यप्यर्थे। चक्षुश्च द्रष्टुं न शक्नोति।

राजोवाच ॥ नारायणाभिधानस्य ब्रह्मणः परमात्मनः ॥ निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥३४॥ पिप्पलायन उवाच ॥ स्थित्युद्भवप्रलय-हेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ॥ देहेन्द्रियासुहृदयानि चरन्ति येन संजीवितानि तदवेहि परं नरेन्द्र ॥३५॥ नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः ॥ शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥ ३६ ॥

आत्मा जीवोऽपि ज्ञातुं न शक्नोति। प्राणश्च क्रियाशक्त्या प्राप्तुं न शक्नोति। अन्यानि च घ्राणत्वक्श्रोत्ररसनाख्यानि ज्ञानेन्द्रियाणि ज्ञातुं हस्तपादादीनि कर्मेन्द्रियाणि च प्राप्तुं न शक्नुवन्ति। चकारान्मनआद्यधिष्ठातॄणां देवानां संग्रहः। यथा स्वाः स्वांशभूताः अप्यर्चिषो विस्फुलिङ्गादयोऽन्यत्प्रकाशयन्तोऽप्यनलं न प्रकाशयन्ति न दहन्ति च। चकारात् मनआदिवृत्तयोऽप्यात्मन्यभिव्यज्यमानात्मांशेन सर्वं बहिर्वस्तु विषयीकुर्वत्योऽपि तं न विषयीकुर्वन्तीत्यर्थः। ननु तर्हि श्रुतौ ब्रह्मणः औपनिषदत्वव्यवहारः कथमित्याशङ्क्याह। शब्दोऽपीति। वेदात्मकशब्दोऽप्यात्ममूलमात्मनि ब्रह्मणि मूलं प्रमाणं सत् " यतो वाचो निवर्तन्ते " इत्यादेः स्वस्यैव बोधकनिषेधरूपतया अर्थोक्तमर्थात् तात्पर्यादुक्तं यथा भवति तथाऽऽह तात्पर्यमात्रेण तन्निरूपयति न साक्षात्। यद्वा। शब्दोऽपि आत्मनः स्वस्य मूलं ब्रह्म बोधकनिषेधतया आह। यस्य बोधकं किमपि नास्ति तद्ब्रह्म इति एवंरीत्यैवार्थादुक्तमर्थत एवोक्तम्। ननु इदं तदिति निर्देशेनाह इत्यर्थः। ननु तर्हि नैवाह श्रुतिः किमिदमुच्यते अर्थोक्तमाहेति तत्राह। यदृत इति। यत् अवधिभूतं ब्रह्म ऋते विना " यतो वाचो निवर्त्तन्ते " इत्यादिनिषेधस्यैव सिद्धिर्न भवेत् सर्वस्यैव निषेधस्य सावधिकत्वनियमस्य प्रसिद्धत्वादित्यर्थः। अतः स्वोक्तस्य निषेधस्याव-

विभूतं ब्रह्म तात्पर्यद्वारा श्रुतिर्बोधयति न साक्षात् ॥ ३६ ॥ तर्हि प्रमाणाविषयत्वान्नास्ति ब्रह्मेति प्रसक्तं तत्राह—सत्त्वमिति ॥ आदौ एकं सत्त्वं रजस्तम इति त्रिवृत् गुणत्रयात्मकं प्रधानं प्रवदन्ति ततः क्रियाशक्त्या जातं सूत्रं ज्ञानशक्त्या च महानिति तदेव प्रवदन्ति ततो जातमहम् इति जीवं जीवोपाधिभूतमहङ्कारं च तदेव प्रवदन्ति । ततश्च ज्ञानक्रियार्थफलरूपतयेति ज्ञानशब्देन इन्द्रियाधिष्ठातारो देवा मनश्च क्रियाः इन्द्रियाणि अर्थाः पृथ्व्यादिपञ्चमहाभूतानि फलं च सुखदुःखात्मकं तद्रूपतया तथा सदसत्कार्यकारणात्मकं यच्च तयोः सदसतोरपि परं कारणं तत्सर्वं तत्तदात्मकतया उरुशक्ति अचिन्त्यानन्तशक्तिकं ब्रह्मैव भाति । अतः सर्वस्वरूपेण भासमानस्य ब्रह्मणः स्वसिद्धौ नास्ति प्रमाणापेक्षेति ॥ ३७ ॥ नन्वेवं ब्रह्मण एव सर्वात्मकत्वे ब्रह्मणो विकारित्वापत्तिरित्याशङ्क्य मणिमन्त्रयोगिकामधेनुकल्पवृक्षादिभ्यो बहवः पदार्था जायन्ते परंतु नहि तद्विकारेण तेऽपि विकृता भवन्ति तद्वदत्रापीत्याह—नेति ॥ असौ आत्मा ब्रह्म न जजान न जातः । "जन जनने" वैदिको धातुः । न च मरिष्यति न चैधते नापि क्षीयते । अस्तिताविपरिणामाख्यौ विकारावुपलक्षणीयौ । हि यस्मात् व्यभिचारिणामागमापायिनां बाल्ययुवादिस्वप्नजागराद्यवस्थानां च सवनवित् तत्तत्कालसाक्षी न ह्यवस्थावतां साक्षी तदवस्थो भवति । तथा तद्ब्रह्म सर्वत्र देशे शश्वत् सर्वदा अनपायि क्षयरहितम् उपलब्धिमात्रं ज्ञानैकरूपम् । व्यभिचारिष्ववस्थितस्या-

**सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥३७॥ नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि ॥ सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥३८॥ अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ॥ सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥३९॥**

प्यभिचारे दृष्टान्तः । प्राणो यथा पक्षिमनुष्यादिशरीरेषु अनुवर्त्तते तथा । ननु नीलं ज्ञानं जातं पीतं नष्टम् इति ज्ञानस्यापि नाशवत्त्वं प्रसिद्धम् इत्याशङ्क्याह । इन्द्रियेति । सदेव ब्रह्मरूपमेव ज्ञानमिन्द्रियबलेन विविधं कल्पितं नीलाद्याकारा वृत्तय एव जायन्ते नश्यन्ति च न तत्र प्रतिफलितं रूपज्ञानमित्याशयः ॥ ३८ ॥ दृष्टान्तं विवृण्वन् सुषुप्ताविन्द्रियादिलयेन निर्विकारात्मोपलब्धिं दर्शयति—अण्डेष्विति ॥ अण्डजेषु पेशिषु जरायुजेषु तरुषु उद्भिज्जेषु अविनिश्चितेषु स्वेदजेषु च तत्र तत्र सर्वत्र प्राणो हि यथा जीवमुपधावति अविकृत एवानुवर्तते तथैवात्माऽपि सर्वदा निर्विकार एव सविकारप्रतीतिस्तु यदा जागरे इन्द्रियगणः यदा च स्वप्ने तत्संस्कारवानहङ्कारः तदैव इन्द्रियाद्यध्यासेन स्यात् । यत् यस्मात् सुषुप्त्यवस्थायामिन्द्रियगणे सन्ने लीने अहमि अहङ्कारे च प्रसुप्ते लीने सति आशयमृते विकारहेतुलिङ्गशरीररूपोपाधिं विना विकारहेतोरुपाधेरभावादित्यर्थः । कूटस्थो निर्विकार एवावतिष्ठते । नन्वहङ्कारपर्यन्तानां लये शून्यमेवावशिष्यते तत्कथं तत्र कूटस्थोऽवशिष्यते तत्राह । तदिति । तस्य सुषुप्तिसाक्षिणो निर्विकारस्य सुखरूपस्यात्मनो नोऽस्माकमेतावन्तं कालं सुखमहमस्वाप्सं न किंचिदवेदिषमिति स्मृतिर्भवति । अनुभूतस्य स्मरणायोगात्सुषुप्तावात्मानुभवोऽस्त्येव । विषयसंबन्धाभावात् न

स्पष्टः ॥ ३९ ॥ ननु यदि सुषुप्तौ कूटस्थानुभवः स्यात्तदा कथं पुनरपि संसारः स्यात् अविद्यातत्संस्काराणां विद्यमानत्वादिति चेत्कदा तर्हि तन्निवर्त्तकोऽनुभवो भवेत्तत्राह— यर्हीति ॥ वित्तैषणादि विहाय केवलमब्जनाभस्य भगवतश्चरणैषणया जाता या उरुः महती परमप्रेमलक्षणा भक्तिः तया गुणाः सत्वादयस्तत्प्रयुक्तानि यानि कर्माणि विहित-निषिद्धात्मकानि ततो जातानि यानि चेतसो मलानि पुण्यपापरागलोभादीनि भक्तः विधमेत् नाशयेत् । यद्वा । चेतः कर्तृ । तानि स्वगतानि मलानि यदि विधमेत् क्षालये-त्तदा तस्मिन् चेतसि विशुद्धे सति साक्षादव्यवधानेनात्मतत्वमुपलभ्यते । यथेति । अमलयोर्दृशोरेव यथा पूर्वमेव सिद्धोऽपि सवितृप्रकाश उपलभ्यते न त्वन्धस्य तथा सदा प्रकाशमानोऽप्यात्मा शुद्धचित्तस्यैवोपलभ्यते न तु विषयवासनाकलुषितचित्तस्येत्यर्थः ॥ ४० ॥ कर्मयोगमिति ॥ येनानुष्ठितेन कर्मयोगेन पुमानिहैव जन्मनि आशु शीघ्रमेव कर्माणि मोक्षप्रतिबन्धकभूतानि पापानि विधूय निरस्य संस्कृतः मोक्षोपयोगी सुकृतवान् सन् नैष्कर्म्यं कर्मनिवृत्तिसाध्यज्ञानं विदन्ते तं कर्मयोगं नोऽस्मभ्यं यूयं वदत ॥४१॥ एवमिति ॥ यथेदानीं युष्मान्प्रति पृच्छामि एवं तथैव पितुः इक्ष्वाकोरन्तिके स्थितान् ऋषीन् सनत्कुमारादीन् प्रत्यर्पीममेव प्रश्नं प्रष्टव्यमर्थं पूर्वमपृच्छम् अहं पृष्टवान् । ब्रह्मणः

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः ॥ ४० ॥ राजोवाच ॥ कर्मयोगं वदत नः पुरुषो येन संस्कृतः ॥ विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४१ ॥ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरन्तिके ॥ नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४२ ॥ आविर्होत्र उवाच ॥ कर्माकर्मविकर्मेति वेदवादो न लौकिकः ॥ वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥ ४३ ॥ परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४४ ॥

पुत्राः सर्वज्ञा अपि ते तदुत्तरं नाब्रुवन् कर्मयोगं न निरूपयामासुस्तत्रानुक्तौ युष्माभिः कारणमुच्यतामिति ॥ ४२ ॥ गहनत्वद्योतनाय प्रथमं द्वितीयप्रश्नस्योत्तरमाह—कर्मेति॥ कर्म विहितम् अकर्म विहिताकरणं विकर्म निषिद्धाचरणम् इति त्रिविधोऽपि वेदवादः वेदप्रतिपादितो व्यवहारः न लौकिकः । वेदस्य चेश्वरात्मत्वात् ईश्वरादुद्भूतत्वात् अपौरुषेयत्वादित्यर्थः । तत्र वेदोक्तितात्पर्ये सूरयो विवेकिनोऽपि मुह्यन्ति । किमुतान्ये । पौरुषेयवाक्ये हि वक्तुरभिप्रायतोऽर्थज्ञानं शक्यमपौरुषेये तु केवलं वाक्यपौर्वा-पर्येणैव तात्पर्यावधारणं तच्च दुष्करम् । अतस्तदा तव बालत्वान्नाब्रुवन्नित्याशयः ॥४३॥ परोक्षवाद इति ॥ अयं वेदः परोक्षवादः यत्रान्यथा स्थितोऽर्थः संगोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः । तथा च श्रुतिः "तं वा एतं चतुर्होतं सन्तं चतुर्होतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः " इति । भगवताप्युक्तम् । "परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ।" इति । परोक्षवादत्वमेवाह । कर्ममोक्षायेति । कर्मणां मोक्षप्रतिबन्धकभूतानां पुण्यपापात्मकानां मोक्षाय निवृत्त्यर्थमेव वेदः बालानामनुशासनं प्रलोभनं यथा भवति तथा कार्माणि विधत्ते । अगदं यथा यथा हि पिता बालान् अगदमौषधं पाययन् यद्येतत्पिबसि तदा ते लड्डुकादिकं दास्यामीति प्रलोभ्य पाययति लड्डुकादिकं ददाति

चान्यथा पुनस्तत्पाने प्रवृत्ता न स्युः । परं तु न लड्डुकादिलाभः औषधपानस्य फलं किन्तु रोगनिवृत्तिरेव । तथा वेदोऽप्यवान्तरस्वर्गादिफलैः प्रलोभयन्कर्माणि कारयति तत्तत्फलमपि ददाति परंतु न तन्मात्रलाभ एव परमपुरुषार्थः किंतु संसारदुःखनिवृत्तिपूर्वकपरमानन्दात्मकभगवत्प्राप्तिरेवेत्यर्थः ॥ ४४ ॥ ननु कर्ममोक्षश्चेत्पुरुषार्थस्तर्हि पूर्वं मे कर्म त्यज्यतां तत्राह—नाचरेदिति ॥ यस्तु वेदोक्तं कर्म स्वयं नाचरेत् तदा कर्म विना क्षणमपि स्थित्यसंभवात् स्वयमज्ञः पशुरिवानियतभोजनव्यवायादिरतत्वाद् अजितेन्द्रियश्च स्यात् । ततश्च स विकर्मणा निषिद्धाचरणलक्षणेनाधर्मेण मृत्योरनन्तरमपि मृत्युमेवोपैति न विमुच्यते इत्यर्थः ॥ ४५ ॥ एवमतिदयालुर्वेदः नराणां पशूनामिव इन्द्रियारामत्वातिशयवारणायैव बालानुद्दिश्य कर्माणि फलदर्शनेन रोचयंस्तथा विधत्ते यथा कर्माणि प्रातरारभ्य कुर्वाणास्ते विकर्मण्यवसरमेव न प्राप्नुयुः । अनिषिद्धभोजनव्यवायादिषु प्रवर्त्यैव पापेभ्यो भीषयते इति वेदतात्पर्यं ज्ञात्वा स्वस्याजितेन्द्रियत्वं दुर्वारमालक्ष्य विवेकी कर्मैव कुर्यादित्याह—वेदेति ॥ अतः निःसङ्गः फलासक्तिरहितः ईश्वरे भगवत्यर्पितं यथा भवति तथा वेदोक्तमेव कर्म कुर्वाणोऽन्तःकरणविशुद्धिद्वारा नैष्कर्म्यरूपां सिद्धिं तत्वज्ञानं लभते । ननु कर्मणि कृते फलमपि भवेदेव ततश्च

नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ॥ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४५ ॥ वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ॥
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥४६॥ य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ॥ विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥४७॥
लब्धानुग्रह आचार्यात्तेन संदर्शितागमः ॥ महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः ॥ ४८ ॥ शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥ पिण्डं
विशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिम् ॥ अर्चादौ हृदये चापि यथालब्धोपचारकैः ॥ ४९ ॥

पुनर्बन्ध इति चेत्तत्राह । फलस्य श्रुतिः श्रवणं रोचनार्था कर्मणि रुच्युत्पादनार्थमेव । तथा च यथौषधपाने प्रवृत्त्यर्थमेव लड्डुकदानादि श्राव्यते तत्र बालस्याभक्त्यैव दीयते नान्यथा तत्र तात्पर्याभावादेव एवं फलासक्त्या कृतमेव कर्म फलं ददाति अकामेन तु कृतं न ददाति । अतः नैष्कर्म्यसिद्धिर्भवति ॥४६॥ य इति ॥ यः पुमान् परस्येव सत आत्मनो जीवस्य । यद्वा । देहादिभ्यः परस्यात्मनो जीवस्याशु शीघ्रमेव हृदयग्रन्थिं ग्रन्थिवद्दुर्भेदमहं ममाध्यासं निर्जिहीर्षुः निराकरणेच्छुः स पञ्चरात्रादितन्त्रोक्तेन । चकाराद्वैदिककर्मसमुच्चितेन विधिना केशवं हरिमुपचरेत् पूजयेत् ॥ ४७ ॥ लब्धेति ॥ शिष्यमुपनीय वेदाध्यापनादिकर्ता आचार्यस्तस्माल्लब्धोऽनुग्रहोऽनुग्रहपूर्वकमुपनयनमन्त्रादिर्येन तथा तेनैवाचार्येण संदर्शित आगमः आगमोक्तजपपूजादिप्रकारो यस्य सः आत्मनः स्वस्याभिमतया रामकृष्णादिमूर्त्या युक्तं महापुरुषं भगवन्तमर्चयेत् ॥ ४८ ॥ शुचिरिति सार्द्धम् ॥ स्नानादिना शुचिः मूर्तेः सम्मुखमासीनः प्राणसंयमः प्राणायामः । आदिपदेन भूतशुद्ध्यादिसंग्रहः तैः पिण्डं देहं विशोध्य संन्यासैः सद्भिर्न्यासैः केशवकीर्त्यादिन्यासैः कृता रक्षा येन तथाविधश्च सन् यथा लब्धैः देशकालाद्यानुकूल्येन लब्धैः पूजायोग्यैरुपचारकैः पूजासाधनैरर्चादौ हृदये वापि हरिमर्चयेत् ॥ ४९ ॥

पुनस्तदेव स्पष्टयति—द्रव्येति सार्द्धम् ॥ द्रव्याणि पुष्पादीनि जन्त्वादिशोधनेन क्षितिं संमार्जनलेपनादिना आत्मनः स्वस्य लिङ्गं देहं स्नानशौचादिना । यद्वा । आत्मानमध्यर्ग्त्वादिना लिङ्गं मूर्त्तिमनुपलेपक्षालनादिना एतानि निष्पाद्य पूजायोग्यानि कृत्वा पाद्यादीनि तत्तत्पात्रस्थान्युपकल्प्य संपाद्य आसनमुपवेशनस्थानं च जलेन प्रोक्ष्य अथानन्तरं तत्रासने उपविष्टः समाहितः एकाग्रचित्तः सन्नर्चादौ भगवन्तं सान्निधाप्य हृदि ध्यानपूर्वकं पूजितं श्रीमूर्त्तौ मन्त्रेणावाह्य मूलमन्त्रेण हृदादिभिर्मन्त्रैश्च हृदयशिरःशिखाकवचनेत्रास्त्रमंत्रैः मूलमंत्रेण च देवे कृतो न्यासो येन सः भगवन्तं मूलमन्त्रेण चकारात्तत्तदुपचारमन्त्रैः अर्चयेत् । मूलमन्त्रो द्वादशाक्षरः न्यासादिविधिर्गौतमीयतन्त्रादौ पर्यङ्कस्थपद्धतौ च ज्ञेयः ॥ ५० ॥ पुनः स्पष्टयन् शेषमाह—साङ्गेति युग्मम् ॥ अङ्गानि चरणादीनि उपाङ्गानि सुदर्शनादीनि तत्सहिताः पार्षदाः सुनन्दादयस्तत्सहितां च तां तां स्वाभीष्टां मूर्तिं मूलमन्त्रतः पाद्यार्घ्यादिभिः विधिवत् विध्यनुसारेण साङ्गं हरिं संपूज्य स्तवैः स्तुत्वा नमेत् । अक्षतास्तिलकालङ्कारे न तु पूजायाम् । " नाक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वरम् । " इति निषेधात् । यद्वा । अक्षताः अनुपहताः स्रजः पुष्पमालास्ताभिः उपहारो नैवेद्यम् ॥ ५१ ॥ ५२ ॥ आत्मानमिति ॥ आत्मानं तन्मयं

द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः ॥ हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥५०॥ साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ॥ पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥५१॥ गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥साङ्गं संपूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥५२॥आत्मानं तन्मयं ध्यायन्मूर्तिं संपूजयेद्धरेः ॥शेषामाधाय शिरसा स्वधाम्न्युद्वास्य सत्कृतम् ॥५३॥ एवमग्न्यर्कतोयादावतिथौ हृदये च यः ॥ यजतीश्वरमात्मानमचिरान्मुच्यते च सः ॥५४॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ राजोवाच ॥ यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ॥ चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥ १ ॥

भगवद्रूपं ध्यायन् हरेर्मूर्त्तिं सम्यक् पूजयेत् । ततश्च शेषां निर्माल्यं स्वशिरस्याधाय सत्कृतं भगवन्तं स्वधामनि स्वहृदये तन्मन्दिरे वा यथोचितमुद्वास्य स्थापयित्वा पूजाविधिं समापयेत् इति शेषः ॥ ५३ ॥ एवमिति ॥ य एवमग्न्यादिषु सर्वात्मानमीश्वरं बन्धमोचने समर्थं भगवन्तं यजति पूजयति सः अचिरात् शीघ्रमेव संसारबन्धान्मुच्यते । भगवतः पूजापद्धतिश्च एतट्टीकाशेषभागभूत श्रीमद्भागवतपर्यङ्के स्फुटीकरिष्यते ॥५४॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ तृतीय एकादशस्य व्यधाद्भङ्गसहायकः ॥ ३॥ चतुर्थेऽध्यायेऽवतारास्तत्कर्माणि च गीतवान् ॥ द्रुमिलो निमये तत्र श्लोका दे[23]हेनदष्टयः ॥ द्वे[2] उवाचेति पादाव्यार्श्च[34]तुस्त्रिंशदनुष्टुभः ॥ ४ ॥ यानि यानीति ॥ यैर्यैः स्वेषां भक्तानां स्वस्य वा छन्दः इच्छा तेन जन्मभिरतत्तदवतारैरिह लोके हरिर्यानि यानि कर्माण्यकरोत् यानि च करोति यानि च कर्त्ता करिष्यति इति कालत्रयावतारसंबन्धीनि सर्वाणि कर्माणि नोऽस्मभ्यं भवन्तो ब्रुवन्तु ॥ १ ॥

यो वा इति ॥ यो वा अनन्तस्य अनन्तान् गुणान् अनुक्रमिष्यन् साकल्येन गणयितुमिच्छन् भवति । स तु बालबुद्धिः बालानामज्ञानामिव मन्दा बुद्धिर्यस्य तथाविध एव महाकालेन कथंचित् योगादिप्रयत्नवशेन पुमान् भूमे रजांसि रेणून् गणयेदपि । संभावनायां लिङ् । अखिलशक्तिधाम्नः अचिन्त्यानन्तशक्त्याश्रयस्य भगवतो गुणांस्तु नैव कथञ्चिदपि गणयेत् । तथा च श्रुतिः "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादिः ॥ २ ॥ भूतैरिति ॥ पञ्चभिर्भूतैरिति चतुर्विंशतितत्वानामुपलक्षणम् । आत्मना स्वेनैव सृष्टैरुत्पादितैश्चतुर्विंशत्या तत्वैर्विराजं ब्रह्माण्डाख्यं पुरं स्वशरीरं विरचय्य निर्माय आदिदेवः सर्वकारणभूतः क्रीडापरो नारायणो भगवान् यदा तस्मिन् ब्रह्माण्डे स्वांशेनान्तर्यामिरूपेण प्रविष्टः न तु भोक्तृत्वेन तत्र प्रभूतपुण्यस्य जीवस्य भोक्तृत्वात् तदा पुरुषाभिधानं पुरुषाख्यामवाप ॥ ३ ॥ अस्य गुणकर्माण्याह द्वाभ्याम् यत्काय इति ॥ यस्य वै राजपुरुषस्य काये शरीरे यस्याधिष्ठेयः कायो वा एष भुवनत्रयस्य सन्निवेशः रचनाविशेषः यस्येन्द्रियैरेव तनुभृतां व्यष्टिसमष्टिजी-

द्रुमिल उवाच ॥ यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन्स तु बालबुद्धिः ॥ रजांसि भूमेर्गणयेत्कथञ्चित्कालेन नैवाखिलशक्तिधाम्नः ॥ २ ॥ भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ॥ स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥ यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ॥ ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥ आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ॥ रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरऋषिप्रवरः प्रशान्तः ॥ नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥ ६ ॥

वानामुभयविधानि ज्ञानकर्मसाधनानीन्द्रियाणिबभूवुः । यस्य स्वतः स्वरूपभूतात्सत्वात्तनुभृतां ज्ञानं यद्वा स्वत एव यस्य ज्ञानमिति सम्बन्धः । यस्य श्वसनतः प्राणात् तनुभृतां बलं देहशक्तिः ईहा चेष्टा च भवति यश्च सत्वादिभिर्गुणैः विश्वस्थितिलयोद्भवे आदिकर्त्ता स आद्यः पुरुष इति । भागवतास्तु आदिदेवो नारायणः यदा महत्स्रष्टृत्वेन पुरुषाभिधानमवाप तदा भूतैर्विराजं विरचय्य तस्मिन् स्वांशेन अन्तर्यामितया प्रविष्टोऽभूत् । यस्य महाविष्णोः काये भुवनत्रयाणामनन्तब्रह्माण्डानां संनिवेश इत्यादि व्याचख्युः ॥ ४ ॥ आदिकर्त्तेत्यनेन तत्पूर्वकं कर्त्रन्तरमपि सूचितम् । तद्दर्शयितुं गुणावतारद्वारा चराचरसृष्ट्यादिकर्तृत्वमाह—आदाविति ॥ स एवाद्यः पुरुषः अस्य जगतः सर्गे निमित्ते आदौ व्यष्टिसृष्टेः पूर्वं रजसा गुणेन शतधृतिर्ब्रह्माऽभूत् । तथा स्थितौ निमित्तभूतायां सत्वेन गुणेन क्रतुपतिः तत्फलदाता द्विजानां तद्धर्माणां च सेतुः पालकः विष्णुरभूत् । तथा अप्ययाय संहाराय तमसा गुणेन रुद्रोऽभूत् । इत्येवं तत एव सततं प्रतिकल्पं प्रजासूद्भवस्थितिलया भवन्ति ॥ ५ ॥ धर्मस्येति ॥ धर्मस्य भार्यायां दक्षस्य दुहितरि मूर्त्तिसंज्ञायां ऋषिषु प्रवरः प्रशान्तश्च

नारायणो नरश्चेति मूर्त्तिद्वयेनाजनिष्ट अवतीर्णः । स च नैष्कर्म्यमात्मस्वरूपं लक्ष्यते येन तथाभूतं कर्म कर्मनिर्हाररूपं वा नारदादिभ्य उवाच उपदिदेश लोकप्रवृत्त्यर्थं स्वयं च चचार । यश्च नारायण ऋषिवर्यैर्नारदादिभिर्निषेवितावङ्घ्री यस्य तथाभूतोऽद्याप्यास्ते ॥ ६ ॥ इन्द्र इति ॥ अयं तपसा मम धाम स्थानं स्वर्गं जिघृक्षति गृहीतुमिच्छतीत्येवमिन्द्रो विशङ्क्य तत्तपोनाशाय सगणं स्त्रीवसन्तादिगणसहितं कामं न्ययुङ्क्त प्रेषयामास । अतन्महिज्ञः न तन्महिमानं जानाति तथाभूतः सकामः अप्सरोगणवसन्तसुमन्दवातैः सह बदरीभिरुपाख्यायते कथ्यते इति बदर्युपाख्यस्तं तस्याश्रमं गत्वा स्त्रीणां प्रेक्षणानि कटाक्षा एव इषवो बाणास्तैस्तमविध्यत् तैस्तं क्षोभयितुं प्रवृत्तः ॥ ७ ॥ विज्ञायेति ॥ आदिदेवो भगवान् नारायणः शक्रकृतमक्रममपराधं विज्ञाय तस्य मोहस्मरणेन प्रहस्य गतस्मयः अहं धीर इति गर्वरहित एव एजमानान् स्वोद्योगस्य नष्टत्वाद्भयात्कम्पमानान् प्रति प्राह स्म । भो मदन भो मारुत भो देववध्वो युष्माकं न कश्चिदपराधः अतो मा भैष्ट । नोऽस्माकं बलिं कन्दमूलादिकमातिथ्यं गृह्णीत । इममाश्रममशून्यं कुरुध्वम् । आतिथ्याभावेऽयं शून्यप्रायः स्यादिति भावः ॥ ८ ॥ इत्थमिति ॥ हे नरदेव अभयं ददात्यभयदो भगवांस्तस्मिन्नित्थं ब्रुवति सति सव्रीडानि अत

इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् ॥ गत्वाप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥ विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् ॥ मा भैष्ट भो मदनमारुतदेववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥ इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ॥ नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥ त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलङ्घ्य परमं व्रजतां पदं ते ॥ नान्यस्य बर्हिषि बलीन्ददतः स्वभागान्धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥

एव नम्राणि शिरांसि येषां ते लज्जाभारेणावनतशिरस्काः देवाः कामादयः सघृणं कृपायुक्तं तं नारायणं प्रत्यूचुः । हे विभो परे अविकृते क्रोधादिरहिते स्वस्मिन्नात्मनि रमन्त इति स्वारामास्ते च ते धीरा जितेन्द्रियाश्च तेषां निकरैः समूहैरानते वन्दिते पादपद्मे यस्य तस्मिन्नित्यर्थः । त्वयि एतत् कृतापराधेष्वप्यस्मास्वनुग्रहादिकं विचित्रमाश्चर्यं न भवति ॥ ९ ॥ अस्माकमपराधाचरणं स्वभावत्वान्न चित्रमित्याहुः—त्वामिति ॥ स्वेषां देवानामोकः स्थानं स्वर्गं विलङ्घ्यातिक्रम्य परमं सर्वोत्तमं ते तव पदं स्थानं व्रजतां गच्छतां त्वां सेवतां सेवमानानाम् । शता आर्षः । सुरैरिन्द्रादिभिः कृता बहवोऽन्तराया अस्मदादयो विघ्ना भवन्ति । बर्हिषि यज्ञे स्वभागान् तत्तदिन्द्रादिभागभूतान् बलीन् पुरोडाशादीन् करान् इन्द्रादिभ्यः राज्ञे कर्षकस्येव ददतः प्रयच्छतः अन्यस्य त्वदाराधनविमुखस्य तु सुरकृता अन्तराया नैव भवन्ति । देवा हि यज्ञे स्वपूजकानां विघ्नन्न कुर्वन्ति भगवदाराधकानां तु तत्स्थानविलङ्घित्वात् विघ्नान् कुर्वन्ति तर्हि भक्तो विघ्नैर्भ्रश्यति नेत्याहुः । धत्त इति । यदीति निश्चये हेतौ वा । यतः त्वं सर्वसुराधी-

श्वरोऽविता रक्षकस्ततोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते विघ्नानभिभूय त्वत्पदं प्राप्नोति ॥ १० ॥ त्वद्विमुखास्तपश्चरन्तस्तु केचिदस्माकं वशे भवन्ति । केचित्क्रोधस्य तत्राद्याः कामोपभोगमपि लभन्ते क्रोधवशास्त्वतिमन्दा इत्याहुः—क्षुदिति ॥ केचिन्मूर्खाः क्षुद् बुभुक्षा तृट् पिपासा त्रिकालगुणाः शीतोष्णवर्षाणि मारुतः प्राणो बाह्यो वायुश्च जैह्वाः जिह्वोपभोग्याः शैश्नाः शिश्नोपभोगाः जैह्वशैश्नयोर्यकारवन्तं पाठमार्षं मन्ये । तानेतानस्मान् अपारजलधीन् तद्वदतिदुस्तरान् अतितीर्य विलङ्घ्य अस्मद्दशवर्तिनः अभूत्वापि विफलस्य निष्फलस्य क्रोधस्य वशं यान्ति अतः समुद्रं तीर्त्वा गोष्पदे गोखुरखातगर्ते निमज्जन्ति ततश्च यथा जले मज्जन्तो विवशाः स्वमस्तकारोपितं भारमुत्सृजन्ति तथा पूर्वं सम्पादितं दुश्चरं तपः वृथा उत्सृजन्ति न भोगाय न मोक्षायेति क्रोधवशाच्छापादिना नाशयन्ति ॥ ११ ॥ इतीति ॥ तेषां कामादीनाम् इत्येवं प्रगृणतां स्तुवतां सतां विभुः भगवान् तेषां स्वलावण्यादिप्रयुक्तगर्वोपशमाय योगबलेन निर्मिताः अतोऽत्यद्भुतं दर्शनं स्वरूपं यासां तथाभूताः सुष्टु अर्चिताः अलङ्कृताः

क्षुत्तृट्त्रिकालगुणमारुतजैह्वशैश्नानस्मानपारजलधीनतितीर्य केचित् ॥ क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथो-
त्सृजन्ति ॥ ११ ॥ इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ॥ दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥ १२ ॥ ते देवानुचरा दृष्ट्वा
स्त्रियः श्रीरिव रूपिणीः ॥ गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥ तानाह देवदेवेशः प्रणतान्प्रहसन्निव ॥ आसामेकतमां वृङ्ग्ध्वं
सवर्णां स्वर्गभूषणाम् ॥ १४ ॥ ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ॥ उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥ इन्द्रायानम्य
सदसि शृण्वतां त्रिदिवौकसाम् ॥ ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥

स्वशुश्रूषां कुर्वतीः स्त्रियः स्त्रीर्दर्शयामास ॥ १२ ॥ ते इति ॥ ते च देवानुचराः कामादयः श्रीरिव श्रियः इव । इयङ्भाव आर्षः । रूपिणीः सुन्दररूपवतीस्ताः स्त्रियः स्त्रीर्दृष्ट्वा तासां रूपौदार्येण रूपसौन्दर्यातिशयेन हता श्रीः कान्तिर्येषां ते तासां गन्धेन पद्मकिञ्जल्कस्येव शरीरस्य सुगन्धेनैव मुमुहुः ॥ १३ ॥ तानिति ॥ देवदेवेशो नारायणः प्रहसन्निव प्रणतांस्तान् कामादीनाह स्म। आसां स्त्रीणां मध्ये एकतमां काञ्चित् सवर्णां स्वसमानरूपां स्वर्गस्य भूषणभूतां वृङ्ग्ध्वम् वृणीध्वम् । "वृजि वर्जने" इदित् अदादिः । अनेकार्थत्वाद्वरणार्थता आर्षो वा प्रयोगः ॥ १४ ॥ ओमिति ॥ सुरवन्दिनः देवभृत्याः कामादयः आदेशं भगवदाज्ञामोमित्यादाय अङ्गीकृत्य तं भगवन्तं नत्वा उर्वशीं नामाप्सरःश्रेष्ठां भगवता दत्तां पुरस्कृत्यादरेणाग्रतः कृत्वा दिवं स्वर्गं ययुः ॥ १५ ॥ इन्द्रायेति ॥ सदसि सभायां स्थितमिन्द्रं प्रणम्य त्रिदिवौकसां देवानां शृण्वतां सतां नारायणस्य बलं प्रभावमूचुः । शक्रश्च श्रुत्वा तत्रास । अहो मयाऽपराद्धमिति त्रासं प्राप विस्मितश्चाभूत् । यद्वा । तत्र सभायां विस्मित आस ॥ १६ ॥

हंसेति ॥ हंसस्येव स्वरूपमस्यास्तीति हंसस्वरूपी दत्तः दत्तात्रेयः कुमारः सनत्कुमारादिः नोऽस्माकं कव्यादीनां पिता ऋषभः जगतां शिवाय भगवानच्युतः विष्णुरेव कलया हंसादिमूर्त्या अवतीर्णः आत्मयोगम् आत्मतत्वम् अवदत् उपदिष्टवान् । तथा तेन विष्णुनैव हयास्ये श्रीहयग्रीवावतारे मधुनामानमसुरं भिनत्तीति तथाभूतेन सता श्रुतयो वेदाः तत आहृता आनीताः ॥ १७ ॥ गुप्त इति ॥ तथा मात्स्ये मत्स्यावतारे तेनैवाप्यये प्रलये मनुः सत्यव्रताख्यो गुप्तो रक्षितः । तथा इला पृथ्वी ओषधयो यवव्रीह्यादिबीजानि । चकारादृषयश्च । गुप्ताः क्रौडे वराहावतारेऽपि तेनैवाम्भसः सकाशात् क्ष्मां भूमिमुद्धरतादितिदैत्यो हिरण्याक्षो हतः तथा कौर्मेऽवतारे अमृतोन्मथने निमित्तेन पृष्ठेऽद्रिर्महेन्द्राचलो धृतः तथा आर्त्तं पीडितमत एव प्रपन्नं शरणमागतमिभराजं गजेन्द्रं ग्राहात् अमुञ्चत् अमोचयत् । अन्तर्भावितण्यर्थः । एवमादौ यत्रावतारनाम न दृश्यते तत्र विष्णुः शिवाय जगतां कलयावतीर्ण इत्यनुवर्त्तनीयम् ॥ १८ ॥ संस्तुन्वत इति ॥ कश्यपार्थं समिदाहरणे गतांस्तत्र चाङ्घ्रिपतितान् अङ्गुष्ठपरिमिताकारत्वाद्गोखुरगर्त्ते एव

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान्पिता नः ॥ विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥ गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताम्भसः क्ष्माम् ॥ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुञ्चदार्तम् ॥१८ ॥ संस्तुन्वतोऽङ्घ्रिपतिताञ्छ्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ॥ देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥ देवासुरे युधि च दैत्यपतीन्सुरार्थे हत्वाऽन्तरेषु भुवनान्यदधात्कलाभिः ॥ भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याच्ञाछलेन समदाददितेः सुतेभ्यः ॥ २० ॥

समुद्रपतनवाल्मिमग्नान् इन्द्रेणोपहसितान् अत एवात्मानं संस्तुन्वतः स्तुतिं कुर्वाणान् । श्रमणाः । ऋषीन् वालखिल्यान् तत आपदोऽमोचयत् । तथा वृत्रासुरवधाद्धेतोस्तमसि ब्रह्महत्यायां प्रविष्टं शक्रं च मोचयामास । तथा असुरगृहे पिहिताः देवेषु पलायितेषु निलीनेषु च सत्सु असुरैस्तत्स्त्रियः स्वगृहमानीय निरुद्धाः अत एवानाथा रक्षकहीनास्ताश्च अनेकावतारैः भगवानमोचयत् । तथा नृसिंहेऽवतारे भगवान् सतां प्रह्लादादिस्वभक्तानामभयाय भयनिरासायासुरेन्द्रं हिरण्यकशिपुं जघ्ने हतवान् । तङार्षः ॥ १९ ॥ देवेति ॥ देवा असुराश्चात्र सन्ति योद्धारस्तत्र देवासुरे । अर्श आद्यच् । नित्यस्त्रीलिङ्गयुधूशब्दविशेषणे स्त्रीलिङ्गाभाव आर्षः । यद्वा । देवासुरसमूहे या युध् तत्रेति व्यधिकरणान्वयः । युधि युद्धे सुरार्थे इन्द्रादिकार्यसाधनार्थं दैत्यपतीन् हत्वा तथान्तरेषु अन्येष्वपि सर्वमन्वन्तरेषु कलाभिस्तत्तदवतारैर्भुवनान्यदधात् । अथ वामनो भूत्वा याच्ञाछलेन बलेः सकाशादिमां क्ष्मां भूमिमहरत् । तां चादितेः सुतेभ्यः इन्द्रादिभ्यः समदात् प्रायच्छत् ॥ २० ॥

निःक्षत्रियामिति ॥ हैहयानां कुलस्याप्ययाय विनाशाय भार्गवाग्निः भृगुवंशेऽवतीर्णोऽग्निवदतितेजस्वी रामः त्रिःसप्तकृत्वः एकविंशतिवारान् गां भूमिं निःक्षत्रियामकृत चकार । लोकानां मलानि पापानि हन्तीति तथाभूता कीर्तिर्यस्य स सीतापतिः श्रीरामः अब्धिं बबन्ध अब्धौ सेतुं बबन्ध । ततश्च सलङ्कं लङ्कास्थवीरगणसहितं दशवक्त्रं रावणमहन् । लङ्काया अपि दहनात्सलङ्कमिति वा । स च जयति इदानीं वर्तते ॥ २१ ॥ भूमेरिति ॥ अजन्मापि भगवान् भूमेर्भारावताराय यदुषु जातः स्वेच्छयाऽवतीर्णः सन् सुरैरपि दुष्कराणि कर्तुमशक्यानि दैत्यवधगोवर्द्धनोद्धरणादीनि कर्माणि करिष्यति । तथा बुद्धरूपेणावतीर्णः सन् अतदर्हान् यज्ञानुष्ठानायोग्यानपि यज्ञकृतः यज्ञान् कुर्वाणान् दैत्यान् वादैर्वेदविरुद्धतर्कैर्विमोहयति यज्ञानुष्ठानान्निवारयिष्यतीत्यर्थः । तथा कलौ कलियुगस्यान्ते कल्किरूपेणावतीर्णः सन् शूद्रान् क्षितिभुजो राज्ञो न्यहनिष्यत् हनिष्यति । एवंविधान्यन्यान्यपि भूरीणि जन्मानि कर्माणि च कविभिर्वर्णितानि सन्ति ॥ २३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ चतुर्थ एकादशस्य व्यधाद्गङ्गासहायकः ॥ ४ ॥ पञ्चमे भक्तिहीनानां निष्ठा पूजाविधिस्तथा ॥ युगे युगे वर्ण्यतेऽत्र श्लोकाः सार्द्धा द्विपञ्चाशत् ॥ ... लङ्कार्षः ॥ २२ ॥ एवमिति ॥ हे महाभुज जगतः पत्युः पालकस्य अत एव भूरि यशो यस्य तस्य भगवतः जन्मानि कर्माणि च मया तु संक्षेपतो वर्णितानि ।

निःक्षत्रियामकृत गां च त्रिसप्तकृत्वो रामस्तु हैहयकुलाऽप्ययभार्गवाग्निः ॥ सोऽब्धिं बबन्ध दशवक्त्रमहन्सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥ २१ ॥ भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ॥ वादैर्विमोहयति यज्ञकृतोऽतदर्हाञ्छूद्रान्कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥ २२ ॥ एवंविधानि कर्माणि जन्मानि च जगत्पतेः ॥ भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ राजोवाच ॥ भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ॥ तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥ चमस उवाच ॥ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ॥ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥ य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ॥ न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥ ३ ॥

न्यपि भूरीणि जन्मानि कर्माणि च कविभिर्वर्णितानि सन्ति ॥ २३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ चतुर्थ एकादशस्य व्यधाद्गङ्गासहायकः ॥ ४ ॥ पञ्चमे भक्तिहीनानां निष्ठा पूजाविधिस्तथा ॥ युगे युगे वर्ण्यतेऽत्र श्लोकाः सार्द्धा द्विपञ्चाशत् ॥ उवाचैर्वाचां षट्कं चाष्टपञ्चाशदनुष्टुभः ॥ ५ ॥ भगवन्तमिति ॥ हे आत्मवित्तमाः ये भगवन्तं हरिं प्रायो न भजन्ति तेषाम् अशान्तकामानाम् अविजितात्मनां च का निष्ठा किं प्राप्यम् ॥ १ ॥ भजनीयस्याभजनाद्दुर्गतिरेवेति वक्तुं प्रथमं भजनीयत्वे युक्तिमाह—मुखेति ॥ पुरुषस्य भगवतो मुखादिभ्यो गुणैः सत्वादिभिः साधनैः ब्रह्मचर्यादिभिराश्रमैः सह पृथग्ब्राह्मणादयश्चत्वारो वर्णा जज्ञिरे जाताः । गुणैरिति सत्वेन विप्रः सत्वरजोभ्यां क्षत्रियः रजस्तमोभ्यां वैश्यस्तमसा शूद्र इति । अत्र मुखादिभ्यो ब्राह्मणाद्या वर्णाः हृदयजघनवक्षःशिरोभ्यो ब्रह्मचार्याद्याश्रमाः ज्ञेयाः ॥ २ ॥ य इति ॥ एषां वर्णाश्रमवतां मध्ये ये साक्षात् आत्मप्रभवं स्वस्य कारणं पितृस्थानीयम् ईश्वरं च पुरुषं भगवन्तमज्ञानान्न भजन्ति ये च ज्ञात्वाऽप्यवजानन्ति ते कृतघ्नाः स्थानाद्वर्णा-

श्रमाधिकाराद् भ्रष्टाः सन्तोऽधो नरके पतन्ति ॥ ३ ॥ दूरे इति ॥ तथापि दूरे हरिकथाश्रवणं येषां ते अत एव दूरे चाच्युतकीर्त्तनं येषां ते ब्राह्मणादयो ये केचित् स्त्रियः शूद्रादयश्च ते सर्वे भवादृशां भगवद्भक्तानां प्रामाधिकाराणां राज्ञामनुकम्प्याः यथोचितं सामदानाद्युपायैः कृपया शिक्षणीयाः ॥ ४ ॥ ज्ञानलवदुर्विग्धास्तु न चिकित्सितुं शक्याः अत उपेक्ष्या एवेत्याशयेनाह—विप्र इति ॥ विप्रादयस्त्रयः श्रौतेन उपनयनाध्ययनयजनाद्यधिकारेण जन्मना च हरेः पदान्तिकम् आराधनेन चरणप्राप्तियोग्यत्वं प्राप्ता अपि आम्नायेषु वेदेषु ये वादा अर्थवादाः।"अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्याद्यास्ते मोहकतया विद्यन्ते येषां ते तथाभूताः सन्तः मुह्यन्ति भगवदाराधनं विहाय कर्मफले सज्जन्ते ॥ ५ ॥ वस्तुतस्ते मूर्खा एवेत्याह—कर्मणीति ॥ कर्मणि अकोविदाः यथा कर्म बन्धाय न भवेत्तथा कर्त्तुमज्ञाः स्तब्धा अनम्राः मूर्खा अपि पण्डितमानिन अतो यया माध्व्या श्रोत्रप्रियया उत्सुकाः सन्तो मूढास्तया "चाटुकान् अपामसोमममृता अभूम अप्सरोभिः सह विहरिष्याम" इत्यादिकान् प्रियान् शब्दान् वदन्ति ॥ ६ ॥ विप्र इत्यादिश्लोकोक्ता वेदं मन्यमाना अपि आपातदर्शिनो दुराग्रहग्रस्ताश्चेति अथैनदपेक्षयाप्यत्यन्ताधमा बुद्धिपूर्वकं पापं चरन्तस्तत्समर्थनाय शास्त्राशयमप्यन्यथा

दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥४॥ विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ॥
श्रौतेन जन्मनाऽथापि मुह्यन्त्याम्नायवादिनः ॥ ५ ॥ कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ॥ वदन्ति चाटुकान्मूढा यया माध्व्या
गिरोत्सुकाः ॥ ६ ॥ रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः ॥ दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥ वदन्ति तेऽन्यो-
ऽन्यमुपासितस्त्रियो गृहेषु मैथुन्यसुखेषु चाशिषः ॥ यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥

वर्णयन्ति । यथाधुनापि गुप्ततया मांसमद्यादिसेविनः आगमिकतान्त्रिकादिशब्दैर्व्यवह्रियमाणा दृश्यन्ते तादृशान् वर्णयति—रजसेति ॥ रजसा रजोगुणाधिक्येन घोरः हिंसाविषयकः सङ्कल्पो येषां ते कामुकाः नानाविधविषयभोगकामनया विष्टाः अहिवन्मन्युः क्रोधो येषां ते दाम्भिकाः परप्रतारणार्थं धर्माचाराभिव्यञ्जकाः न तु स्वयं शास्त्रे श्रद्धालवः मानिनः दुरहङ्कारिणः पापा निरन्तरं निषिद्धाचारतत्पराः अच्युतप्रियान् भगवद्भक्तान् विहसन्ति॥७॥वदन्तीति ॥ उपासिता महत्त्वेन सेविताः स्त्रियो न तु वृद्धा यैस्ते गृहेषु मैथुन्यं मैथुनसुखमेव परं न त्वातिथ्यादि येषु तेषु गृहेषु अन्योऽन्यम् "इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।"इत्याद्याकारा आशिषो वदन्ति । यद्वा । धनधामकलत्रसुतादिसंपत्तयो वो भवन्त्विति परस्परमाशिषो ददतीत्यर्थः।तथा अतद्विदः यज्ञानुष्ठानं हिंसादिदोषं च न विदन्ति तादृशाः सन्तः असृष्टान्नविधानदक्षिणं न सृष्टा न सम्पादिता अन्नविधानदक्षिणा यत्र तद्यथा भवति तथा यजन्ति वृत्त्यै जीविकार्थं परं केवलं पशून्घ्नन्ति । अत्राधुनातनेषु दुराचारेषु अन्योऽन्यमुपासितस्त्रिय इति यथापाठान्वयोऽपि

सुगमः ॥ ८ ॥ श्रियेति ॥ श्रिया धनादिसम्पदा विभूत्या आधिपत्यादिना अभिजनेन जनसंग्रहेण विद्यया तर्कशास्त्राद्यभ्यासेन त्यागेन दानेन रूपेण सौन्दर्येण शरीरबलेन कर्मणा श्रौतस्मार्त्तकर्मणा च जातो यः स्मयो गर्वस्तेन अन्धा धीर्येषां ते खलाः सहेश्वरान् ईश्वरसहितान् सतः हरिप्रियान् अवमन्यन्ति तेषामनादरं कुर्वन्ति । तद्भाव आर्षः ॥ ९ ॥ सर्वेष्विति ॥ अबुधास्ते शश्वत्सर्वदैव यथा खमाकाशं तथा दोषासंस्पर्शपूर्वकं सर्वेषु तनुभृत्सु प्राणिषु आत्मानम् आत्मत्वेनावस्थितम् अभीष्टं सर्वपुरुषार्थरूपं वेदेनोपगीतमीश्वरं न शृण्वते प्रबोध्यमानमपि न शृण्वन्ति । तङार्षः । किन्तु मनोरथानां व्यवायामिषमद्यादिविषयाणां वार्तया प्रवदन्ति निवृत्तिपरं वेदं प्रवृत्तिपरं वर्णयन्ति । यद्वा । वाक्यभेदेन व्याख्या । सप्तमी च तन्त्रेण षष्ठीसप्तम्योरर्थे । तथा च सर्वभूतानां पश्वादीनामप्यभीष्टं परप्रेमास्पदं तेषामात्मानं हिंसादिकरणसमये न शृण्वते नानुसन्दधते तेषु दयां न कुर्वन्ति । तथा सर्वभूतेष्ववस्थितमीश्वरं सर्वरक्षकं पापिनां दण्डयितारं च नानुसंदधते हिंसासमये परमेश्वरान्न बिभ्यति एवं हिंसादिप्रतिपादनसमये च वेदस्योपगीतमभिप्रायमहिंसात्मकं परैः प्रबोद्ध्यमानमपि न शृण्वते किन्तु यथा तेषां मनोरथाः मांसमद्यव्यवायादिविषया भवन्ति तथा वेदाशयं प्रवदन्ति ॥ १० ॥ननु भार्यागमनहुतशेषमांसभक्षणसौत्रामणीप्रातसुराग्रहाणां शास्त्रसिद्धत्वादेकान्ततो व्यवायादीनामपि निन्दा न युक्तेत्यत आह—लोक इति ॥ लोके व्यवायः स्त्रीसं-

श्रिया विभूत्याभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ॥ जातस्मयेनान्धधियः सहेश्वरान्सतोऽवमन्यन्ति हरिप्रियान्खलाः ॥ ९ ॥
सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदन्ति वार्तया ॥ १० ॥ लोके
व्यवायाऽमिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥

गः आमिषमद्ययोर्मांसमदिरयोः सेवा भक्षणानि । सेवसेवाशब्दयोर्घञन्तप्रत्ययान्तयोस्तन्त्रेण निर्देशस्तेन तेषु आसु इत्युभयथा परामर्शः । ताश्च जन्तोः प्राणिमात्रस्य नित्याः रागत एव नित्यप्राप्ताः तत्र व्यवाये स्वभावतो रागः आमिषमद्ययोः स्वकुलपरम्पराप्राप्तत्वात्तदभावे दुःसङ्गादिवशाद्वेति । अतस्तत्र भार्यागमनादावपि चोदनाविधिर्नास्त्येव अप्राप्तप्रापणस्यैव विधित्वात्तत्रैव शास्त्रप्रामाण्यौचित्यात् । अतः तेषु व्यवायादिषु विवाहयज्ञसुराग्रहैः व्यवस्थितिर्व्यवस्थैव शास्त्रेण बोधिता।तथा हि रोगकालावस्थादेशादिवशात् स्त्रीमांसमद्येषु यद्यद् विना स्थातुं न शक्यते तत्र तत्रैवं कार्यम्।विवाहसंस्कारनिष्पन्नस्वत्वायां भार्यायामेव व्यवायः कार्यः।यज्ञ एवामिषसेवा सौत्रामण्यामेव मद्यसेवा तत्रापि देशकुलाचारादिकमनतिक्रम्यैवेति निन्दादिरहितस्थल एवानुज्ञामात्रं दत्तं नतु वस्तुतो विधिः अत आसु व्यवायादिसेवासु निवृत्तिरेवेष्टा । निवृत्तावेव शास्त्रस्य तात्पर्यमिति अयं भावः । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयते॥" इति विधिव्यवस्थाश्लोकः । अस्यार्थः । यत्र रागतो विध्यन्तरतो न्यायतो वा सर्वथैव प्राप्तिर्नास्ति सः विधिः अपूर्वविधिरुच्यते । यथा "अहरहः सन्ध्यामुपासीत, ग्रहणे स्नायात्" इत्यादि । अत्यन्ताप्राप्तिरहिते स्थले तु नापूर्वविधिः किन्तु नि-

यमविधिः परिसङ्ख्याविधिर्वा । तत्र विधिं विना पाक्षिके प्रापणे सति एकत्र कोटौ प्राप्तौ सत्यामन्यत्र कोटौ चाप्राप्तौ सत्यामप्राप्तांशपूरको नियमविधिः । यथा " समे यजेत " इति दर्शपूर्णमासाभ्यां यजेतेति यागः कर्तव्यतया विहितः । स च देशमन्तरेण कर्तुमशक्य इत्यर्थाद्देशः प्राप्तः । स च समो विषमश्चेति द्विविधः । तत्र यदा यजमानः समे यियक्षते तदा समदेशः प्राप्त एव । यदा तु विषमे देशे यियक्षते तदा समो देशो न प्राप्नोति तदा अनेन समो देशोऽप्राप्तो विधीयते इत्यप्राप्तांशपूरणात् सम एव देशे यजेतेति वचनव्यक्तिः । ततश्च विषमदेशनिवृत्तिरार्थिकी तथा " प्राङ्मुखोऽन्नानि भुञ्जीत " इति इदमपि स्मार्त्तमुदाहरणं व्याख्यातम् । तत्र चान्यत्र चेति यत्रोद्देश्ये यस्य विधानं तदन्यस्मिन्नपि तत्संबन्धस्य प्रवृत्तितः प्रसक्तावित्यर्थः । यद्वा । तत्र विधिविषये अन्यत्र विधित इतरत्र रागस्थले च प्राप्तौ सत्यां परिसङ्ख्याविधिः । यथा "पञ्च पञ्चनखा भक्ष्या " इति । अत्र शशादीन् पञ्चनखानुद्दिश्य भक्ष्यत्वविधानं तदन्यस्मिन् श्वादौ अपि भक्ष्यत्वसंबन्धस्य रागतः प्रसक्तौ । यद्वा । विधिविषये शशादौ रागस्थले श्वादौ च भक्ष्यत्वप्राप्तौ पञ्चपञ्चनखेतरमांसानि सर्वाण्येवाभक्ष्याणि भोक्तुः प्रत्यवायजनकानीत्यनेन बोध्यते । मांसभक्षणे पञ्चपञ्चनखमांसान्येव परिसङ्ख्यातानि अभ्यनुज्ञातानीति तत्रैव न प्रत्यवायः परिसङ्ख्या या अभ्यनुज्ञादानमात्रार्थत्वात् सर्वमांसानामभक्षण एव शास्त्रतात्पर्यम् इति । प्रकृते च व्यवायादिषु अपूर्वविधिर्नास्त्येव, रागतो नित्यप्राप्तत्वात् । नापि नियमविधिः रागतो नित्यप्राप्तत्वेन प्राप्तेः पाक्षिकत्वाभावात् । न चारुच्यादिस्थले प्राप्त्यभावः कल्प्यः । मनसि संस्काररूपेण स्थितस्य रागस्य तत्राप्यनपायेन

**धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशान्ति ॥ गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥**

तादृशविषये अप्राप्तेरनङ्गीकारात् । अन्यथा "पञ्च पञ्चनखा भक्ष्या " इत्यादावपि अरुच्यादिना पाक्षिकत्वाङ्गीकारे सर्वशास्त्रसिद्धस्य सर्वैः शास्त्रकारैरङ्गीकृतस्य परिसङ्ख्याविधेर्लोपापत्त्या तत्रापि नियमस्वीकारे शशाद्यभक्षणे दोषकल्पनापत्तेः । तस्माद् भार्यागमनादिशास्त्रं परिसङ्ख्याविधिरेव । तथा हि यदि स्त्रीसङ्गं विना स्थातुं न शक्यते तदा विवाहितां विना नोपेयात् तत्रापि रजोदर्शनादिसमयादन्यत्रैवेत्यादिक्रमतो निवृत्तिरेवाभिप्रेता । नन्वेवम् । "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः ॥" इति दोषश्रवणं न स्यात् इति चेत् गृहस्थस्य स्त्रीरक्षणादिविध्यतिक्रमात् दोषश्रवणोपपत्तेः । एवं "हुतशेषादन्यत्र भक्षयेत् ।" "सौत्रामण्या अन्यत्र सुरां न गृह्णीयात् " इति सर्वत्र रागप्राप्तिस्थले परिसङ्ख्या बोध्या । विषयेष्वत्यासक्तो गृहस्थः सर्वत्राधिकारी । ननु तर्हि कथं धर्मशास्त्रनिबन्धकारा ऋतुगमनादीनां नियमविधित्वं व्यवातिष्ठिपन् निवृत्तिमात्रपरत्वे चात्रापि कुतो व्यवस्थितिरतेषु इत्याद्युक्तमिति चेत् न तावत्परिसङ्ख्याविधिना श्रुत्या निवृत्तिरुच्यते। तथा सति स्वार्थत्यागः परार्थकल्पना प्राप्तबाधश्चेति दोषत्रयं स्यात्। यदाहुः।"श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाध इत्येवं परिसङ्ख्या त्रिदूषणा॥"इति अतो रागतो नित्यप्राप्ते अप्राप्तांशपूरणलक्षणस्य नियमफलस्याप्यभावान्नियमविधिद्वारा फलतः परिसङ्ख्यैवेति अलं विस्तरेण । शेषं यद्घ्राणभक्ष इत्यत्र ज्ञेयम् ॥ ११॥ ननु व्यवायामिषमद्यनिवृत्तावेव शास्त्रतात्पर्यं चेद्धनार्जनादि व्यर्थमेवेति चेत्तत्राह—धनमिति॥ धनं च धर्मे एवैकं फलं यस्य तादृशमस्ति धनस्य धर्मानुष्ठानमेव मुख्यं प्रयोजनम् धर्मस्य फलमाह—यत इति ॥

यतो यस्मात् धर्मात् अनुप्रशान्ति अनु अनन्तरमेव प्रकृष्टा शान्तिर्मोक्षलक्षणा यस्मात्तत् सविज्ञानमपरोक्षज्ञानसहितं दृढं परोक्षज्ञानं भवति। यतो धनाद्धर्मः। ततः क्रमात्परोक्षज्ञानापरोक्षज्ञानप्रशान्तयो भवन्ति। तद्धर्मादिफलकं धनं गृहेषु देहाद्यर्थं युञ्जन्ति तथा इत्यर्थः। दुरन्तमप्रतिहतं वीर्यं बलं यस्य तं कलेवरस्य मृत्युं न पश्यन्ति ॥ १२ ॥ किंच व्यवस्थयापि व्यवायाद्यनुज्ञानं न यथेष्टं किं त्वन्यथैवेत्याह—यदिति ॥ यत् यस्मात् सुरायाः घ्राणभक्षः अवघ्राणं स एव विहितो न पानम्। तथा पशोरप्यालभनमेव विहितं न तु हिंसा। अत्रेदं बोध्यम्। देवतोद्देशेन यत्पशुहननं तदालभनम्। "वायव्यं श्वेतमालभेत" इत्यादिश्रुतेः।तत्तु न हिंसा।"या वेदविहिता हिंसा सा न हिंसेति कीर्त्यते।' इति वचनात्। यज्ञेऽपि भक्षणोद्देशेन तत्क्रियमाणं तु लौकिकहननवद्धिंसैव।अत्र त्वालभनमेव विहितं न तु हिंसा अतो न यथेष्टभक्षणाभ्यनुज्ञेति। एवं व्यवायोऽपि प्रजया पुत्रोत्पत्तिनिमित्तेनैव विहितो न रत्यै रतिसुखार्थम्।अतो मनोरथवादिन इमं विशुद्धं स्वधर्मं न विदुः इति टीकाकाराः व्यवस्थितिस्तेषु इति। प्राक्सूचितव्यवस्थाविवरणत्वेनेमं श्लोकं व्याचक्षते। यद्वा। अधिकारिभेदेन व्यवस्था। तथा हि लोके त्रिधा जनाः। विषयेष्वत्यासक्ता नात्यासक्ता अनासक्ताश्च। सर्वे तेऽपि शास्त्रप्रामाण्याभ्युपगन्तारः तदनभ्युपगन्तारश्च।तत्रान्त्याः शास्त्रप्रामाण्यानभ्युपगन्तारो नास्तिकास्तानधिकृत्य "मुखबाहूरुपादेभ्यः" इत्याद्युक्तम्।अभ्युपगन्तारोऽपि द्विधा।शास्त्रतात्पर्यविचारे शक्तास्तत्राशक्ताश्च। तत्रान्त्यान् अधिकृत्य "दूरे हरिकथाः केचित्" इत्यादि कथितम्। विचारे शक्ताश्च अनृजुहृदयाः ऋजुहृदयाश्च। तत्राद्या दुराग्रहग्रस्ताः आपातदर्शिनो ये,विप्रो राजन्यवैश्यौ

**यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥**

च इति श्लोकद्वयेनोक्ताः। केचित्ततोऽप्यधमाः।" ये रजसा घोरसङ्कल्पा " इत्यादिनोक्ताः। उभयेऽपि ज्ञानलवदुर्विदग्धाः उपदेष्टुमशक्या उपेक्ष्या एव। ये तु विषयेष्वत्यासक्ताः ऋजुहृदयास्तान् प्रति " व्यवस्थितिस्थितिस्तेषु विवाहयज्ञ " इत्यादिव्यवस्था। ये च नात्यासक्ता ये चानासक्ता मुमुक्षवो गृहस्थाः ये च तादृशा गृहस्थभिन्नास्तान् " त्रीन्प्रति यद्घ्राणभक्ष " इति वाक्यस्य तन्त्रप्रयुक्तार्थभेदेन व्यवस्था। तत्र नात्यासक्तान् प्रति अर्थ उक्त एव अनासक्तान् मुमुक्षून् गृहस्थान् प्रति तु यत् यथा सुराया घ्राणभक्षः घ्राणरूपं भक्षणमपि घ्राणमात्रमपीत्यर्थः। अविहितः न विहितः प्राग्निरग्रेयमव्ययोरिति निषेधात्। नञर्थे अकारोऽव्ययं पृथक् पदम्। " अपानोनाः प्रतिषेधे " इति कोषात्। " श्रियं भागवतीं वा स्पृहयन्ति भद्राम् " इति तृतीयस्कन्धे स्वाम्यादिभिर्व्याख्यातत्वाच्च। तथा हिंसारूपं पशोरालभनमपि न विहितम्। हिंसालभनयोः विशेषणविशेष्यभावः। हिंसेति हेतुगर्भता एवं व्यवायोऽपि प्रजया हेतुना रत्यै रत्यर्थं वा न विहितः अनासक्तानां प्रजारत्योः कामाभावात्। किन्तु गृहस्थस्य स्वदाररक्षणनिमित्तः।" युष्माकं कामविहन्ता पातकी स्यात्, " ऋतुस्नातां तु यो भार्याम् " इत्यादिवाक्यबोधितदोषानुद्भवमात्रनिमित्तो वा निषिद्धरजोदर्शनादिव्यतिरेकेण विहितः संभवतीति। अत्रैकस्य नकारस्य आवृत्त्यान्वयः।" शिवो ब्रह्मा न चाच्युतः, तान्यहं वेद नो जनाः " इत्यादिभागवतशैलीसिद्धः। अनासक्तान् गृहस्थभिन्नान् प्रत्यप्ययमेवार्थः।

तत्र दाररक्षणादिनिमित्तो व्यवायोऽपि न प्राप्नोतीत्येतावान् विशेषः । ननु अनासक्तान् गृहस्थभिन्नान् प्रति उक्तोऽर्थः संगच्छतां नाम तादृशान् गृहस्थान् प्रति प्रथमोऽर्थ एव किं न स्यादिति चेत् । न तावत्तेषां सुराप्रसक्तिः । यतः ऋद्धिकामस्याग्निचितो मुखेतरच्छिद्रैः सोमस्राविणः मुखेन सोमवामि नः राज्यच्युतस्य नृपस्य पशुकामस्य च सौत्रामणीयागो विहितः । तत्रानासक्तानामुक्ता कामना उक्तं निमित्तं वा न संभवति । कुतः सौत्रामण्यनुष्ठानं कुतस्तरां सुराप्राशनप्रसक्तिः । नापि हुतशिष्टमांसभक्षणप्रसक्तिर्यज्ञे—पश्वालम्भनप्रसक्तिश्च हिंसामांसादिनिवृत्तानां दयार्द्राणां तेषां प्रायः सकामविषयपश्वालम्भनयज्ञानामप्राप्तेः । निमित्तादिना कथंचित्प्राप्तौ तदनुकल्पमात्रेण कर्मान्तरेण वा निर्वाहे बलाद्धिंसामांसभक्षणादौ शास्त्रस्याप्यप्रवर्तकत्वात् अत एवानुकल्पबोधकशास्त्रमपि सार्थम् । यतो वेदो निवृत्तिपरोऽपि विषयासक्तान् धर्मे स्थापयितुं दुष्टान् पुत्रान् हितकारी चतुरः पितेव विषयप्रवृत्तिमिवोपदिश्य शनैः विषयेभ्यो निवर्तयति न पुनर्निवृत्तान् बलात्प्रवर्तयति । श्रीभागवतं च बहुशः हिंसामांसादिनिवृत्तिमेवोपदिशति । अतस्तदभिप्रायोऽपि न कदाचित् हिंसामांसादिप्रवृत्तिलेशेऽपि संभवति । अत उक्तमर्थं युक्तं मन्यामहे । न चैकोच्चारणेऽर्थानैक्यं दोषः । तन्त्रादिना व्याकरणे तावदनेकार्थता प्रसिद्धैव । चतुःश्लोकीभागवतव्याख्यानादौ चक्रवर्त्यादिभिस्तन्त्रस्याश्रयणाच्चेति । हिंसामांसनिषेधादिवाक्यानि भागवते भारतेऽन्यत्र च स्पष्टानीति न लिख्यन्ते ।

ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ॥ पशून्द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥ १४ ॥

द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ॥ मृतके सानुबन्धेऽस्मिन्बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥

अत्यासक्तान् गृहस्थानधिकृत्य प्रवृत्तानि वाक्यानि त्वेतदभिप्राय नालमिति तदेवं सङ्क्षेपतो व्यवस्था । ये अत्यन्तासक्ता गृहस्थास्ते व्यवायादिषु यं विना स्थातुं न शक्नुयुस्ते देशाचाराद्यनुरोधेन तत्तन्मात्रमुपयुञ्जीरन् । तत्रापि स्वपत्न्यामेव व्यवायं यज्ञे एव मांसं सौत्रामण्यामेव सुराम् । ये च नात्यासक्ता गृहस्थास्ते यथोपयोगमात्रं ऋतुस्नातायामेव संतानार्थमेव स्त्रीचारित्ररक्षार्थमेव च व्यवायं यज्ञे हुतशेषमेव मांसं सौत्रामण्यामेव सुराघ्राणमेवोपयुञ्जीरन् । येऽनासक्ता गृहस्थास्ते च स्वस्त्रीरक्षणमात्रार्थं व्यवायं सेवेरन् । न क्वापि मांसं न च सुराघ्राणमपि । गृहस्थभिन्ना अनासक्तास्तु तेषु न किमपीति । विस्तरभयादुपरम्यते ॥ १३ ॥ पुनः पूर्वोक्तान् दुर्विदग्धान्निन्दति—ये इति ॥ ये त्वनेवंविदः न एवं धर्मं विदन्ति असन्तः स्तब्धाः अविनीताः सन्तो वयमित्यभिमानवन्तः अतो विश्रब्धाः अनेन मनोरथो भविष्यतीति विश्वस्ताः । यद्वा । तदानान्तनपोषणेन पशुभिर्विश्वस्ताः अपि दयारहिताः पशून् द्रुह्यन्ति घ्नन्ति तांश्च ते पशवोऽपि प्रेत्य परलोकं यमपुरं गत्वा खादन्ति ॥ १४ ॥ द्विषन्त इति ॥ सानुबन्धे पुत्रकलत्रादिसहिते मृतके शवतुल्ये स्वदेहे बद्धः स्नेहो यैस्ते ये परकायेषु जीवरूपेण स्थितमीश्वरं हरिं स्वात्मानमेव द्रुह्यन्ति ये मांसार्थं पशून् हिंसन्ति लोकान् वा यद्द्विषन्ति तत्स्वात्मानं हरिमेव द्विषन्ति इत्यर्थः । तद्दोषादधः नरके पतन्ति ॥ १५ ॥

ये इति ॥ अज्ञास्तत्वज्ञैरनुकम्पितास्तरन्ति तत्वज्ञास्तु स्वत एव तरन्ति । ये तु कैवल्यं तत्वज्ञानमसंप्राप्ता मूढतां चातीता अतो नात्यन्तमज्ञाः न च तत्वज्ञाः किन्त्वन्तरालवर्तिनो विज्ञाभिमानिनः स्तब्धा अविनीताः त्रैवर्गिकास्त्रिवर्गव्यापृताः अक्षणिकाः श्रवणाद्यवसरहीनाः शरीरादिस्थैर्यबुद्धयो वा ते आत्मानं घातयन्ति नरकादिपातसाधनं कुर्वन्तीत्यर्थः ॥ १६ ॥ एत इति ॥ एते आत्महनः आत्मापह्नवकर्त्तारः अशान्ताः अज्ञाने कर्मणि ज्ञानमानिनो भ्रान्ताः न कृतं कृत्यं श्रवणादिसाधनं यैः अतः कालेन ध्वस्तः मनोरथो येषां ते सीदन्ति नरकादौ क्लिश्यन्त्येव ॥ १७ ॥ हित्वेति ॥ वासुदेवपराङ्मुखा जनाः गृहादित्यागं नरकप्राप्तिं चानिच्छन्तोऽपि अत्यायासेन अतिश्रमेण रचिताः संपादिताः अपि याः गृहापत्यसुहृच्छ्रियस्ताः इहैव हित्वा तमो नरकं विशन्ति ॥ १८ ॥ कस्मिन्निति ॥ भगवान् कस्मिन् काले किंवर्णः कीदृग्वर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना नृभिः पूज्यते तदिहास्मदग्रे उच्यताम् ॥ १९ ॥ कृत इति ॥ कृतादीनि युगानि एषु कृतादिकालेषु नानाप्रकाराः वर्णा अभिधा

ये कैवल्यमसंप्राप्ता ये चातीताश्च मूढताम् ॥ त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ॥ १६ ॥ एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ॥ सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥ हित्वाऽऽत्मायासरचिता गृहापत्यसुहृच्छ्रियः ॥ तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥ १८ ॥ राजोवाच ॥ कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः ॥ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥ करभाजन उवाच ॥ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ॥ नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दण्डकमण्डलू ॥ २१ ॥ मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ॥ यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥ हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरो मनुः ॥ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥

नामानि आकाराश्च यस्य स केशवो नानैव विधिना प्रकारेणेज्यते पूज्यते ॥ २० ॥ कृत इति ॥ शुक्लः शुक्लवर्णः शुक्लनामा च कृष्णाजिनं कृष्णसारचर्म उपवीतं यज्ञसूत्रम् अक्षोऽकारादिक्षान्तवर्णमयमाला तान् दण्डकमण्डलू च बिभ्रदिति ब्रह्मचारिवेशो दर्शितः ॥ २१ ॥ मनुष्या इति ॥ तदा कृतयुगे मनुष्याः शान्ता निर्वैराः सुहृदः सर्वोपकारिणः समाः समदर्शिनः ते च तपसा ध्यानेन शमेन दमेन च देवं भगवन्तं भजन्ति ॥ २२ ॥ हंस इति ॥ कृतयुगे भगवान् हंसादिभिर्नामभिर्गीयते व्यवह्रियते ॥ २३ ॥ त्रेतायामिति ॥ त्रेतायामसौ भगवान् रक्तवर्णः रक्तनामा च चतुर्बाहुः त्रिगुणा दीक्षाङ्गभूता मेखला कटिसूत्रं यस्य सः यज्ञमूर्तिः हिरण्यकेशः पिङ्गकेशः त्रय्यात्मा ऋगादिवेदत्रयीप्रतिपादितः आत्मा मूर्तिर्यस्य सः स्रुक् स्रुवाद्युपलक्षणं चिह्नं यस्य सः ॥ २४ ॥

तमिति ॥ तदा त्रेतायां धर्मिष्ठाः ब्रह्मवादिनो मनुजास्ते सर्वदेवमयम् अत एव मुख्यं देवं हरिं त्रय्या विद्यया त्र्युक्तकर्मभिः यजन्ति ॥ २५ ॥ विष्णुरिति ॥ तदा विष्णुरित्यादिनामभिर्भगवान् ईर्यते वर्षति कामान् भक्तेष्विति वृषः आकम्पयति क्लेशांस्तेषामित्याकपिः स चासौ स च जयत्येव सर्वमिति जयन्तः । स्पष्टं शेषम् ॥ २६ ॥ द्वापरे इति ॥ द्वापरे भगवान् श्यामः अतसीपुष्पसंकाशश्यामनामा च पीतवासाः निजानि चक्रादीन्यायुधानि यस्य सः श्रीवत्सो नाम वक्षसि दक्षिणभागे रोम्णां प्रदक्षिणावर्त्तः स आदिर्येषां करचरणादिगतपद्मादीनां तैरङ्कैश्चिह्नैः तथा लक्षणैर्बाह्यैः कौस्तुभादिभिश्चोपलक्षितः ॥ २७ ॥ तमिति ॥ तदा हे नृप जिज्ञासवः तत्त्वज्ञानेच्छवः मर्त्या मनुष्याः महाराजयोग्यान्युपलक्षणानि छत्रचामरादीनि यस्य तं परं पुरुषं वेदतन्त्राभ्यां वेदतन्त्रोक्तप्रकारेण यजन्ति पूजयन्ति ॥ २८ ॥ मन्त्रामान्याह—नम इति द्वयम् ॥ स्पष्टम् ॥ २९ ॥ ३० ॥ इतीति ॥ हे उर्वीश भूपते इत्येवं द्वापरे जगदीश्वरं स्तुवन्ति कलावपि यथा नानातन्त्रविधानेन तन्त्रोक्तप्रकारेण तं यजन्ति तच्छृणु । एतेन कलौ

तं तदा मनुजा देवं सर्वदेवमयं हरिम् ॥ यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ॥
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥ द्वापरे भगवाञ्छ्यामः पीतवासा निजायुधः ॥ श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः
॥ २७ ॥ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ॥ यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥ नमस्ते वासुदेवाय नमः
संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥ नारायणाय ऋषये पुरुषाय महात्मने ॥ विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥ ३० ॥ इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ॥ नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥ कृष्णवर्णं
त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ॥ यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥ ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ॥ भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ ३३ ॥

तन्त्रमार्गस्य प्राधान्यं दर्शितमिति स्वामिपादाः ॥ ३१ ॥ कृष्णेति ॥ कृष्णवर्णं त्विषा कान्त्या अकृष्णमिन्द्रनीलमणिवदुज्ज्वलम् इति रूक्षतां व्यावर्त्तयति । यद्वा । त्विषा कान्त्या कृष्णावतारं तेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति । अङ्गानि हृदयादीनि उपाङ्गानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः सुनन्दादयस्तत्सहितं संकीर्त्तनं नामोच्चारणं संस्तुतिश्च तत्प्रधानैर्यज्ञैः अर्चनैः सुमेधसो विवेकिनो यजन्ति । हीति प्रसिद्धम् ॥ ३२ ॥ कलौ प्रायः कृष्णरामयोर्भजनमुपदिशति तत्र कृष्णं स्तौति—ध्येयमिति ॥ हे प्रणतपाल भक्तरक्षक हे महापुरुष सदा ध्येयं ध्यानार्हं सदा इन्द्रियकुटुम्बादिभिः परिभवं तिरस्कारं हन्ति तादृशं सदा अभीष्टदो भक्तमनोरथपूरकं सदा तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमपावनम् अत एव सदाशिवविरिञ्चिभ्यां नुतं स्तुतं शरण्यं शरणार्हं भृत्यानामार्तिहं पीडाहरं भवाब्धेः पोतं तारकं च ते चरणारविन्दं वन्दे ॥ ३३ ॥

श्रीरामं स्तौति—त्यक्त्वेति ॥ हे महापुरुष धर्मिष्ठः पितृप्रतिश्रुतपालको यत् यो भवान् अन्यैः सुदुस्त्यजा या सुराणामपीप्सिता राज्यलक्ष्मी राज्यसम्पत् तां त्यक्त्वा आर्यस्य दशरथस्य पितुर्वचसा अरण्यं वनमगात् दयितया प्रियया सीतया ईप्सितं मायामृगं मायया स्वर्णमृगाकारं मारीचं योऽन्वधावत्तस्य तव चरणारविन्दं वन्दे । स्वामिपादास्तु हे धर्मिष्ठेत्यपि संबोधनम् । तथाप्यविवक्षितत्वादार्यपदेन सन्ध्यभावः । यद्वा । यच्चरणारविन्दमरण्यमगात् । यच्च मायामृगमन्वधावत्तत्ते चरणारविन्दं वन्दे इत्यन्वयः । अन्यत्समानम् इत्यप्याहुः ॥ ३४ ॥ एवमिति ॥ हे राजन् एवं श्रेयसां पुरुषार्थानामीश्वरो दाता हरिः युगानुरूपाभ्यां नामरूपाभ्यामिति शेषः । युगेषु वर्त्तमानैः मनुजैरिज्यते आराध्यते ॥ ३५ ॥ युगेषु कलिरेव श्रेष्ठ इत्याह—कलिमिति ॥ ये गुणज्ञाः कलेर्गुणान् जानन्ति ते आर्याः वृद्धाः विवेकिनः सारभागिनो गुणांशग्राहिणः ते कलिमेव सभाजयन्ति प्रशंसन्ति । यत्र कलौ भगवन्नामसंकीर्त्तनमात्रेणैव सर्वः सर्वयुगप्राप्यः स्वाभिलषितोऽर्थोऽभिलभ्यते ॥ ३६ ॥ न हीति ॥ यस्मात्कलौ भगवन्नामसंकीर्त्तनमे-

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ॥ मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दम्

॥ ३४ ॥ एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः ॥ मनुजैरिज्यते राजञ्छ्रेयसामीश्वरो हरिः ॥ ३५ ॥ कलिं सभाजयन्त्यार्या गुणज्ञाः सार-

भागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥ न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ॥ यतो विन्देत परमां शान्तिं नश्यति

संसृतिः ॥ ३७ ॥ कृतादिषु प्रजा राजन्कलाविच्छन्ति संभवम् ॥ कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ क्वचित्क्वचिन्महाराज द्रविडेषु

च भूरिशः ॥ ३८ ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ३९ ॥ ये पिबन्ति जलं तासां

मनुजा मनुजेश्वर ॥ प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ॥ ४० ॥ देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् ॥

सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥ ४१ ॥

वाभिलषितार्थसाधनं तस्मादिह संसारे भ्राम्यतां देहिनामतो नामसङ्कीर्तनादन्यः परम उत्कृष्टः लाभः लाभहेतुः पुरुषार्थसाधनं नैवास्ति । यतो नामसंकीर्त्तनादेव प्राणी परमां मुक्तिरूपां शान्तिं विन्देत तस्य संसृतिः जन्ममरणादिदुःखं च नश्यति ॥ ३७ ॥ कृतेति अर्द्धम् ॥ हे राजन् अतः कृतादियुगत्रयवर्त्तिन्यः प्रजाः कलौ संभवमुत्पत्तिमिच्छन्ति । कलाविति ॥ हे महाराज कलौ खलु क्वचित्क्वचित् नारायणपरायणाः जनाः भविष्यन्ति द्रविडेषु देशेषु च तादृशा भूरिशो भविष्यन्ति ॥ ३८ ॥ ताम्रेति ॥ यत्र द्रविडेषु ताम्रपर्ण्यादयो नद्यः सन्ति ॥ ३९ ॥ ये इति ॥ हे मनुजेश्वर ये मनुजास्तासां नदीनां जलं पिबन्ति स्नानादीनामप्युपलक्षणम् । ते अमलाशयाः सन्तो वासुदेवे भगवति भक्ता भवन्ति ॥ ४० ॥ भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतया नित्यनैमित्तिककर्मयन्त्रणाराहित्यमाह—देवेति ॥ हे राजन् यः कर्तं भेदमहङ्कारं कृत्यं वा ।

“ कृती च्छेदने ” घञ् अच् वा। परिहृत्य त्यक्त्वा वासुदेवः सर्वमिति ज्ञात्वेत्यर्थः। शरण्यं शरणार्हं मुकुन्दं सर्वात्मना सर्वभावेन शरणं गतः स देवादीनामृणी नास्ति अतस्तदृणापाकरणार्थं तेषां किङ्करः तदर्थं नित्यं पञ्चयज्ञादिनियोगयोग्योऽपि न भवति। अत्र देवादिषु आप्ताः पोष्याः कुटुम्बिनः शेषाः पञ्च देवादयः पञ्च यज्ञदेवताः ऋणी हि ऋणं दातुमशक्तो धनिकस्य कर्म करोति। “हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।” इति स्मृतेः। भक्तस्तु कस्यापि न ऋणी अतो ज्ञानभक्तिहीनानामेव तदृणित्वेन किङ्करत्वमिति भावः ॥ ४१ ॥ स्वपादेति ॥ त्यक्तः अन्यस्मिन् देहादौ देवतान्तरे वा भावो येन तस्य अत एव प्रियस्य स्वपादमूलं भजतः पुंसः। यद्यपि विकर्मणि निषिद्धे कर्मणि प्रवृत्तिर्न संभवति तथापि कथंचित्प्रमादाद्यत्किंचिद्विकर्मोत्पतितं तदा तदपि हृदि संनिविष्टः परेशः सः हरिरेव सर्वं धुनोति नाशयति अतो नित्यनैमित्तिककर्मनियन्त्रणा यथा तस्य नास्ति तथा निषेधविषये प्रायश्चित्तान्तरापेक्षाऽपि नास्तीत्यर्थः ॥४२॥ धर्मानिति ॥ जायन्तेयान् जयन्तीपुत्रान्। स्पष्टमन्यत् ॥४३॥ तत इति ॥

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ॥ विकर्म यच्चोत्पतितं कथं चिद्धुनोति सर्वं हृदि सन्निविष्टः ॥४२॥ नारद उवाच ॥ धर्मान्भागवतान्नित्यं श्रुत्वाथ मिथिलेश्वरः ॥ जायन्तेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४३ ॥ ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ॥ राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४४ ॥ त्वमप्येतान्महाभाग धर्मान्भागवताञ्छ्रुतान् ॥ आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥४५॥ युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् ॥ पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥४६॥ दर्शनालिङ्गनालापैः शयनासनभोजनैः ॥ आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥ ४७ ॥ वैरेण यं नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिविलासविलोकनाद्यैः ॥ ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ ४८ ॥ मापत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ॥ मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥ ४९ ॥

सिद्धाः कव्यादयः उपातिष्ठन् अनुतिष्ठन्। स्पष्टमन्यत् ॥४४॥ त्वमिति ॥ हे महाभाग निःसङ्गः निष्कामः श्रद्धया च युक्तश्च भूत्वा मत्तः श्रुतानेतान् धर्मानास्थितः अनुतिष्ठंस्त्वमपि परं पदं यास्यसे। तदर्थः ॥४५॥ युवयोरिति ॥ स्पष्टम् ॥४६॥ दर्शनेति ॥ कृष्णे पुत्र इति स्नेहं प्रकुर्वतोः वां युवयोः कृष्णस्य दर्शनालिङ्गनादिभिरात्मा पावितः शोधितः प्रतिबन्धकदोषनिरासेन तत्प्राप्तियोग्यः कृतः अतो युवाभ्यां नान्यत्साधनमनुष्ठेयमित्याशयः ॥ ४७ ॥ वैरेणेति ॥ तस्य गतिविलासाद्यैराकृतास्तत्तदाकारा धीर्येषां ते शिशुपालादयो नृपतयः स्वशयनादिसमये यं श्रीकृष्णं वैरभावेनापि ध्यायन्तो यदा तत्साम्यं तत्सारूप्यमापुस्तर्हि तदनुरक्तधियां भवादृशां तत्साम्यं भवतीति किं पुनर्वक्तव्यम् ॥ ४८ ॥ मेति ॥ अतः सर्वात्मनि ईश्वरे मायया मनुष्यनाट्येन गूढमाच्छादितमैश्वर्यमीश्वरभावो यस्य तस्मिन्नित्यर्थः। परे अव्यये च कृष्णे अन्यापत्यवत् अपत्य-

मिति बुद्धिं मा कृथाः । अट् छान्दसः ॥ ४९ ॥ भूभारेति ॥ भूभारभूता असुरा एव ये राजन्यास्तेषां हन्तवे विनाशाय । तुमर्थे तवे छान्दसः । सतां साधूनां सदाचाराणां गुप्तये परित्राणाय सर्वजनानां निर्वृत्त्यै परमानन्दलाभाय चावतीर्णस्य कृष्णस्य लोके यशो वितन्यते विततं भवति । कर्मकर्त्तरि लट् ॥ ५० ॥ एतदिति ॥ एतन्नारदोक्तमितिहासं श्रुत्वा महाभागो वसुदेवः महाभागा देवकी चेत्येतौ आत्मनो मोहं जहतुः ॥ ५१॥ इतिहासमिति ॥ पुण्यं शृण्वतां वदतां च पुण्यावहमिममितिहासं यः पुमान् समाहितचित्तः सन् धारयेत् स इहास्मिन्नेव जन्मनि शमलं मोक्षप्रतिबन्धकं पापं विधूय निरस्य ब्रह्मभूयाय ब्रह्मभावाय मुक्तिलाभाय कल्पते समर्थो भवति ॥ ५२॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमादेकादशगपञ्चमे ॥ ५ ॥ षष्ठे ब्रह्मादिभिर्विष्णोरात्मधामाप्तये स्तुतिः॥उद्धवप्रार्थनाप्यत्र श्लोका धरणिमार्गणाः ॥ उवाचेदंशकं पादयुक्तं षष्टिरनुष्टुभः ॥ ६ ॥ अथेति ॥ आत्मजैः सनकादिभिः देवैरिन्द्रादिभिः प्रजेशैर्मरीच्यादिभिश्च वृतो ब्रह्माऽभ्यगात । द्वारकामिति चतुर्थस्थं सम्बध्यते । भूतगणैर्वृतो

भूभारासुरराजन्यहन्तवे गुप्तये सताम् ॥ अवतीर्णस्य निर्वृत्त्यै यशो लोके वितन्यते ॥ ५० ॥ श्रीशुक उवाच ॥ एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः ॥ देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५१ ॥ इतिहासमिमं पुण्यं धारयेद्यः समाहितः ॥ स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५२ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ॥ भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥ १ ॥ इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ॥ ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ॥२॥ ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ॥३॥ वपुषा येन भगवान्नरलोकमनोरमः ॥ यशो वितेने लोकेषु सर्वलोकमलापहम् ॥४॥ तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः ॥ व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥ ५ ॥ स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो यदूत्तमम् ॥ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥

भूतभव्ययोरीशः भूतानां भव्यस्य सुखस्य दाता वा भवः श्रीरुद्रश्च कृष्णं दिदृक्षुर्द्वारकां ययौ ॥ १ ॥ इन्द्र इति सार्द्धद्वयम् ॥ इन्द्रादयः सर्वे कृष्णं दिदृक्षवः द्वारकामुपसंजग्मुः ॥ २ ॥ ३ ॥ वपुषेति ॥ भगवान् येन वपुषा नरलोकमनोरमः सन् सर्वलोकमलापहं यशः सर्वलोकेषु वितेने विस्तृतवांस्तदतिसुन्दरं वपुर्दिदृक्षवस्ते उपसंजग्मुरित्यनुषङ्गः ॥ ४ ॥ तस्यामिति ॥ पश्यतामपि न वितृप्तान्यक्षीणि येषां ते ब्रह्मादयस्तस्यां महतीभिः ऋद्धिभिर्भोग्यभोगोपकरणैः समृद्धायां पूर्णायामत एव भ्राजमानायां शोभमानायां द्वारकायामद्भुतमतिसुन्दरं दर्शनं रूपं यस्य तं कृष्णं व्यचक्षत अपश्यन् ॥ ५ ॥ स्वर्गेति ॥ स्वर्गोद्याने नन्दने उपगैः प्राप्तैः माल्यैः पुष्पैश्छादयन्तः चित्राणि मनोहराणि पदानि अर्थाश्च तत्प्रतिपाद्या यासु ताभिर्गीर्भिर्वाणीभिः जगदीश्वरं यदूत्तमं कृष्णं तुष्टुवुः ॥ ६ ॥

नताः स्मेति ॥ हे नाथ कर्ममयात् उरोर्दढात्पाशात् मुमुक्षुभिर्भावयुक्तैर्भक्तियोगनिष्ठैर्जनैर्यच्चरणारविन्दमन्तर्हृदि चिन्त्यते केवलं न तु दृश्यते इति तत् तव पदारविन्दं दृष्ट्वा वयं बुद्धीन्द्रियादिभिः नताः स्मः नमस्कृतवन्तः अहो भाग्यमित्यर्थः । तत्र बुद्ध्या निश्चयेन इन्द्रियैर्दर्शनादिना प्राणेन च बलहेतुनोपलक्षितेन कायेन दण्डवत्प्रणिपातेन । यद्वा । बुद्ध्यधिष्ठानेन हृदयेन इन्द्रियैः दृग्भ्यां दोर्भ्यां पद्भ्यां चेति प्राणेन प्राणवता देहेनेति जान्वादिसङ्ग्रहः । मनसा चिन्तनेन वचसा उच्चारणेन च प्रणामो बोध्यः । यथाहुः । "दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा । मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥" इति ॥७॥ त्वमिति ॥ हे अजित आस्तामिदानीन्तनमिदमत्यल्पकर्म यतः त्वं तद्गुणस्थः तस्या मायाया गुणेषु रजआदिषु नियन्तृत्वेन स्थितः संस्तया त्रिगुणयात्ममायया दुर्विभाव्यं मनसाऽप्यवितर्क्यं स्वात्मन्येवाधारभूते व्यक्तं महदादिप्रपञ्चं सृजसि अवसि पालयसि लुम्पसि संहरसि च तथाप्येतैः सृष्ट्यादिकर्मभिर्भवान्नाज्यते । तज्जनितपुण्यपापादिभिर्न लिप्यते यत् यस्मात् अनवद्यः अविद्यादिदोषरहितः भवान् अव्यव-

देवा ऊचुः ॥ नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः ॥ यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥७॥ त्वं मायया त्रिगुणयात्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ॥ नैतैर्भवानजित कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥८॥ शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ॥ सत्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥९॥ स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ॥ यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥ १० ॥ यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा ॥ अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परिष्टः ॥ ११ ॥

हिते आवरणरहिते स्वे आत्मस्वरूपे सुखे अभिरतोऽस्ति ॥ ८ ॥ शुद्धिरिति ॥ हे ईड्य स्तुत्य हे ऋषभश्रेष्ठ दुराशयानां रागिणां नृणां विद्या उपासना तदादिभिस्तथा शुद्धिर्न भवति यथा सत्वात्मनां सतां नित्यं श्रवणेन संभृतया पुष्ट्या अभिवृद्धया ते तव यशसि विषये सत्या दृढया श्रद्धया स्यात् परमपावनस्य तव स्वयशसो वितानाय कर्माचरणमिति भावः ॥ ९ ॥ स्यादिति ॥ तवाङ्घ्रिर्नोऽस्माकमशुभाशयानां विषयवासनानां धूमकेतुः दाहकोऽग्निः स्यात् । न चेदमसम्भावितं प्रार्थितं सर्वपुरुषार्थहेतुत्वेन यः क्षेमाय मोक्षाय मुनिभिर्मुमुक्षुभिः प्रेमार्द्रहृदा ऊह्यमानः चिन्त्यमानः यश्चात्मविद्भिः सात्वतैर्भक्तैः स्वरतिक्रमाय स्वर्गमतिक्रम्य वैकुण्ठप्राप्तये तत्र च समविभूतये त्वत्समानैश्वर्यलाभाय व्यूहे वासुदेवादिचतुर्व्यूहोपासनायां सवनशस्त्रिकालमर्चितः ॥ १० ॥ य इति ॥ यश्च प्रयतपाणिभिः संहतहस्तैः हविर्गृहीत्वा त्रय्या निरुक्तेन विधिना इन्द्रादिरूपेण यज्ञपुरुषो भगवान् अध्वराग्नौ आहवनीयादौ याज्ञिकैश्चिन्त्यते यश्च अध्यात्मयोगे आत्मज्ञाने योगिभिः साधकैरात्मावरकरूपां मायां जिज्ञासुभिर्यश्चिन्त्यते । उत-

शब्दोऽपिशब्दार्थे। तथा परमभागवतैर्निरपेक्षभक्तैरपि यः परीष्टः सर्वतः पूजितः स तवाङ्घ्रिरस्माकमशुभाशयधूमकेतुः स्यादित्यनुषङ्गः ॥ ११ ॥ पर्युष्टयेति ॥ अहं यत्र वसामि तत्रैव वसति पर्युषितापीयं वनमाला वसतीति चिन्तयन्ती वनमालया प्रतिपत्निवत् सपत्नीवत् भगवती श्रीर्लक्ष्मीः संस्पर्द्धमाना भवति। उत्प्रेक्षामात्रमेतत्। पत्नि इति ह्रस्व आर्षः। तथापि तां स्पर्द्धमानां श्रियमनादृत्य यो भवान् पर्युष्टया पर्युषितयाप्यमुया वनमालया। इडभावश्छान्दसः। भक्तैरर्पितेयमिति प्रीत्या सुप्रणीतं सुष्ठु संपादितं यथा भवति तथा अर्हणं पूजामाददत् स्वीकृतवान्। तडभाव आर्षः। सुप्रणीतमित्यर्हणविशेषणं वा। तस्य तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुः सदा भूयात् अन्वयान्तरं भावार्थदीपिकायां द्रष्टव्यम् ॥ १२ ॥ केतुरिति ॥ योऽङ्घ्रिः बलिबन्धने त्रिभिर्विक्रमैः त्रिलोकसङ्ग्राहकैर्न्यासैर्युतः तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुः अत्युच्छ्रितो विजयध्वज इव जातः तत्संपादयति त्रिपतत्पताक इति। त्रिषु लोकेषु त्रिधा वा पतन्ती गङ्गा पताका यस्य सः तथा असुरदेवयोश्चम्वोः सेनयोर्यथाक्रमं भयाभयकरः तथा साधुषु स्वर्गाय सुखाय खलेषु असाधुषु चेतराय नरकादिदुःखाय च भवति। स्मैभावाभाव आर्षः। स तव पादः भजतां नोऽस्माकमघं संसारदुःखहेतुं दोषं पुनातु शोध-

पर्युष्टया तव विभो वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ॥ यः सुप्रणीतममुयाऽर्हणमाददन्नो भूयात्सदाङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥ केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ॥ स्वर्गाय साधुषु खलेष्वितराय भूमन्पादः पुनातु भगवन्भजतामघं नः ॥ १३ ॥ नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ॥ कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥ अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥ सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥

यतु निवर्तयतु। अघादिति पाठे तु भजतामिति कर्मणि षष्ठी। भजतोऽस्मान् अघात्पुनातु। तथा च श्रुतिः। "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि" इत्यादिः ॥ १३ ॥ नस्योतेति ॥ मिथुः मिथः अर्द्यमानाः मत्सरादिदोषैः पीड्यमानाः ब्रह्मादयोऽपि तनुभृतो यस्य ते वशे भवन्ति न तु जये पराजये वा स्वतन्त्रा इत्यर्थः। नसि नासिकायामोताः नासिकामाविध्य तत्र रज्जुं प्रवेश्य बद्धाः गावो बलीवर्दा यथा स्वामिनो वशे भवन्ति तथेत्यर्थः। कालस्य कलयितुः प्रवर्तकस्येत्यर्थः। तस्य प्रकृतिपुरुषयोः परस्य पुरुषोत्तमस्य तव चरणो नोऽस्माकं शं सुखं तनोतु ॥ १४ ॥ अस्येति ॥ अस्य जगत उदयादीनां हेतुरसि। कुतः अव्यक्तं प्रकृतिः जीवः पुरुषः महान्महत्तत्वं तेषामपि कालं नियन्तारं त्वामाहुः। "अक्षरात्परतः परः" इत्याद्याः श्रुतयः इति शेषः। किंच योऽयं संवत्सरात्मकः त्रिणाभिः त्रीणि चातुर्मास्यानि नाभयो यस्य सः तथा गभीरः रयो वेगो यस्य सः अखिलस्य जगतः अपचये विनाशाय प्रवृत्तः कालः सोऽपि त्वमेव अतस्त्वमुत्तमपुरुष इति ॥ १५ ॥

त्वत्त इति ॥ त्वत्तः पुरुषोत्तमात् पुमान् पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यया शक्त्या अमोघवीर्यः सर्वथा समर्थः सन् अस्य जगतो गर्भं बीजमिव प्रकृतौ महान्तं धत्ते उत्पादयामासेत्यर्थः । सोऽयं महान् तया शक्त्यानुगतो युक्तः सन्नात्मनः सकाशात् सप्तभिरावरणैर्बहिरुपेतमावृतमाण्डकोशं ससर्ज । त्वयानुगत इति पाठे यया मायया त्वयाधिष्ठितः सन्निति ॥ १६ ॥ तदिति ॥ हे हृषीकपते हे इन्द्रियप्रवर्त्तक यत् यस्मान्मायया उत्था उज्जृम्भिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतान् अर्थान् शब्दादिविषयान् मर्त्यादिशरीरेषु जीवद्वारा जुषन् सेवमानः अनुभवन्नपि । शता आर्षः । तैर्न लिप्तस्तेष्वनासक्तस्त्वं ये त्वन्ये जीवास्ते स्वतः परिहृतात् अध्यासप्राप्तत्वेन वस्तुतः संबन्धरहितात् त्यक्तादपि विषयवर्गात् बिभ्यति वासनामात्रेण बध्यन्ते तत्तस्मात् तस्थुषः स्थावरस्य जगतो जङ्गमस्य च भवानेवाधीशो नियन्ता ईश्वर इत्यर्थः ॥ १७ ॥ अलिप्तत्वमाहुः—स्मायेति ॥ स्मायावलोको मन्दस्मितविलसितोऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायविशेषस्तेन मनोहारि यद्भ्रूमण्डलं

त्वत्तः पुमान्समधिगम्य यया स्ववीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ॥ सोऽयं तयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ १७ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ॥ पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥ विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ॥ आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥ १९ ॥ बादरायणिरुवाच ॥ इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ॥ अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥

तेन प्रहिताः प्रेषिताः ये सौरतमन्त्राः सुरतालापास्तैः शौण्डैः प्रगल्भैः अनङ्गस्य कामस्य बाणैरिव संमोहनैः करणैः कामकलाभिः षोडशसहस्रपत्न्यो यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न विभ्व्यो न समर्था बभूवुः । स भवान्न क्वापि लिप्त इति पूर्वेणैवान्वयः ॥ १८ ॥ तव लीलामृतं चरणामृतं च लोकं पुनात्येवेति भाहुः—विभ्व्य इति ॥ तवामृतरूपा मधुरा या कथा तदेव उदमुदकं वहन्तीति तथाभूताः कीर्तिनद्यः तथा पादावनेजनसरितो गङ्गाद्याश्च त्रिलोक्याः तत्रस्थप्राणिजातस्य शमलानि पापानि हन्तुं विभ्व्यः समर्थाः अत एव शुचिषदः शुचये आत्मविशुद्धयर्थं सीदन्ति क्लिश्यन्ति प्रयतन्ते ते विशुद्धिकामाः आनुश्रवं गुरोरुच्चारणमनुश्रूयत इति अनुश्रवो वेदस्तत्र भवं कीर्तिरूपं तीर्थं श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं नद्यात्मकं चाङ्गसङ्गैरेवं ते तव कीर्तिद्वयमुपस्पृशन्ति सेवन्ते ॥ १९ ॥ इतीति ॥ सेशः ईशेन रुद्रेण सहितः शतधृतिः ब्रह्मा विबुधैः सहेत्येवं हरिमभिष्टूय । दैर्घ्यमार्षम् । प्रणम्य चाम्बरमाश्रितः गगनस्थस्तमभ्यभाषत ॥ २० ॥

भूमेरिति ॥ हे प्रभो हे अशेषात्मन् सर्वात्मन् पुरास्माभिः त्वं भूमेर्भारावताराय विज्ञापितः अभूः । तदस्मद्विज्ञापितं तथैव यथा विज्ञापनमुपपादितं त्वया संपादितम् ॥ २१ ॥ धर्म इति ॥ सत्ये सन्धा अभिसन्धिर्येषां तेषु त्वया धर्मश्च स्थापितः तथा सर्वेषां लोकानां श्रवणकीर्तनादिपराणां जनानां मलं पापमपहन्तीति तथाभूता स्वकीर्त्तिश्च दिक्षु विक्षिप्ता विस्तारिता ॥ २२ ॥ अवतीर्येति ॥ न विद्यते उत्तमं यस्मात्तदनुत्तमं रूपं वपुर्बिभ्रत् बिभ्राणो यदोर्वंशेऽवतीर्य जगतो हिताय उद्दामानि उत्कटानि वृत्तानि विक्रमा येषु तानि कर्माणि अकृथाः त्वं कृतवानसि ॥ २३ ॥ यानीति ॥ हे ईश साधवः मनुष्याः यानि ते तव चरितानि तानि शृण्वन्तः कीर्त्तयन्तश्चाञ्जसा अनायासेनैव कलियुगे तमः अज्ञानं तरिष्यन्ति ॥ २४ ॥ यदुवंश इति ॥ हे पुरुषोत्तम हे प्रभो यदुवंशेऽवतीर्णस्य भवतः पञ्चविंशाधिकं तिलोपश्छान्दसः । शरच्छतं व्यतीयाय व्यतिक्रान्तमभूत् ॥२५॥ नेति ॥ हे अखिलाधार अधुना देवकार्येऽवशेषितं नास्ति इदं कुलं च विप्रशापेन नष्टप्रायमभूत् ॥२६॥ तत इति ॥ हे वैकुण्ठ ततः तस्मात् अवतारकार्यस्य

ब्रह्मोवाच ॥ भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ॥ त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥ धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया ॥ कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥ अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ॥ कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥ यानि ते चरितानीश मनुष्याः साधवः कलौ ॥ शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ॥ शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ॥ २५ ॥ नाधुना तेऽखिलाधार देवकार्यावशेषितम् ॥ कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥ ततः स्वधाम परमं विशस्व यदि मन्यसे ॥ सलोकाल्लोकपालान्नः पाहि वैकुण्ठ किंकरान् ॥२७॥ श्रीभगवानुवाच ॥ अवधारितमेतन्मे यदात्थ विबुधेश्वर ॥ कृतं वः कार्यमखिलं भूमेर्भारोवतारितः ॥ २८ ॥ यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ॥ लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ २९ ॥

सिद्धत्वात् यदि मन्यसे इच्छसि तर्हि परमं सर्वोत्कृष्टं स्वधाम वैकुण्ठं विशस्व याहि । तलार्षः । लोकैः सहितान् किङ्करान्नोऽस्मान् लोकपालान् पाहि अस्मल्लोकगमनेनास्मत्पूजाग्रहणेनास्मान्कृतार्थीकुर्वन्नेव स्वलोकं याहि । संस्तुत इति । हे राजन् एवं ब्रह्मादिभिः विबुधैः मायया मनुजः वस्तुतस्त्वखिलेश्वरो भगवान् कृष्णः संस्तुतः स्तुतिपूर्वकं विज्ञापितः तद्विज्ञापनं प्रतिनन्द्य तान्विबुधानाह स्म ॥ २७ ॥ अवधारितमिति ॥ हे विबुधेश्वर ब्रह्मन् सर्वं कार्यं निष्पन्नमिति यदात्थ त्वं कथयसि तदेतत् मे मयाऽवधारितं निश्चितमेव वो युष्माकमखिलं कार्यं कृतम् । यतो भूमेर्भारोऽवतारितः ॥ २८ ॥ यदिदमिति ॥ वीर्यं युद्धसामर्थ्यं शौर्यं युधि निर्भयत्वं श्रीः धनादिसम्पत् वीर्यशौर्ययुक्तया श्रियोद्धतं वीर्यशौर्ययोः श्रिया सम्पत्त्या उद्धतमिति वा अनिवार्यम् अत एव लोकं जिघृक्षत् नाशयितुमुद्युक्तं यदिदं यादवकुलं तन्मे मया सर्वतः प्रतिरुद्धम् ।

यथा वेलया महार्णवो रुध्यते तथेति ॥ २९ ॥ यदीति ॥ तद् दृप्तानां गर्वितानां यदूनां विपुलं कुलं यद्यसंहृत्याहमस्माल्लोकाल्लोकान्तरं गन्तास्मि गमिष्यामि तदोद्वेलेन उल्लङ्घितमर्यादेनानेन यदुकुलेनायं सर्वोऽपि लोको विनङ्क्ष्यति ॥ ३० ॥ इदानीमिति ॥ इदानीं द्विजशापादस्य कुलस्य नाशः आरब्धः अतः हे अनघ हे ब्रह्मन् एतस्य यदुकुलस्यान्ते नाशे जाते सति वैकुण्ठं यास्यन् तव भवनमपि यास्यामि ॥ ३१ ॥ इतीति ॥ लोकनाथेन कृष्णेनेत्येवमुक्तः स्वयंभूः ब्रह्मा तं कृष्णं प्रणिपत्य देवगणैः सह स्वधाम सत्यलोकं समपद्यत समगात् ॥ ३२ ॥ अथेति ॥ अथ द्वारवत्यां समुत्थितान्महोत्पातान् भगवदिच्छयैवाविर्भूतान् विलोक्य भगवान् यदुवृद्धानाह स्म ॥ ३३ ॥ एत इति ॥ दुरत्ययः अनुल्लङ्घ्यः शापो नोऽस्माकं कुलस्य ब्राह्मणेभ्य आसीत् अत एते सुमहोत्पाताः इह सर्वतो व्युत्तिष्ठन्ति । तङ्भाव आर्षः ॥ ३४ ॥ न वस्तव्यमिति ॥ अतः हे आर्यकाः जीवितुमिच्छद्भिरस्माभिरिह द्वारकायां न वस्तव्यं किं त्वद्यैव प्रभासं यास्यामः । यतस्तन्महापुण्यं तीर्थम् अतो मा चिरं गमनविलम्बं मा कुरुत ।

यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ॥ गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ॥ ३० ॥ इदानीं नाश आरब्धः कुलस्य द्विजशापतः ॥ यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ॥ ३१ ॥ श्रीशुक उवाच ॥ इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम् ॥ सह देवगणैर्देवः स्वधाम समपद्यत ॥ ३२ ॥ अथ तस्यां महोत्पातान्द्वारवत्यां समुत्थितान् ॥ विलोक्य भगवानाह यदुवृद्धान्समागतान् ॥ ३३ ॥ श्रीभगवानुवाच ॥ एते वै सुमहोत्पाता ह्युत्तिष्ठन्तीह सर्वतः ॥ शापश्च नः कुलस्यासीद् ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥ न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव मा चिरम् ॥ ३५ ॥ यत्र स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोडुराट् ॥ विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥ ३६ ॥ वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन्सुरान् ॥ भोजयित्वोशिजो विप्रान्नानागुणवताऽन्धसा ॥ ३७ ॥ तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै ॥ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ ३८ ॥

अत्रायमाशयः । एते देवांशाः स्वाधिकारानेवार्हन्ति न तु सद्यो मोक्षम् । द्वारवत्यां तु मृता मुच्येरन् अतोऽभ्युदयफलं प्रभासं नेष्यामीति स्वामिपादाः । परे तु मत्परिकरैर्विशिष्टैव द्वारका सदा विराजतु तत्राहं सदास्म्येव मत्परिकरेषु प्रविष्टान् देवान् योगबलेन गुप्तं निष्कास्य प्रभासं नीत्वा मौसलसंग्राममिषेण स्वर्गं प्रापयिष्यामीत्याशयमाहुः ॥ ३५ ॥ यत्रेति ॥ दक्षशापाद्यक्ष्मणा क्षयरोगेण गृहीत उडुपश्चन्द्रो यत्र प्रभासे स्नानमात्रं कृत्वा किल्बिषात् क्षयरोगाद्विमुक्तः सन् भूयः सद्य एव कलोदयं कलावृद्धिं भेजे ॥ ३६ ॥ वयमिति युग्मम् ॥ वयमपि तस्मिन् तीर्थे आप्लुत्य स्नात्वा पितॄन् सुरांश्च तर्पयित्वा नानागुणवता षड्रसोपेतेनान्धसा अन्नेन उशिजः कमनीयान् उत्तमान् विप्रान् भोजयित्वा तेषु पात्रेषु क्षेत्रेष्विव बीजानि बहुफलायेति महादानान्युप्त्वा तेभ्यो दत्त्वा तैर्दानैर्वृजिनानि दुःखानि तरिष्यामः ॥ ३७ ॥ ३८ ॥

एवमिति ॥ हे कुरुनन्दन एवं भगवता आदिष्टा यादवाः तीर्थं प्रभासं गन्तुं कृतधियः स्यन्दनान् रथान् समयूजयुन् वाहैर्युक्तान् चक्रुरित्यर्थः ॥ ३९ ॥ तदिति युग्मम् ॥ हे राजन् घोराणि अरिष्टानि उत्पातान् दृष्ट्वा भगवता उदितम् उक्तं वचनं च श्रुत्वा तत् तेषां प्रभासगमनोद्योगं च निरीक्ष्य नित्यं कृष्णमनुव्रतः सेवमान उद्धवः जगतामीश्वरेश्वरं श्रीकृष्णं विविक्ते एकान्ते उपसङ्गम्य शिरसा तत्पादौ प्रणम्य प्राञ्जलिः संस्तमभाषत ॥ ४० ॥ ४१ ॥ देवेति सार्द्धम् ॥ हे देवदेवेश हे योगेश हे पुण्यश्रवणकीर्तन यत् यतः भवान् ईश्वरः अतः समर्थोऽपि यत् यस्मात् विप्रशापं न प्रत्यहन् न प्रतिहतवान् । अतः नूनम् एतत्कुलं संहृत्य लोकं मर्त्यलोकं संत्यक्ष्यते तद्धार्षः ॥ ४२ ॥ नाहमिति ॥ हे केशव हे नाथ तवाङ्घ्रिकमलमहं क्षणार्द्धमपि त्युक्तुं नोत्सहे न मृष्यामि । अतः मामपि स्वधाम नय ॥ ४३ ॥ तवेति युग्मम् ॥ हे कृष्ण नृणां कर्णयोः

श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टा यादवाः कुलनन्दन ॥ गन्तुं कृतधियस्तीर्थं स्यन्दनान्समयूयुजन् ॥३९॥ तन्निरीक्ष्योद्धवो राजञ्छ्रुत्वा भगवतोदितम् ॥ दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥४०॥ विविक्तउपसङ्गम्य जगतामीश्वरेश्वरम् ॥ प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥४१॥ उद्धव उवाच ॥ देवदेवेश योगेश पुण्यश्रवणकीर्तन ॥ संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवान् ॥ विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥४२॥ नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ॥ त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥४३॥ तव विक्रीडितं कृष्ण नृणां परममङ्गलम् ॥ कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥४४॥ शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ॥ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ ४५ ॥ त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः ॥ उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥४६॥ वाताशना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः ॥ ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥ ४७ ॥ वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ॥ त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ४८ ॥ स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ॥ गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनम् ॥ ४९ ॥

पीयूषममृतमिव मधुरं परममङ्गलं तव विक्रीडितमास्वाद्य श्रुत्वाऽपि यदि जनोऽन्यस्पृहां धनपुत्रकलत्राद्यासक्तिं त्यजति तदा ये हि शय्यासनादिषु त्वां भक्ताः नित्यं सेवितवन्तः । कर्मणोऽविवक्षणात्कर्तरि क्तः पश्चात्कर्मयोगः । ते वयं प्रियमात्मानं त्वां कथं त्यजेम ॥ ४४ ॥ ४५ ॥ त्वयेति ॥ त्वया उपभुक्तैः उपभुज्य त्यक्तैः स्रगादिभिश्चर्चिता अलंकृताः त्वदुच्छिष्टभोजिनश्च दासा वयं हि निश्चितं त्वन्मायां जयेम ॥ ४६ ॥ वाताशना इति ॥ वाताशनाः वायुभक्षाः । वातरशना इति पाठे दिगम्बराः श्रमणाः त्वद्भजनादौ कृतश्रमाश्च ऊर्ध्वमन्थिनः ऊर्द्ध्वरेतसः स्त्रीसंबन्धरहिताः शान्ताः कामक्रोधादिरहिताः संन्यासिनः त्यक्तभोगाः अमलाः निर्धूतपापाः एवंभूता ऋषयोऽक्षरब्रह्माख्यं तव धाम यान्ति ॥ ४७ ॥ वयमिति युग्मम् ॥ हे महायोगिन् वयम् इह कर्ममार्गेषु संसारेषु देवनरादिषु भ्रमन्तोऽपि तावकैस्त्वद्भक्तैः सह तव कृतानि कर्माणि गदितानि

उपदिष्टानि । गत्यादीनां द्वन्द्वैकवद्भावः । गत्यादि च यच्चान्यन्नृलोकविडम्बनं मनुष्यानुकरणं तच्च स्मरन्तः कीर्त्तयन्तश्च एवं त्वद्वार्त्तया दुस्तरं तमः संसारदुःखं तत्कारणमविद्यां च तरिष्यामः ॥ ४८ ॥ ४९ ॥ एवमिति ॥ हे राजन् एवं विज्ञापितो भगवान् एकान्तिनमनन्यदैवतमत एव प्रियं भृत्यं सेवकमुद्धवं समभाषत ॥ ५० ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्यारचयत्षष्ठे गङ्गासहायकः ॥६॥ सप्तमे त्ववधूतेतिहासे हरिरवर्णयत् ॥ उद्धवाय गुरूनष्टावत्र श्लोकाः कृताद्रयः ॥ सप्तोवाचेत्यथार्द्धाब्यास्तर्कशैला अनुष्टुभः ॥ ७ ॥ यदिति ॥ हे महाभाग मां प्रति संहृत्यैतत्कुलमित्यादि यदात्थ तन्मे मम चिकीर्षितं कर्तुमिष्टमेव यतो ब्रह्मादयो लोकपाला अपि मे स्वर्वासं वैकुण्ठगमनमभिकाङ्क्षिणो वर्त्तन्ते । द्वितीयाऽऽर्षी । तदर्हमिति ज्ञापकाद्वा ॥१॥ मयेति ॥ ब्रह्मणा प्रार्थितोऽहमंशेन रामेण सह यदर्थमवतीर्णस्तद्भूभारहरणरूपं देवकार्यमशेषतः सर्वं मया निष्पादितम् । हि प्रसिद्धमेतत् ॥ २ ॥ कुलमिति ॥ यदिदं भूभारतयाऽवशिष्टं कुलं दृश्यते तदपि विप्रशापेन निर्दग्धं नष्टप्रायमन्योन्यविग्रहात्

श्रीशुक उवाच ॥ एवं विज्ञापितो राजन् भगवान् देवकीसुतः ॥ एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥५०॥ इति श्री० महापुराणे एकादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ श्रीभगवानुवाच ॥ यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ॥ ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः ॥१॥ मया निष्पादितं ह्यत्र देवकार्यमशेषतः ॥ तदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः ॥ २ ॥ कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योऽन्यविग्रहात् ॥ समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ ३ ॥ तर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ॥ भविष्यत्यचिरात्साधो कलिनापि निराकृतः ॥ ४ ॥ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ॥ जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥ ५ ॥ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ॥ मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम् ॥ ६ ॥ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ॥ नश्वरं गृह्यमाणं च विद्धि माया मनोमयम् ॥ ७ ॥ पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ॥ कर्माकर्म विकर्मेति गुणदोषधियो भिदा ॥ ८ ॥

नङ्क्ष्यत्येव समुद्र इति स्पष्टम् ॥ ३ ॥ तर्हीति ॥ हे साधो अयं भूलोको यर्ह्येव मया त्यक्तो भविष्यति तदैव कलिना निराकृतः अभिभूतः सन्नष्टमङ्गलो भविष्यति ॥ ४ ॥ नेति ॥ मया महीतले त्यक्ते सति कलियुगप्रवेशस्तस्मिन् सति अधर्मे रुचिर्यस्य तथाभूतो जनो भविष्यति अतः साधुत्वात् हे भद्र त्वयेह न वस्तव्यम् ॥ ५ ॥ त्वामिति ॥ स्वजनादिषु सर्वं स्नेहं परित्यज्य मनो मयि परमेश्वरे सम्यगावेश्य सर्वत्र समदृक् समं मामेवैकं पश्यन् गां भूमिं विचरस्व । तङार्षः ॥ ६ ॥ यदिदमिति ॥ यदिदं मनआदिभिः शोभनाऽशोभनतया गृह्यमाणं तत् मायामनोमयम् अविद्यायुक्तेन मनसैव तथा कल्पितम् अतः तत्सर्वं नश्वरं विद्धि । यद्वा । यदिदं मनआदिभिर्गृह्यमाणं तन्मनोमयम् अनो मायेति विद्धि ॥ ७ ॥ मनोमयत्वे हेतुः—पुंस इति ॥ अयुक्तस्य तत्वविचारमकुर्वतः विक्षिप्तमनसः पुंसो नानादेवादिरूपो घटपटादिरूपश्चार्थो विषयोऽस्य तथाभूतो भ्रमः अहं-

ममात्मको ध्यासो भवति यस्यैवं भ्रमो भवति स एव पुमान् गुणदोषभाक् पुण्यपापसुखदुःखादिमान् भवति । ननु वेद एव विधिनिषेधाभ्यां सत्यत्वमाहेति चेत् तस्यैव भ्रमविजृम्भितगुणदोषधियः पुंसः कर्म विहितम् अकर्म तल्लोपः विकर्म निषिद्धमिति भिदा भेदः भवति अविद्यावादिषय एव वेद इत्यर्थः ॥ ८ ॥ तस्मादिति ॥ तस्मात् युक्तो वशीकृतः इन्द्रियग्रामो येन सः युक्तचित्तो वशीकृतचित्तश्च संस्त्वम् इदं देहेन्द्रियात्मकं जगत् आत्मनि विततमीक्षस्व आत्मानं च मय्यधीश्वरे अ[illegible] मदभिन्नरूपेणेक्षस्व ॥ ९ ॥ नन्वेवं युक्तचित्तत्वेन कर्माकरणे देवादयो विघ्नान् करिष्यन्ति तत्राह–ज्ञानेति ॥ ज्ञानं वेदतात्पर्यविषयः विज्ञानं तदर्थानुभवः ताभ्यां सम्यग्युक्तस्ततश्चात्मानुभवेनैव तुष्टचित्तः अतः शरीरिणां देवादीनामात्मभूतः अतस्तत्कृतान्तरायैर्न विहन्यसे । अयं भावः । यावदात्मानुभवं यथावर्णाश्रमं कर्माणि कुर्यादेव । आत्मानुभावानन्तरं तु सर्वात्मभूतत्वान्न कोऽपि तद्विघ्नानाचरतीति । तथा च श्रुतिः । " तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति " इति ॥१०॥ न च ज्ञाने जातेऽपि यथेष्टाचरणप्रसङ्ग इत्याह–दोषबुद्ध्येति ॥ उभयातीतो गुणदोषबुद्ध्यतीतोऽपि प्राक्तनसंस्कारवशान्निषेधान्निवर्त्तत एव परंतु न दोषबुद्ध्या एवं विहितमपि प्रायशः करोति परंतु न गुण-

तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ॥ आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरं ॥ ९ ॥ ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ॥
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥ दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ॥ गुणबुद्ध्या च विहितं न करोति यथार्भकः
॥ ११ ॥ सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ॥ पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥१२॥ श्रीशुक उवाच ॥ इत्यादिष्टो भगवता
महाभागवतो नृप ॥ उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥ १३ ॥ उद्धव उवाच ॥ योगेश योगविन्यास योगात्मन् योगसंभव ॥ निःश्रेय-
साय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥१४॥ त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः ॥ सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥१५॥

बुद्ध्या स्वर्गादिफलोद्देशेनेत्यर्थः । अर्भको यथा संकल्पविकल्परहित एव किंचित्करोति कुतश्चिन्निवर्त्तते च तद्वदित्यर्थः ॥११॥ सर्वभूतेति ॥ पुनः न विपद्येत संसारविपत्तिं न प्राप्नुयात् । स्पष्टमन्यत् ॥ १२ ॥ इतीति ॥ हे नृप इत्येवं भगवता आदिष्टः महाभागवतः तत्वं जिज्ञासुः उद्धवः अच्युतं प्रणिपत्याह स्म ॥ १३ ॥ योगेशेति ॥ हे योगेश योगफलदायिन् योगविदां न्यासो नामातिगोप्यो निक्षेपविशेषः । यद्वा । योगो विन्यस्यते क्रियते यस्मिन् सः । हे योगेशात्मन् हे योगानामुक्तानां संभवः प्रवृत्तिर्यस्मात् स योगसंभव एतैः सम्बोधनैर्नाहं त्वदुपदिष्टत्यागाधिकारीति सूचितम् । तदाह । त्वया मे मम निःश्रेयसाय मोक्षाय संन्यासलक्षणः अप्रत्यापत्तिरूपः त्यागः प्रोक्तः ॥ १४ ॥ त्याग इति ॥ हे भूमन् कामानां विषयाणामयं त्यागो विषयात्मभिः विषयासक्तचित्तैर्दुष्करः दुःशब्दो निषेधे कर्तुमशक्य इत्यर्थः । मायाविपन्नेऽन्यत्र कृपया तव भक्तैः कदाचित्स त्यागः सुकरो भवेदपि । हे सर्वात्मन् सर्वनियन्तः त्वय्यभक्तैस्तु सुतरां दुष्कर इति मे मतिः निश्चयः ॥१५॥

सोऽहमिति ॥ यं प्रति त्यागाद्युपदिष्टं सोऽहं मूढमतिः मोहितचित्तः सानुबन्धे पुत्रकलत्रादिसहिते त्वन्मायया विरचिते आत्मनि देहे अहमिति ममेतिच विगाढो निमग्नः आसक्तः अतो हे भगवन् त्वं तु सर्वं परित्यज्येति यद्भगवता गदितं तत्तु यथाहमञ्जसा सुखेन साधयामि तथा भृत्यं मामनुशाधि शिक्षय ॥१६॥ सत्यस्येति ॥ हे ईश सत्यस्य परमार्थभूतस्य आत्मनस्तव आत्मनो मां प्रति वक्तारं स्वदृशः स्वतःसिद्धज्ञानात्त्वत्तोऽन्यं विबुधेषु देवेषु अपि नानुचक्षे न पश्यामि । यतः सर्व एव इमे तनुभृतः ब्रह्मादयः तव मायया विमोहितधियः अतः बहिस्थेषु देहपुत्रादिषु अर्थभावाः परमार्थबुद्धयः सन्ति ॥ १७ ॥ तस्मादिति ॥ तस्मात् निर्विण्णा सर्वतो विरक्ता धीर्यस्य सः वृजिनैर्दुःखैरभितप्तः अहम् अनवद्यं मोहादिदोषरहितं नास्त्यन्तः कालतः पारश्च देशतो यस्य तं सर्वज्ञम् ईश्वरं कालादिभिरकुण्ठो विकुण्ठलोको धिष्ण्यं स्थानं यस्य तम् उ ह हे भगवन् । हकारोत्तराऽ कारगौरवाय वृकारो युक्त इव पठनीयः । अहो इति पाठो वा । नरसखं जीवहितकरं नारायणं शरणं प्रपद्ये ॥१८॥ प्रायेणेति ॥ ये लोके लोकतत्वस्य

सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ॥ तत्त्वञ्जसा निगदितं भवता यथाहं संसाधयामि भगवन् ननु शाधि भृत्यम् ॥ १६ ॥ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ॥ सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥ तस्मात्भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम् ॥ निर्विण्णधीरहमु ह वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥ श्रीभगवानुवाच ॥ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ॥ समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥ आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ॥ यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥ पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः ॥ आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥ एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ॥ बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥

परमार्थस्य विचक्षणाः परीक्षकास्ते आत्मना एव गुरूपदेशं विनैव विवेकबुद्ध्यैवात्मानमशुभाशयात् । विषयवासनातः समुद्धरन्ति । हीति प्रसिद्धिं सूचयति ॥ १९ ॥ आत्मन इति ॥ पश्वादिशरीरेऽप्यात्मनो गुरुर्हिताहितचिन्तकः आत्मैव पुरुषस्य शरीरे तु विशेषत आत्मनो गुरुरात्मैव यत् यस्मादसौ पुरुषः अधिकारित्वात् प्रत्यक्षानुमानाभ्यां श्रेयः परमपुरुषार्थभूतमात्मानमनुविन्दते ॥ २० ॥ पुरुषत्वे चेति ॥ पुरुषत्वे मनुष्यजन्मनि साङ्ख्ययोगाभ्यां विचक्षणाः निपुणबुद्धयः अत एव धीरा विवेकिनः पुरुषाः सर्वाभिः शक्तिभिरुपबृंहितं पूर्णमात्मानमाविस्तरां प्रपश्यन्ति । तथा च श्रुतिः । "पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति" इत्यादिः॥२१॥ एकेति ॥ एकद्वित्र्यादिपादवत्यः पुरः शरीराणि मया सृष्टास्तास्तासां मध्ये पौरुषी मानुषी तनुर्मे प्रिया पुरुषार्थसाधकत्वात् ॥ २२ ॥

अत्रेति ॥ अत्र पौरुष्यां पुरि युक्ताः अप्रमत्ताः पुरुषाः चक्षुषा अग्राह्यं ग्राह्येभ्यो व्यतिरिक्तं वा मामात्मानमद्धा साक्षात् मृगयन्ति । मार्गणे प्रकारद्वयमाह । गृह्यमाणैर्गुणैर्बुद्ध्यादिभिर्हेतुभिः जडानां बुद्ध्यादीनां प्रकाशः स्वप्रकाशमेकं विना न घटत इत्यनुपपत्तिमुखेन लक्षकैः तथा तैरेव लिङ्गैर्व्याप्तिमुखेनानुमानत ईश्वरं प्रवर्त्तकं मृगयन्ते बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदित्यनुमानप्रयोगः । न चैतावता आत्मा आनुमानिक इति शङ्क्यम् । देहादिव्यतिरिक्तत्वंपदार्थशुद्धिमात्रस्यैवानुमानेन विवक्षितत्वात् ॥ २३ ॥ अत्रेति ॥ अत्र विषये अवधूतस्य अमिततेजसः परमविवेकिनो यदोश्च संवादरूपमिमं वक्ष्यमाणं पुरातनमितिहासं वृद्धा उदाहरन्ति दृष्टान्ततया वर्णयन्ति ॥ २४ ॥ अवधूतमिति ॥ अवधूतम् अभ्यङ्गादिसंस्काररहितदेहं कविं विवेकिनम् अत एव अकुतोभयं निर्भयं विचरन्तं तरुणं कञ्चित् द्विज" योगर्धिमापुरुभर्यी यदुहैहयाद्याः " इत्युक्तत्वात् दत्तात्रेयमिति ज्ञेयम् । निरीक्ष्य धर्मवित् यदुः पप्रच्छ ॥ २५ ॥ कुत इति ॥ हे ब्रह्मन् अकर्तुः कर्माण्यकुर्वतस्तवेयं सुविशारदा अतिनिपुणा

अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ॥ २३ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ अवधूतस्य संवादं यदोरमिततेजसः ॥ २४ ॥ अवधूतं द्विजं कंचित् चरन्तमकुतोभयम् ॥ कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥ २५ ॥ यदुरुवाच ॥ कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ॥ यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥ २६ ॥ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ॥ हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥ त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ॥ न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥२८॥ जनेषु दह्यमानेषु कामलोभदवाग्निना ॥ न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः ॥२९॥ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ॥ ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥३०॥ श्रीभगवानुवाच ॥ यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ॥ पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥

सर्वलोकविलक्षणा बुद्धिः कुतो जातेति शेषः । यां बुद्धिमासाद्य प्राप्य विद्वानपि भवान् बालवल्लोकं चरति ॥ २६ ॥ प्राय इति ॥ प्रायः मानवाः धर्मादिषु तथा विवित्सायां तत्तत्साधनविचारे आत्मविचारे च आयुरादेर्हेतुना कामनयैव समीहन्ते प्रवर्त्तन्ते ॥ २७ ॥ त्वमिति ॥ त्वं तु कल्पः समर्थः कविर्ज्ञानी दक्षो निपुणः सुभगः सुन्दरः अमृततुल्यमधुरभाषणश्चेति मितभाषण इति च पाठः । जडादिवद्वर्तमानो न किंचिदपीहसे इच्छसि अतो नैव कस्यापि कर्मणः कर्ता भवसि ॥ २८ ॥ जनेष्विति ॥ कामलोभरूपदवाग्निना दह्यमानेषु जनेषु मध्ये कामाद्यग्निना मुक्तस्त्वं गङ्गाम्भस्थो द्विप इव न तप्यसे ॥ २९ ॥ त्वं हीति ॥ हे ब्रह्मन् स्पर्शविहीनस्य विषयभोगरहितस्य केवलात्मनः निःसङ्गस्य भवतः आत्मनि मनस्येव वर्तमानं बहिरप्रकटम् आनन्दस्य कारणं पृच्छतां नोऽस्माकं त्वं ब्रूहि ॥ ३० ॥ यदुनेति ॥ ब्रह्मण्येन सुमेधसा यदुनैवं

सभाजितः पृष्टश्च महाभागो द्विजः प्रश्रयेण विनयेनावनतं यदुं प्राह स्म ॥ ३१ ॥ सन्तीति ॥ हे राजन् बुद्ध्यैवोपाश्रिताः स्वीकृता न तूपदेशेनेत्यर्थः । बहवो गुरवः सन्ति तत्र यतो येभ्यो गुरुभ्यो बुद्धिमुपादाय शिक्षित्वा तापत्रयान्मुक्त इह भूलोके अटामि पर्यटामि तान् गुरून् शृणु ॥ ३२ ॥ पृथिवीति ॥ मधुकृत् भ्रमरः मधुमक्षिका च । स्पष्टमन्यत् ॥३३॥ मधुहेति ॥ मधुहा मधुहर्ता सुपेशकृत् शोभनं रूपं कीटस्य करोतीति तथा । स्पष्टमन्यत् ॥ ३४ ॥ एते इति ॥ हे राजन् एते चतुर्विंशतिः मे मया गुरवः आश्रिताः गुरुत्वेन बुद्ध्या स्वीकृताः एतेषां वृत्तिभिः आत्मनः स्वस्येह शिक्षाः शिक्षणीयानर्थान्हेयोपादेयादीन् अन्वशिक्षं ज्ञातवानस्मि । तङ्भाव आर्षः । एवमग्रेऽप्यत्र प्रकरणे शिक्षेर्बोध्यम् ॥ ३५ ॥ यत इति ॥ हे नाहुषात्मज ययातिपुत्र हे पुरुषव्याघ्र यतो यदनुशिक्षामि यथा वानुशिक्षामि तत्तथा निबोध ते तुभ्यं कथयामि ॥ ३६ ॥ तत्र मार्गपर्वतवृक्षरूपायाः क्षितेः शिक्षितमाह–भूतैरिति ॥ दैववशाः नृपादयः तेषामनुगैर्भूतैः प्राणिभिराक्रम्यमाणः पीड्यमानोऽपि धीरः अनुद्विग्नचित्तः विद्वान् भूतानां

ब्राह्मण उवाच ॥ सन्ति मे गुरवो राजन्बहवो बुद्ध्युपाश्रिताः ॥ यतो बुद्धिमुपादाय मुक्तोऽटामीह ताञ्छृणु॥३२॥ पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ॥ कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥३३॥ मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ॥ कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥ एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ॥ शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ३५ ॥ यतो यदनुशिक्षामि यथा वा नाहुषात्मज ॥ तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ॥ ३६ ॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ॥ तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ ३७ ॥ शश्वत्परार्थसर्वेहः परार्थैकान्तसंभवः ॥ साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥ प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः ॥ ज्ञानं यथा न नश्येत नावकीर्येत वाङ् मनः ॥ ३९ ॥

दैववशानुगतत्वं जानन् पुरुषो धर्ममार्गात् न चलेत् । यथा जनैः पादाघातादिभिः पीड्यमानापि भूमिर्न प्रचलति तथेति क्षमारूपं क्षितेर्व्रतमहमन्वशिक्षम् ॥३७॥ शश्वदिति ॥ सर्वदा परार्थाः सर्वा ईहा भूधारणनिर्झरोत्क्रमणस्वोत्पन्नरत्नादिप्रदानरूपाः चेष्टा यस्य सः तथा परार्थे एवैकान्ततः संभवो जन्म यस्य सः एवंभूतः साधुः स्यादिति भूभृतः पर्वतात् शिक्षेत शिक्षया च एवंभूतो भवेत् । तथा नगस्य वृक्षस्य शिष्यः सन् परात्मतां पराधीनतां शिक्षेत । वृक्षो यथा परैरवखण्ड्योत्पाट्य वा नयन्तमप्यनुमन्यते तद्वदित्यर्थः ॥ ३८ ॥ आन्तरबाह्यरूपवायोः शिक्षामाह–प्राणेति ॥ प्राणो ह्याहारादिमात्रेणैव वर्तते रूपरसादीनिन्द्रियविषयांस्तु नापेक्षते तथा मुनिरपि प्राणधारणोपयुक्तया वृत्त्या आजीविकया वर्तेत न त्विन्द्रियप्रियैः शब्दादिविषयैरिन्द्रियाणि लालयेदिति शेषः । यथा प्राणवृत्तिकरणेन ज्ञानं न नश्येत् । यथा वाङ् मनश्च नावकीर्येत न विक्षिप्येत तथा कुर्यात् । अन्यथा च प्राणवृत्त्यभावेन मनोग्लान्या ज्ञानं नश्येत् । इन्द्रियलालनेन तु वाङ्मनसयोर्विक्षेपो भवेत् ॥ ३९ ॥

विषयेष्विति ॥ वायुर्यथा सर्वत्र प्रविशन्नपि न क्वापि विषज्जते एवं गुणदोषव्यपेतात्मा सुखदुःखादिचिन्ताशून्यचित्तः सन् योगी नानाविधशीतोष्णादिधर्मयुक्तेष्वपि विषयेषु आविशन् तान् भुञ्जानोऽपि न विषज्जेत तत्रासक्तिं न कुर्यादित्यर्थः । न हि वायुर्वने दहने वा सज्जते तद्वत् ॥ ४० ॥ पार्थिवेष्विति ॥ आत्मदृक् पार्थिवेषु इह देहेषु प्रविष्टस्तद्गुणाश्रयः देवत्वमनुष्यत्वस्थूलत्वकृशत्वादिदेहधर्मयोगितया प्रतीयमानोऽपि योगी तैर्गुणैर्न युज्यते देवोऽहं मनुष्योऽहं स्थूलोऽहं कृशोऽहमिति नाभिमन्यते । वायुर्यथा सुरभ्यादिगन्धाश्रयतया प्रतीयमानोऽपि वस्तुतो गन्धादेः पार्थिवावयवाश्रयत्वान्न तद्योगी तद्वदित्यर्थः ॥ ४१ ॥ अन्तरिति ॥ अन्तर्हितश्च देहान्तर्गतोऽपि मुनिः विततस्य सर्वगतस्य आत्मनः स्थिरजङ्गमेषु समन्वयेन या व्याप्तिस्तया ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया नभस्त्वं नभस्तुल्यत्वं तेन च देहाद्यसङ्गमत एवाव्यवच्छेदमवियोगं च भावयेत् । यथा नभसः सर्वगतस्यापि न घटादिभिः सङ्गः परिच्छेदो वा एवमात्मनोऽपि न संभवति ॥४२॥ तेज इति ॥ वायुना ईरितैः प्रेरितैर्मेघौघैर्यथा नभो न स्पृश्यते तद्वत्कालेन सृष्टैर्गुणैः सत्वादिगुणकार्यैः तेजश्च आपश्च अन्नं पृथिवी च तन्मयैर्देहेन्द्रियादिभिः पुमान् जीवोऽपि न स्पृश्यते न लिप्यते ॥ ४३ ॥ स्वच्छ इति ॥ स्वच्छो

विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः ॥ गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥४०॥ पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ ४१ ॥ अन्तर्हितश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत् ॥४२॥ तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥४३॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ॥ मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥ ४४ ॥ तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ॥ सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ४५ ॥ क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् ॥ भुङ्क्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभम् ॥ ४६ ॥

निर्मलः प्रकृतितः स्वभावतः स्निग्धो जनेषु स्नेहेनोपकारकः माधुर्यः मधुरालापी । अर्शआद्यजन्तः । नृणां तीर्थभूः पावित्र्यस्थानम् अपां मित्रमुदकतुल्यो मुनिः ईक्षादिभिर्जनं पुनाति । अपान्मित्रमिति पाठे तु पापात्सखायं पुनातीत्यर्थः । अत्र पाठे स्वच्छत्वादिगुणैरर्थादुदकसादृश्यं ज्ञातव्यम् ॥ ४४ ॥ तेजस्वीति ॥ स्वतः तेजस्वी तपसा च दीप्तः दुर्धर्षः अक्षोभ्यः स चासावुदरभाजनश्चापरिग्रहो युक्तात्मा योगी सर्वभक्षोऽपि यद्यपि तस्य निषिद्धभक्षणं न संभवति तथापि यदि कदाचित्प्रमादाद्भक्षयेत्तदपि मलं तन्निमित्तं पापं नादत्ते न प्राप्नोति । यथा तेजआदियुक्तोऽग्निरयुक्तमपि दहन्न तद्दोषभाग्भवति तथेत्यर्थः ॥ ४५ ॥ क्वचिदिति ॥ अग्निर्यथा क्वचित् काष्ठभस्मादिषु छन्नो भवति क्वचिच्च काष्ठादिष्वारूढः स्पष्टो भवति तथा श्रेय इच्छतामुपास्यो भवति । दातॄणां होमादिकर्तॄणां प्रागुत्तराशुभं भूतं भविष्यच्च पापं दहन् सर्वत्र परेच्छयैव हुतं भुङ्क्ते तथैव मुनिरपि भवतीति ॥ ४६ ॥

स्वमाययेति ॥ अग्निर्यथा स्वत आकारविशेषरहितोऽपि एधसि काष्ठे स्थितस्तत्तत्समानरूपो दीर्घत्ववक्रत्वादिकाष्ठगुणकः प्रतीयत एवं विभुः परमात्मा स्वत आकारविशेषरहितोऽपि स्वमायया सृष्टमिदं सदसल्लक्षणं देवतिर्यगादिशरीरं प्रविष्टस्तथा प्रतीयते न तस्य स्वाभाविकं नीचोच्चत्वादि किन्तु देहोपाधिकमेवेति भावयेदिति ॥ ४७ ॥ चन्द्राच्छिक्षितमाह—विसर्गाद्या इति ॥ अव्यक्तवर्त्मना अलक्षितवेगेन कालेन देहस्यैव विसर्गो जन्म तदाद्याः श्मशानं मरणं तत्पर्यन्ताः भावा विकारा भवन्ति न त्वात्मनः। यथा कलानामेवोत्पत्त्यादयो भवन्ति न चन्द्रस्य तथेत्यर्थः। तत्रेयं ज्योतिःशास्त्रप्रक्रिया। आप्यमण्डलः चन्द्रः खे तिष्ठति न तत्र स्वतः प्रकाशोऽस्ति ततोऽतिदूरे सूर्यः। तत्र सूर्यप्रकाशस्य यावानंशश्चन्द्रे प्रतिबिम्बितो लोकैर्दृश्यते तावानेव चन्द्रः प्रतीयते तत्र सूर्याचन्द्रयोरूर्ध्वाधरभावे उपरि स्थितस्य सूर्यस्य प्रकाशश्चन्द्रस्योर्ध्वदेशे पतति अधश्च तच्छाया भवतीति न चन्द्रो लोकैर्न दृश्यते सा अमावास्या। अथ षष्टिघटकाभिश्चन्द्रे नक्षत्रान्तरं गच्छति ऊर्ध्वाधरभावे ईषन्निवृत्ते सूर्यस्य पञ्चदशो भागः प्रतिबिम्बितो दृश्यते सा प्रतिपत्संज्ञा चन्द्रस्य प्रथमा कलोच्यते। एवं क्रमात्पञ्चदशभिर्दिनैश्चन्द्रसंमुखे सूर्यः सर्वः प्रतिबिम्बितो दृश्यते सा पूर्णिमा। ततः क्रमात्पुनर्मण्डलयोर्विषमस्थित्या कलाह्रासः।

स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ॥ प्रविष्ट ईयते तत्तत्सरूपोऽग्निरिवैधसि ॥ ४७ ॥ विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः ॥ कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥ कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ ॥ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥ ४९ ॥ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ॥ न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ ५० ॥ बुध्यते स्वेन भेदेन व्यक्तिस्थ इव तद्गतः ॥ लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत् ॥ ५१ ॥

तत्र यथा कलानामेवोत्पत्तिह्रासौ न तु आप्यमण्डलस्य तथा देहानामेव जन्मादयो न त्वात्मनः ॥ ४८ ॥ कालेनेति ॥ ओघवत् नदीप्रवाहवद्वेगो यस्य तेन कालेन आत्मनः संबन्धिनां भूतानां देहानां प्रभवाप्ययौ उत्पत्तिविनाशौ नित्यौ प्रतिक्षणं भवन्तावपि न दृश्येते। यथाग्नेरर्चिषां ज्वालानामुत्पत्तिविनाशौ प्रतिक्षणं भवतः परन्तु नैव दृश्येते तथेत्यर्थः। इति पुनरग्निदृष्टान्तेन वैराग्यार्थं देहादेः क्षणभङ्गुरता दर्शिता ॥ ४९ ॥ गुणैरिति ॥ गोपतिः सूर्यो यथा गोभिः रश्मिभिः गाः जलानि यथाकालं, ग्रीष्मादिकाले आदत्ते वर्षाकाले च विमुञ्चति तत्राभिनिवेशं च न करोति। एवं योगी देहाद्व्यतिरिक्तात्मानुसन्धानपरः गुणैरिन्द्रियैर्गुणान् शब्दादिविषयान् उपादत्ते स्वीकरोति। यथाकालम् अर्थिन्यागते सति विषयान् विमुञ्चति ददाति च परंतु तेषु न युज्यते इदं लब्धमिदं दत्तमित्यभिनिवेशं न करोतीति ॥ ५० ॥ बुध्यत इति ॥ व्यनक्तीति व्यक्तिरुपाधिः जलादिः। क्तिच् व्यज्यतेऽनया इति क्तिन् वा। तत्रस्थः तत्र प्रतिबिम्बितः अर्को यथा वस्तुत एकोऽपि स्थूलमतिभिस्तद्गत इव भेदेन लक्ष्यते तथा देहाद्युपाधिप्रविष्टः स्वेन रूपेणैकोऽप्यात्मा स्थूलमतिभिर्देहाद्यात्माभिमानिभिर्भेदेनैव बुद्ध्यते वस्तुतस्तूभयोरेकत्वादित्यर्थः ॥ ५१ ॥

नातिस्नेह इति ॥ अतिस्नेहः अतिप्रीतिः प्रसङ्गः उपलालनाद्यासक्तिर्वा क्वापि विषये केनचिन्न कर्त्तव्यः। स्नेहादि कुर्वन् दीनधीः विवेकहीनः सन् कपोत इव संतापं विन्देतेति ॥ ५२ ॥ कपोत इति ॥ वनस्पतौ कृतं नीडं येन स कश्चन कश्चित्कपोतः कपोत्या भार्यया सार्द्धम् अरण्ये कतिचित्समाः वत्सरान् उवास ॥ ५३ ॥ कपोताविति ॥ कपोतौ कपोतः कपोती च द्वौ स्नेहेन गुणितं बद्धं हृदयं ययोस्तौ गृहधर्मिणौ मैथुन्यसुखनिरतौ दृष्ट्यादिकं दृष्ट्यादिकेन बबन्धतुः ॥ ५४ ॥ शय्येति ॥ विस्रब्धौ मरणशङ्कारहितौ मिथुनीभूय वनराजिषु शय्यादिकं चेरतुः कृतवन्तौ शय्या शयनम् ॥ ५५ ॥ यमिति ॥ हे राजन् तर्पयन्ती सुरतालापादिभिः प्रीणयन्ती सा कपोती तेनानुकम्पिता कृपापूर्वकं प्रचोदिता यं यं काममिष्टं वाञ्छति तं तम् अजितेन्द्रियः सोऽतिकृच्छ्रेणापि समानयत् ॥ ५६ ॥ कपोतीति ॥ प्रथमं गर्भं गृह्णती सती साध्वी कपोती प्रसू-

नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ॥ कुर्वन् विन्देत संतापं कपोत इव दीनधीः ॥ ५२ ॥ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ
कपोत्या भार्यया सार्धमुवास कतिचित् समाः ॥ ५३ ॥ कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ॥ दृष्टिं दृष्ट्याङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः
॥ ५४ ॥ शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ॥ मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥ यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता ॥ तं तं समनयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६ ॥ कपोती प्रथमं गर्भं गृह्णती काल आगते ॥ अण्डानि सुषुवे नीडे स्वपत्युः
सन्निधौ सती ॥ ५७ ॥ तेषु काले व्यजायन्त रचितावयवा हरेः ॥ शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥ ५८ ॥ प्रजाः पुपुषतुः प्रीतौ
दम्पती पुत्रवत्सलौ ॥ शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ॥ ५९ ॥ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ॥ प्रत्युद्गमैरदीनानां
पितरौ मुदमापतुः ॥ ६० ॥ स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया ॥ विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥ ६१ ॥ एकदा जग्मतुस्तासामन्नार्थौ तौ कुटुम्बिनौ ॥ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥

तिकाले आगते स्वपत्युः सन्निधौ नीडे अण्डानि सुषुवे ॥ ५७ ॥ तेष्विति ॥ तेषु जलभरितेषु अण्डेषु हरेर्दुर्विभाव्याभिः अवितर्क्याभिः कालकर्मस्वभावादिभिः शक्तिभिः रचिता अवयवा येषां ते तथा कोमलानि अङ्गानि तनूरुहाः रोमाणि च येषां ते शिशवः काले तत्परिपाककाले व्यजायन्त ॥ ५८ ॥ प्रजा इति ॥ तासां प्रजानां कूजितं शृण्वन्तौ कलभाषितैर्मधुरस्वनैर्निर्वृतौ सुखिनौ अत एव प्रीतौ दम्पती प्रजाः शिशून् पुपुषतुः ॥ ५९ ॥ तासामिति ॥ तासामदीनानां हृष्टानां सुखस्पर्शैः पतत्रैः पक्षैः पक्षस्पर्शैरित्यर्थः। तथा कूजितादिभिः पितरौ मुदं हर्षमापतुः ॥ ६० ॥ स्नेहेति ॥ विष्णुमायया मोहितौ अतोऽन्योऽन्यं स्नेहेनानुबद्धहृदयौ दीनधियौ तत्पोषणप्रवणतयाकुलचित्तौ शिशून् बालान् प्रजाः पुत्रान् पुपुषतुः ॥ ६१ ॥ एकदा इति ॥ तासां प्रजानाम् अर्थिनौ अन्नमाकाङ्क्षन्तौ। स्पष्टं शेषम् ॥ ६२ ॥

दृष्ट्वेति ॥ तदा यदृच्छया अकस्मादेव तत्रागतः कश्चिल्लुब्धको व्याधः स्वालयान्तिके स्वनीडसमीपे वने चरतः क्रीडतः तान् कपोतपुत्रान् दृष्ट्वा जालमातत्य प्रसार्य जगृहे॥६३॥ कपोत इति ॥ कपोती च कपोतश्च तौ सदा प्रजापोषणे उत्सुकौ उत्साहवन्तौ अतस्तदाहारार्थं गतौ सन्तौ पोषणमन्नमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥ कपोतीति ॥ कपोती स्वात्मजान् जालेन संवृतान् बद्धान् अत एव क्रोशतः वीक्ष्य भृशं दुःखिता सती स्वयमपि क्रोशन्ती तान् प्रत्यभ्यधावत् ॥ ६५ ॥ सेति ॥ सा कपोती अजस्य भगवतो मायया यस्तेषु असकृत् पुनः पुनः स्नेहस्तेन गुणिता बद्धा अत एव दीनं चित्तं यस्याः अत एव अपगता अहमप्येवं मरिष्यामीति स्मृतिर्यस्याः सा तान् बद्धान् पश्यन्त्यपि स्वयमपि शिचा जालेनाबध्यत जाले आपतदित्यर्थः ॥ ६६ ॥ कपोत इति ॥ कपोतस्तु आत्मनः स्वशरीरादप्यधिकप्रियानात्मजान् बद्धान् तथात्मना स्वशरीरेण समां

दृष्ट्वा तॉल्लुब्धकः कश्चिद् यदृच्छातो वनेचरः ॥ जगृहे जालमावृत्य चरतः स्वालयान्तिके ॥ ६३ ॥ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ॥ गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥ कपोती स्वात्मजान् वीक्ष्य बालकान् जालसंवृतान् ॥ तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥ साऽसकृत् स्नेहगुणिता दीनचित्ताऽजमायया ॥ स्वयं चाबध्यत शिचा बद्धान् पश्यन्त्यपस्मृतिः ॥ ६६ ॥ कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान् ॥ भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥ ६७॥ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ॥ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥ ६८ ॥ अनुरूपानुकूला च यस्य मे पतिदेवता ॥ शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥ सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः ॥ जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ७० ॥ तांस्तथैवावृताञ्छिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥

तुल्यां भार्यां च बद्धां दृष्ट्वेति शेषः । अतिदुःखितः दीनः तेष्वासक्तः सन् विललाप शुशोच ॥ ६७ ॥ अहो इति ॥ अहो हे जनाः अल्पपुण्यस्य दुर्मतेः मम अपायं विनाशं पश्यत यतः अतृप्तस्य दृष्टसुखेनातृप्तस्य अत एव अकृतार्थस्य अदृष्टमसम्पादितवतः त्रैवर्गिको धर्मादिसाधनभूतः गृहः गृहाश्रमो हतः । नष्ट इति गृहस्य पुंस्त्वमार्षम् ॥६८॥ अनुरूपेति ॥ पतिरहमेव देवता यस्याः सा अत एवानुकूलानुरूपा च यस्य मे भार्याशून्ये गृहे मां संत्यज्य साधुभिः पुत्रैः सह स्वः स्वर्गं याति म्रियते ॥ ६९ ॥ सोऽहमिति ॥ मृतदारो मृतप्रज इति दुःखेन जीवितं यस्य सः विधुरो भार्याहीनः सोऽहं शून्यो गृहे किमर्थं जिजीविषे जीवितुमिच्छामि । तङार्षः ॥ ७० ॥ तानिति ॥ कृपणः दीनः अबुधः मूर्खः सः शिग्भिर्जालैरावृतान् अत एव मृत्युग्रस्तान् आरब्धमरणान् विचेष्टतः । शता आर्षः । शिशून् पश्यन् स्वयमपि शिक्षु जालेषु अपतत् ॥ ७१ ॥

तमिति ॥ क्रूरः लुब्धकस्तं कपोतं कपोतकांस्तत्पुत्रान् कपोतीं च लब्ध्वा सिद्धार्थः सिद्धप्रयोजनः सन् गृहं प्रययौ ॥ ७२ ॥ एवमिति ॥ एवं पतत्रिवत् कपोतवत् अन्योऽपि अशान्तात्मा रागलोभाद्याभिभूतचित्तः द्वन्द्वेषु सुखदुःखादिषु आसमंताद्रमते स द्वन्द्वारामः कृपणः विषयासक्तः कुटुम्बी कुटुम्बं पुष्णन् सानुबन्धः पुत्रकलत्रादि-सहितोऽवसीदति दुःखेन विनश्यतीत्यर्थः ॥ ७३ ॥ गृहासक्तिस्तिरश्चामप्यनर्थहेतुर्मनुष्यस्य त्वतिनिन्दितेत्याह—य इति ॥ अपावृतं निरावरणं मुक्तेर्द्वारं साधनभूतं मानुषं लोकं देहं प्राप्य यः खगवत्कपोतवत् गृहेषु सक्तो भवति तमारूढच्युतं श्रेयो मार्गं सोपानमारुह्य च्युतं विदुः ॥ ७४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमादेकादशगसप्तमे ॥ ७ ॥ अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः ॥ अवधूतमुखेनाह तत्र श्लोकार्श्चतुःकृताः ॥ त्रीण्युवाचेति सार्द्धास्तु शरवेदा अनुष्टुभः ॥ ७ ॥ सुखमिति ॥ हे राजन् ऐन्द्रियकमिन्द्रियप्रभवं सुखं यत् यथा स्वर्गे भवति तथा नरकेऽपि भवत्येव । शूकरादिनारक्यामपि योनौ पुत्रकलत्रादिसुखदर्शनात् यथा दुःखं प्रयत्नं

तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ॥ कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥ एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पत-त्रिवत् ॥ पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ७३ ॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ॥ गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ॥ ७४ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥ ब्राह्मण उवाच ॥ सुखमैन्द्रियकं राजन्स्वर्गे नरक एव च ॥ देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ॥ १ ॥ ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा ॥ यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥ २ ॥ शयीताहानि भूरीणि निराहारोऽनुपक्रमः ॥ यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम् ॥ शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ ४ ॥ मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ॥ अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥

विना लभ्यते तथेत्यर्थः । तस्मात् बुधो विवेक्येवं निश्चित्य तदैन्द्रियकं सुखं नेच्छेत । तद्भावः । प्रारब्धभोगस्यावश्यंभावित्वात्तदर्थोद्यमैर्वृथायुर्व्ययो न कार्य इति ॥ १ ॥ ग्रासमिति ॥ आजगरः अजगरवृत्तिः अक्रियः उदासीनः ग्रासमाहारमृष्टं स्वादु विरसं वा महान्तमुदरपूर्त्तिपर्याप्तं स्तोकमल्पमेव वा यदृच्छया दैवाद्देवप्रयत्नं विनैवापतितं लब्धं ग्रसेत् अद्यात् । तद्भाव आर्षः॥२॥शयीतेति॥ग्रासः आहारो यदि यदृच्छातो नोपनमेत् नागच्छेत्तदापि महाहिरजगर इव दिष्टभुक् प्रारब्धमेवाप्रापकमिति धैर्यवान् निराहारः अनुपक्रमः निरुद्यम एव भूरीणि बहून्यहानि तूष्णीं शयीत ॥ ३ ॥ ओज इति ॥ ओजःसहोबलम् इन्द्रियमनः शरीरसामर्थ्यं तद्युक्तमप्यकर्मकं निर्व्यापारमेव देहं बिभ्रत् शयान एव भवेत् । वीतनिद्रः स्वार्थे दत्तदृष्टिः भवेत् इन्द्रियवानपि नेहेत।अपिना दर्शनादिव्यापारपरश्च न भवेत ॥ ४ ॥ मुनिरिति ॥ बहिः प्रसन्नश्चासावन्तर्गम्भीरश्च दुर्विगाह्यः एवं भूत इति परिकलयितुमशक्यः अलक्ष्याभिप्रायत्वात् । दुरत्ययः अनतिक्रमणीयः तेजस्वित्वात् । अनन्तपारः कालतो देशतश्चापरिच्छेद्यः स्वरूपाविर्भावात् । अक्षोभ्यः

अविकार्यः रागाद्यभावात् । स्तिमितोदः निश्चलोदकः अर्णव इव मुनिर्भवेत् ॥ ५ ॥ समृद्धेति ॥ वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत । तद्भार्षः । ग्रीष्मे च तद्विहीनोऽपि न शुष्येत । तद्भार्षः । तथा समृद्धकामस्तद्विहीनो वा मुनिर्न हृष्येत् न वा शोचेदित्यर्थः । किंतु नारायणपरो भवेत् न विषयपरः ॥ ६ ॥ रूपासक्तिर्नाशहेतुरिति पतङ्गाच्छिक्षितमाह—दृष्ट्वेति ॥ देवस्य भगवतो मायारूपां तद्वन्मोहकत्वात् स्त्रियं दृष्ट्वा तद्भावैस्तस्याः स्त्रियो भावैर्विभ्रमादिभिः प्रलोभितः यतः अजितेन्द्रियः अन्धे तमसि नरके पतति यथा पतङ्गः सपक्षः कीटविशेषः स यथा दीपादिकं दृष्ट्वा तद्रूपेण प्रलोभितः उपभोग्यबुद्ध्या तस्मिन् पतन् नश्यति तद्वदित्यर्थः ॥ ७ ॥ योषिदिति ॥ ईश्वरस्य मायया रचितेषु योषिदादिरूपेषु द्रव्येषु उपभोगबुद्ध्या प्रलोभितात्मा आसक्तचित्तः नष्टदृष्टिः लुप्तविवेकः मूढः पुरुषः पतङ्गवन्नश्यति । यद्यप्यत्र स्त्रियां पञ्चापि रूपरसाद्याः विषयाः सन्ति तथापि तत्र प्रथमं दृष्टिरेव पततीति रूपस्य प्राधान्यम् ॥ ८ ॥ स्तोकमिति ॥ स्तोकं स्तोकमल्पमल्पं ग्रासं गृहेभ्यो गृह्णन् । यावता ग्रासेन आहारेण देहो वर्त्तेत तावन्तमेव ग्रसेत् । तद्भाव आर्षः । एवं याचनेन गृहान् गृहस्थान् अहिंसन् अपीडयन् मुनिर्माधुकरीं मधुकरसम्बन्धिनीं वृत्तिमातिष्ठेत् आश्र-

**समृद्धकामो हीनो वा नारायणपरो मुनिः ॥ नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥ दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ॥ प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥ स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ॥ गृहानहिंसन्नातिष्ठेद् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ॥ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ १० ॥ सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ॥ पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥ ११ ॥ सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ॥ मक्षिका इव संगृह्णन् सह तेन विनश्यति ॥१२॥**

येत् । यथा मधुकरः सुमनसः अनाशयंस्तत्राल्पमल्पमेव मधु गृह्णन् क्वापि न सक्तो वर्तते तद्वदित्यर्थः । अन्यथा मधुकर एकस्मिन्नेव पद्मे वसन्नस्तमये मुकुलिते तस्मिन् बध्यते एवं मुनिरपि गुणलोभेन एकगृहमाश्रितः तन्मोहेन बध्येत ॥९॥ अणुभ्य इति ॥ अणुभ्यो महद्भ्यो विपुलेभ्यश्च सर्वेभ्यः शास्त्रेभ्यः कुशलो विवेकी नरः तत्सारमादद्यात् । तद्भाव आर्षः।यथा षट्पदो भ्रमरोऽणुभ्यो महद्भ्यश्च पुष्पेभ्यः सारमेवादत्ते न सर्वं तद्वदित्यर्थः॥१०॥मधुकृत् द्विधा मधु कृन्तति पुष्पादाच्छिनत्तीति मधुकृद् भ्रमरः मधु करोति आहारत्वेन स्वरूपेण चेति मधुकृत् मधुमक्षिका चेति तत्राद्याच्छिक्षितमुक्तं द्वितीयादाह। सायमिति । इदं सायन्तनभोजनार्थमिदं श्वस्तनभोजनार्थमित्येवमपि भिक्षितमन्नं न संगृह्णीत किं पुनर्मासादिपर्याप्तं किन्तु पाणिरेव भोजनपात्रं यस्य सः उदरमेवामत्रमन्ननिधानपात्रं यस्य तथा भवेत् संग्रही भवेच्चेन्मक्षिकेव न भवेत् नश्येत् । यथा मधुलोभेन मधुजीविभिर्मक्षिका हन्यते तथान्यैर्हतो भवेदित्यर्थः ॥ ११ ॥ स्पष्टयति—सायमिति ॥ तेन संगृहीतेन सह स्वयं विनश्यति । स्पष्टमन्यत् ॥ १२ ॥

स्पर्शासक्तो गजो गुरुरित्याह—पदापीति ॥ भिक्षुः संन्यासी दारवीं काष्ठनिर्मितामपि युवतीं पदा पदेनापि न स्पृशेत् स्पृशंस्तु यथा हस्तिग्रहणजीविभिरानीतायाः करिण्या अङ्गसङ्गतो मोहितः करी निखातपिहितगर्ते पतन् बध्यते तथा बध्येत पुनः संसारबन्धनं प्राप्नुयात् ॥ १३ ॥ नेति ॥ प्राज्ञो विवेकी कदापि स्त्रियं नाधिगच्छेत् ममैवेयं भोग्येति बुद्ध्या तदासक्तो न भवेत् किन्तु तामात्मनः स्वस्य मृत्युं पश्येत् तत्रासकश्चेत् । बलाधिकैः स जारः पुरुषो हन्येत । यथा करिण्यामासक्तो गजोऽन्यैर्बलाधिकैर्गजैर्हन्यते ॥ १४ ॥ त्यागभोगहीनं धनं परगामीत्यत्र मधुहा गुरुरित्याह—नेति ॥ न देयमिति लुब्धैर्दुःखेन संचितं न देयं नोपभोग्यं च यद्धनं तच्चार्थवित् । अर्थं धनं तत्प्राप्त्युपायं च वेत्ति सोऽर्थवित् । चौरादिः अन्यः भुङ्क्ते यथा मधुहा तरुकोटरादिगतं मधुमक्षिकागमनेन वेत्ति सः मक्षिकाभिः संचितं मधु हरति ततोऽप्यन्यो गृहीत्वा भुङ्क्ते तथेति ॥ १५ ॥ विनापि स्वोद्यमं भोगः संभवतीति तत्रापि स एव गुरुरित्याह—सुदुःखेति ॥ अतिदुःखेनोपार्जितैर्वित्तैर्गृहेषु आशिषो विषयभोगसुखानि आशासानां कामयमानानां गृहमेधिनां भोगान् अग्रतः प्रथममेव यतिः भुङ्क्ते । मधुहा यथा मक्षिकाभ्यः प्रथमं मधु भुङ्क्ते तथेति । आशासानामिति शानचि नाकारलोप आर्षः । पञ्चाद्य-

पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ॥ स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः॥१३॥नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ॥ बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १४ ॥ न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसञ्चितम् ॥ भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥ सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ॥ मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥ ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित् ॥ शिक्षेत हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ॥ १७ ॥ नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ॥ आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ॥ १८ ॥ जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥

न्तं चेद्गृहाशिष इति षष्ठी । " यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥ तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ।" इति गृहिणामावश्यकत्वेन दानविधानात् ॥ १६ ॥ ग्राम्येति ॥ वनचरो यतिः क्वचित् कदापि ग्राम्याणां गीतं न शृणुयादिति मृगयोर्लुब्धकस्य गीतेन मोहितात् बद्धात् हरिणात् शिक्षेत ॥ अन्यथा बन्धनं प्राप्नुयादित्याशयः ॥ १७ ॥ हरिणशब्दाद्धरिणीसुतमृष्यशृङ्गमपि गुरुमाह यद्वा ग्राम्यगीतासक्तेरुदाहरणमाह—नृत्येति ॥ ग्रामे भवानि ग्राम्याणि योषितां नृत्यादीनि जुषन् सेवमानः । आर्षः शता । हरिणीसुत ऋष्यशृङ्गाख्य ऋषिरासां योषितां क्रीडनकवद्वश्यो बभूवेति शेषः । ग्राम्येति । भगवद्गीतानुज्ञार्थम् ॥ १८ ॥ जिह्वयेति ॥ अतिप्रमाथिन्या अतिक्षोभिकया दुर्जयया च जिह्वया करणभूतया रसे तद्विषये विमोहितः आसक्तः असद्बुद्धिर्जनः मृत्युमृच्छति।यथा रसविमोहितो मीनो बडिशैरामिषलिप्तलोहकण्टकैः मृत्युमृच्छति तथेति एवं रूपगन्धस्पर्शशब्दरसैः पतङ्गमधुकरगजहरिणमीना मोहिताः।तदुक्तम्।" पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्यते यः

सेवते पञ्चभिरेव पञ्च॥" इति ॥१९॥ दुर्जयत्वमुपपादयति—इन्द्रियाणीति ॥ मनीषिणो धीराः पुरुषा निराहाराः सन्तः इतराणीन्द्रियाण्याशु जयन्ति परंतु रसनं वर्जयित्वा तत्तु तथा जेतुं न शक्नुवन्ति यतस्तद्रसनं निरन्नस्य जनस्य वर्द्धते तथा च यद्याहारः सर्वथा त्यज्यते तदा केवलमितरेन्द्रियजयो भवति। रसनेन्द्रियं तु वर्द्धत एव। यदि तु यथेष्टं भुज्यते तदा पुनः रसपोषेणेन्द्रियान्तरक्षोभः स्यादतो रसासक्तिं परित्यज्यौषधवद्भुञ्जीतेति । प्राणवृत्त्यैव सन्तुष्येदित्यत्रोक्तमपि रसनस्यातिदुर्जयत्वज्ञापनायोच्यते ॥ २० ॥ तावदिति ॥ यतः विजितानि अन्यानि रसनाव्यतिरिक्तानीन्द्रियाणि येन तथाभूतोऽपि पुमान् यावद्रसनं न जयेत्तावत् जितेन्द्रिय एव न स्यात् । रसनस्य जागरूकत्वात्पुनस्तद्द्वारा इतरेन्द्रियोद्बोधसंभवात् । अतो रसे रसनेन्द्रिये जिते सत्येव सर्वमिन्द्रियं जितं भवति नान्यथेति ॥ २१ ॥ नैराश्ये पिङ्गला गुरुरित्याह—पिङ्गलेति ॥ विदेहनगरे मिथिलापुरे पुरा पिङ्गला नाम काचिद्वेश्यासीत् । हे नृपनन्दन तस्याः सकाशात् यत्किञ्चिन्मे मया शिक्षितं तन्मत्तो निबोध शृणु ॥ २२ ॥ सेति ॥ सा पिङ्गला

इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ॥ वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥२०॥ तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ॥
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥ पिङ्गला नाम वेश्यासीद् विदेहनगरे पुरा ॥ तस्या मे शिक्षितं किंचिन्निबोध नृपनन्दन॥ २२ ॥
सा स्वैरिण्येकदा कान्त संकेत उपनेष्यती ॥ अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ ॥
ताञ्छुल्कदान्वित्तवतः कान्तान्मेनेऽर्थकामुका ॥ २४ ॥ आगतेष्वपयातेषु सा सङ्केतोपजीविनी ॥ अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति
भूरिदः ॥२५॥ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बिनी ॥ निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥२६॥ तस्या वित्ताशया शुष्यद्वक्त्राया
दीनचेतसः ॥ निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥ २७ ॥

स्वैरिणी कामचारिणी वेश्या एकदा कान्तं कमनीयं रतिसमर्थं धनदं पुरुषं संकेते एकान्ते रतिस्थाने उपनेष्यती उपनेतुमुत्तमं स्वलंकृतं स्वरूपं बिभ्रती तद्योग्ये काले रात्रौ गृहाद्बहिर्द्वारि अभूत् उपविवेश ॥ २३ ॥ मार्ग इति ॥ हे पुरुषर्षभ अर्थकामुका सा मार्गे आगच्छतः पुरुषान् वीक्ष्य तान् वित्तवतः सधनान् अत एव शुल्कदान्मूल्यं प्रदाय सुरतग्राहकान् कान्तान् सुरतार्हांश्च मेने ॥ २४ ॥ आगतेष्विति ॥ सा यतः सङ्केतोपजीविनी संकेते पुरुषान्नीत्वा ततः प्राप्तधनेन जीवन्ती सा आगतेष्वपयातेषु सत्सु अन्योऽपि कोऽपि वित्तवान् अतो भूरिदो बहुधनदाता मामुपैष्यति इत्यचिन्तयदिति शेषः ॥२५॥ एवमिति ॥ एवंविधया दुराशया ध्वस्ता निद्रा यस्याः सा द्वार्यवलम्बमाना पुनः निर्गच्छन्ती ततः पुनः अन्तः प्रविशती सती निशीथमर्द्धरात्रं समपद्यत प्राप ॥ २६ ॥ तस्या इति ॥ वित्ताशया शुष्यद्वक्त्रं यस्याः तथा दीनं चेतो यस्याः पिङ्गलायाः चिन्ताहेतुः वक्ष्यमाणविचारस्य हेतुः परिणामसुखावहश्च परम उत्कृष्टः निर्वेदो जज्ञे जातः ॥ २७ ॥

तस्या इति सार्द्धम् ॥ तस्या निर्विण्णचित्ताया गीतं यथा यथावत् मम मत्तः शृणु । हि यस्मात् पुरुषस्याशापाशानां निर्वेदोऽसिर्यथा तथा छेत्ता । अङ्ग हे राजन् न जातो निर्वेदो वैराग्यं यस्य सः देहं बध्नाति रचयतीति देहबन्धमाशापाशं न जिहासति न त्यक्तुमिच्छति ॥ २८ ॥ अहो इति ॥ न विजित आत्मा मनो यया तस्या मे मम मोहवितर्तिं मोहविस्तारं पश्यत येन मोहेनाहं बालिशा विवेकशून्या सती असतः तुच्छात्कान्तात् पुरुषात् कामं भोगधनादिकं कामये ॥२९॥ सन्तमिति ॥ रमणं क्रीडाप्रदं रतिप्रदं सुखप्रदं परमानन्दरूपत्वात् वित्तप्रदं लक्ष्मीपतित्वात् नित्यं विनाशरहितमिममपरोक्षं समीपे हृदये सन्तं वर्तमानमन्तर्यामिणं भगवन्तं विहाय ततो विपरीतमकामदं यथेष्टभोगसंपादने असमर्थं दुःखादिप्रदं तुच्छं नश्वरमहं भजे भजामि । अतः अज्ञा भगवत्येतादृशी मतिस्तस्यास्तदा तन्यां रजन्यां तदङ्गने यदृच्छया गतशायितस्य श्रीदत्तात्रेयस्य कृपाभरादभूदिति प्राञ्चः ॥ ३० ॥ अहो इति ॥ अहो याऽहं स्त्रैणात् स्त्रीलम्पटात् मूर्खात् अर्थतृषः धनादितृष्णायुक्तात् अल्पप्रदात् अनुशोच्यात् रोगाद्याकुलत्वेन

तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ न ह्यङ्गजातनिर्वेदो देहबन्धं जिहासति ॥ २८ ॥
पिङ्गलोवाच ॥ अहो मे मोहवितर्तिं पश्यताऽविजितात्मनः ॥ या कान्तादसतः कामं कामये येन बालिशा ॥ २९ ॥ सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ॥ अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३० ॥ अहो मयात्मा परितापितो वृथा साङ्केत्यवृत्त्यातिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्याऽर्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३१ ॥ यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ॥ ३२ ॥ विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ॥ याऽन्यमिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात् ॥ ३३ ॥ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ॥ तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३४ ॥

नश्वरान्नरात् तेन धनादिदानेन क्रीतेन स्वयं विक्रीतेनात्मना देहेन वित्तं रतिं चेच्छती तया मया साङ्केत्येन परपुरुषसङ्गेन या वृत्तिस्तया बहुव्रीहिणा मयेत्यस्य विशेषणं वा । अत एव विगर्ह्या विनिन्द्या या वार्ता जीविका तया आत्मा मनः वृथैव परितापितः संतापं प्रापितः ॥ ३१ ॥ यदिति ॥ यत् अस्थिभिर्निर्मिता वंशादयो यत्र तत् स्थूणाः स्तम्भाः वंशो नाम स्थूणासु निहितस्तिर्यग्वेणुः वंश्यास्तस्मिन्नुभयतो निहिता वेणवः तत्र यत् पृष्ठे दीर्घमस्थि स वंशः पार्श्वास्थीनि वंश्यानिस्थूणा हस्तपादास्थीनीति विवेकः । त्वचा चर्मणा तथा रोमभिर्नखैश्च पिनद्धं छादितम् । तथा कफादिकं क्षरन्ति नव द्वाराणि इन्द्रियछिद्राणि । यस्मिंस्तदेवंभूतागाररूपं विण्मूत्रपूर्णमेतन्नरशरीरं मत् मत्तोऽन्या का वा स्त्री कान्तबुद्ध्या उपैति सेवते ॥ ३२ ॥ विदेहानामिति ॥ विदेहानां मैथिलानां ज्ञानिनामपि अस्मिन् पुरे एका अहमेव मूढधीः । हि यस्मात् याहमसती दुष्टा अस्मात् आत्मदात् अच्युतात् भगवतः अन्यं कामं तां विहायान्यं भोगमिच्छती शत्रतात् ङीपू अस्मि ॥ ३३ ॥ सुहृदिति ॥ यतोऽयमच्युतः शरीरिणां सुहृत् हितकर्ता प्रेष्ठतमः

नाथः स्वामी आत्मा च अतस्तमेव आत्मना विक्रीय देहादिसमर्पणेन विशेषेण क्रीत्वा स्ववशीकृत्यानेनैव सह यथा रमा लक्ष्मीः रमते तथाहमपि रमे ॥ ३४ ॥ कियदिति ॥ ये स्वयमेव आद्यन्तवन्तः अतः कालेनैव विद्रुताश्च ते कामाः विषयाः कामदा नराः देवा वा ते भार्यायाः मम कियत् प्रियं व्यभजन् कृतवन्तः न किंचित् अतोऽत्रामुत्र च तद्व्यतिरिक्तः कोऽपि सेव्यो नास्तीत्याशयः ॥ ३५ ॥ नूनमिति ॥ यत् यस्मात् दुष्टा आशा यस्याः तस्याः मे मम अयं सुखावहः निर्वेदो जातः अतो नूनं मे मम केनापि कर्मणा भगवान् विष्णुः प्रीतः यदृच्छागते श्रीदत्तात्रेये तदर्थं स्थानमार्जनलेपादिकमनया कृतमिति प्राञ्चः॥३६॥मैवमिति॥ यदि मे विष्णुः प्रीतो न स्यात् तर्हि मन्दभाग्याया मम निर्वेदस्य हेतवः क्लेशा एवं मा स्युः न भवेयुः । यद्वा । यद्यहं मन्दभाग्या स्यां तर्हि मे निर्वेदहेतवः क्लेशा न स्युः अतोऽहं भाग्यवत्येवेत्यर्थः । येन निर्वेदेन पुरुषः अनुबन्धं देहगेहादिकं निर्हृत्य त्यक्त्वा शमं शान्तिमृच्छति प्राप्नोति ॥ ३७ ॥ तेनेति ॥ अतस्तेन भगवतोपकृतमुपकाररूपेण प्रसादीकृतं निर्वेदं शिरसा आदाय ग्राम्येषु विषयेषु

कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः ॥ आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३५ ॥ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा ॥ निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३६ ॥ मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ॥ येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥ ३७ ॥ तेनोपकृतमादाय शिरसा ग्राम्यसंगताः ॥ त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३८ ॥ सन्तुष्टा श्रद्दधत्येतद्यथालाभेन जीवती ॥ विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ३९ ॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् ॥ ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ ४० ॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् ॥ अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥ ४१ ॥ ब्राह्मण उवाच ॥ एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ॥ छित्वोपशममास्थाय शय्यामुपविवेश सा ॥ ४२ ॥

सङ्गताः संलग्ना दुराशास्त्यक्त्वा तमेवाधीश्वरं शरणं व्रजामि ॥ ३८ ॥ संतुष्टेति ॥ यथालाभेन संतुष्टा तेनैव जीवती । नुमभाव आर्षः । एतत् परमात्मतत्वं विहरामीत्युत्तरार्धोक्तं वा श्रद्दधती तत्रैव विश्वासं कुर्वती अमुनैव आत्मना स्वरूपभूतेन प्रियेण रमणेन पत्या सहाहं विहरामि ॥ ३९ ॥ संसारेति ॥ दुस्तरत्वात्संसार एव कूपस्तत्र पतितं विषयैर्मुषितमीक्षणं विवेको यस्य तं कालरूपेणाहिना ग्रस्तमात्मानं भगवतोऽन्यः को वा त्रातुमधीश्वरः समर्थः ॥ ४० ॥ तर्हि किमात्मत्राणोपाधिना तं भजसे नेत्याह—आत्मेति ॥ यदि अप्रमत्तः सावधानः सन्निदं जगत् कालाहिना ग्रस्तं पश्येत् ततश्चाखिलात्प्रपञ्चान्निर्विद्येत तदात्मनो गोप्ता आत्मैव भवेत् । अतो मम रक्षायाः स्वतः सिद्धत्वात् प्रेम्णैव तं भजामीत्याशयः ॥ ४१ ॥ एवमिति ॥ एवं व्यवसिता कृतनिश्चया मतिर्यस्याः सा पिङ्गला कान्ते यस्तर्षोऽभिलाषस्ततो जातां धनादिदुराशां छित्त्वोपशमं शान्तिमास्थायाश्रित्य शय्यामुपविवेश ॥ ४२ ॥

आशेति ॥ आशा हि आशैव परमं दुःखसाधनं नैराश्यमेव परमं सुखसाधनम् । यथा कान्ताशयासु दुःखिता पिङ्गला कान्ताशां संछिद्य सुखं यथा तथा सुष्वाप ॥ ४३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्याष्टमेऽस्मिन् व्यधाद्दङ्गासहायकः ॥ ८ ॥ नवमे कुररादिभ्यो देहतश्चोपशिक्षिनम् ॥ श्रुत्वा यदुः कृतार्थोऽत्र श्लोकाः सार्द्धास्त्रिवर्ह्णयः ॥ उवाच वाक्यद्वितयमष्टत्रिंशदनुष्टुभः ॥९॥ परिग्रह इति ॥ नृणां यद्यत्प्रियतमं वस्तु तस्य तस्य परिग्रहोऽतिदुःखाय भवति अतो यस्तु तद्विद्वान् परिग्रहस्य दुःखहेतुत्वं जानन् अकिञ्चनः निष्परिग्रहः स्यात्सोऽनन्तं सुखमाप्नोति ॥ १ ॥ सामिषमिति ॥ परिगृहीतामिषमुखं कुरराख्यं पक्षिविशेषं निरामिषास्ततो बलिनः श्येनगृध्रादयो जघ्नुः तदा च स कुररः आमिषं परित्यज्य सुखं समविन्दत प्राप्तवान् ॥ २ ॥ नेति ॥ मे मम मानावमानौ लोककृतमानापमानजनितसुखदुःखे न स्तः । तथा या गेहपुत्रिणां तद्वतां चिन्ता भवति सापि नास्ति यतः अहं आत्मना सहैव क्रीडा यस्य तथा आत्मन्येव रतिः प्रीतिर्यस्य सोऽहमिह लोके बालवत् सुखं विचरामि ॥ ३ ॥ द्वावेवेति ॥

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥४३॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥ ब्राह्मण उवाच ॥ परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ॥ अनन्तं सुखमाप्नोति तद्विद्वान्यस्त्वकिञ्चनः ॥ १ ॥ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ॥ तदामिषं परित्यज्य स सुखं समविन्दत ॥२॥ न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ॥ आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥ द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ॥ यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥ ४ ॥ क्वचित्कुमारी त्वात्मानं वृणानान्गृहमागतान् ॥ स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ॥५॥ तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव ॥ अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥६॥ सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ॥ बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ॥७॥

द्वावेव मानापमानादिचिन्तया मुक्तौ अत एव परमानन्दे आप्लुतौ निमग्नौ यो विमुग्धः अज्ञः मानापमानानभिज्ञः जडः अनुद्यमः बालः यश्च गुणेभ्यः परम् ईश्वरं गतः तदेकभावं प्राप्त इति ॥ ४ ॥ क्वचिदिति ॥ क्वचिद्देशे बन्धुषु पित्रादिषु क्वापि कार्यान्तरे यातेषु सत्सु काचित्कुमारी आत्मानं वृणानान् वरितुं स्वगृहमागतान् जनान् वीक्ष्य स्वयमेव तान् अर्हयामास आवृतसर्वाङ्गैव गेहान्निष्क्रम्य दर्भासनादिकेन आतिथ्येन सत्कारं कृतवती ॥ ५ ॥ तेषामिति ॥ तेषामागतानामभ्यवहारार्थं भोजनार्थं रहसि एकान्ते शालीन् धान्यानि अवघ्नन्त्यास्तस्याः । तुमार्षः । प्रकोष्ठस्थाः मणिबन्धस्थाः शङ्खाः शङ्खवलयाः महत् यथा स्यात्तथा स्वनं चक्रुः ॥ ६ ॥ सा इति ॥ तदा सा कुमारी यतो महती बुद्धिमती महाकुलोत्पन्ना वा अतः तच्छाल्यवहननं जुगुप्सितं दारिद्र्यसूचकत्वान्निन्दितं मत्वा व्रीडिता सती तत एकैकशः क्रमेणैकमेकं शङ्खं बभञ्ज करादपसारितवती । द्वौ द्वौ शङ्खौ पाण्योरशेषयत् ॥ ७ ॥

उभयोरिति ॥ ततश्च पुनरवघ्नन्त्या । नुमार्षः । शङ्खयोरुभयोर्द्वयोर्द्वयोरपि परस्परसंघर्षजो घोषोऽभवत्।ततस्तत्राप्येकमेकं निरभिदत् पृथक्कृतवती तदैकैकस्माच्छङ्खात् ध्वनिर्नाभवत् ॥ ८ ॥ अन्विति ॥ हे अरिन्दम लोकतत्त्वस्य विवित्सया जिज्ञासया।इडभाव आर्षः । विन्दतेर्वा रूपम् । एतान् लोकाननुचरन्नहं तस्याः इमं वक्ष्यमाणम् । उपदेशम् अन्वशिक्षम् । तङभाव आर्षः ॥९॥ वास इति ॥ बहूनां वासे कलहो भवेत् द्वयोरपि वासे वार्ता मिथः संलापो भवेत् । वास इति प्रथमान्तपाठे कलहः । कलहहेतुः वार्ता गोष्ठी हेतुर्भवेदित्यर्थः । यत एवं तस्मात्कुमार्याः कङ्कण इव एक एव चरेत् ॥ १० ॥ मन इति ॥ जितामनः जितश्वासश्च सन् अतन्द्रितः आलस्यरहितः वैराग्याभ्यासयोगेन ध्रियमाणं वशीक्रियमाणं मनः एकत्र संयुञ्ज्यात् स्थिरीकुर्यात्।आसनजये श्वासजयः ततश्च श्वासाधीनं मनः स्थिरं भवति वैराग्याभ्यासाभ्यां च पुनर्विक्षेपाभावः ॥ ११ ॥ यस्मिन्निति ॥ यदेतत् लयविक्षेपात्मकं मनस्तत् यस्मिन् परमानन्दस्वरूपे भगवति लब्धास्पदं सत् कर्मरेणून् कर्मवासनाः मुञ्चति तस्मिन् नियुञ्ज्यादिति पूर्वेण

उभय्योरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शङ्खयोः ॥ तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः ॥ ८ ॥ अन्वशिक्षमिमं तस्या उपदेशमरिन्दम ॥ लोकाननुचरन्नेतॉँल्लोकतत्त्वविवित्सया ॥ ९ ॥ वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ॥ एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ॥ १० ॥ मन एकत्र संयुज्याज्जितश्वासो जितासनः ॥ वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ ११ ॥ यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ॥ सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम्॥१२॥तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरन्तरं वा ॥ यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥ एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ॥ अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १४ ॥

संबन्धः । ननु तथापि सुषुप्तिवल्लयो दुर्वारः तत्राह । वृद्धेन सत्वगुणेन रजस्तमश्च विधूय रजस्तमसोरभावे विक्षेपलययोरभावात् । अनिन्धनं इन्धनं गुणास्तत्कार्यं च तद्रहितम् इन्धनवत्सत्वस्य स्वत एव शान्तत्वात् निर्वाणम् अवृत्तिकं ध्येयाकारेणावस्थानमुपैति । उक्तं च।"मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः । यासंप्रज्ञाननामाऽसौ समाधिरभिधीयते ॥ " इति ॥ १२ ॥ तदेति ॥ एवमात्मनि सर्वात्मके परमेश्वरेऽवरुद्धं स्थिरीकृतं चित्तं येन स तदा तस्यामवस्थायां दर्शनादिना बहिः स्मरणेन अन्तरं वा न किंचिद्वेद । यथा इषौ गतात्मा तस्य ऋजूकरणे दत्तचित्तः तन्मयी भवन्मनाः दार्ष्टान्त आत्माकारी भवन्मनाः इषुकारः भेर्यादिमहाघोषैः पार्श्वे गच्छन्तमपि नृपतिं यथा न ददर्श तथेति ॥१३॥ एकचारीति ॥ योगिसंमर्दस्यापि त्यागे कुमारीगुरुः जनमात्रसङ्गत्यागे सर्पः स यथा जनाच्छङ्कमान एकाकी विचरति नियतनिकेतरहितश्च सदा अप्रमत्तश्च एकान्तवासी च आचारैर्गतिभिः सविषो निर्विषो वेति च न लक्ष्यते असहायश्च मितभाषी च तद्वन्मुनिरपि वर्तेतेत्यर्थः ॥ १४ ॥

गृहेति ॥ अध्रुवः आत्मा शरीरं यस्य तस्य देहस्याध्रुवत्वादित्यर्थः । गृहारम्भः गृहनिर्माणमात्मनोऽतिदुःखाय भवति आयासधनव्ययादेः प्रसिद्धत्वात् तथा विफलश्च अतो यथा सर्पः परकृतं वेश्म वल्मीकादिकं प्रविश्य सुखं यथा भवति तथा एधते वर्त्तते तथैव विवेकिभिरन्यनिर्मितगृहेणैव निर्वाहः कर्तव्य इति शेषः ॥ १५ ॥ ईश्वरः केन प्रकारेण सृष्ट्यादि करोतीत्येतन्मया ऊर्णनाभेः शिक्षितमित्याचक्षाण आदौ संहारमाह—एक इति सार्द्धम् ॥ य एक ईश्वरः नारायणो देवः आत्माधारः आधारान्तरानपेक्षः स्वयं त्वखिलानामाश्रयः आधारः स्वमायया पूर्वसृष्टमिदं विश्वं कालाख्यया कलया स्वशक्त्या संहृत्य कल्पान्ते एक एवाद्वितीयः सजातीयविजातीयभेदशून्योऽभूत् । सर्वस्य प्रपञ्चस्यात्मनि लयात् ॥ १६ ॥ उक्तमेव पुनः स्पष्टयति—कालेनेति द्वयम् ॥ आत्मनः अनुभावेन शक्तिविशेषेण कालेन कारणभूतासु सत्त्वादिषु शक्तिषु साम्यं प्रधानं प्रति नीतासु सतीषु प्रधानपुरुषयोरपीश्वरो नियन्ता परे ब्रह्मादयः अवरे अन्ये च मुक्ताः जीवास्तेषां परमः परमफलभूतः प्राप्यः निरुपाधिकः सत्त्वाद्युपाधिरहितः केवलो निर्वि-

गृहारम्भो हि दुःखाय विफलश्चाध्रुवात्मनः ॥ सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥१५॥ एको नारायणो देवः पूर्वसृष्टं स्वमायया ॥
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ॥ १६ ॥ कालेनात्मानुभावेन साम्यं नीतासु
शक्तिषु ॥ सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥ परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ केवलानुभवानन्दसन्दोहो
निरुपाधिकः ॥ १८ ॥ केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ॥ १९ ॥ तामाहु-
स्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ॥ यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥ यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः ॥
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥

षयः स्वप्रकाशः अनुभवो ज्ञानमानन्दश्च तेषां सन्दोहः समूहः चिदानन्दरूपः आदिपुरुषः कैवल्यसंज्ञितः मोक्षशब्दाभिधेय आस्ते । यद्वा । केवल एव कैवल्यम् । स्वार्थे ष्यञ् । कैवल्य इति संज्ञा जाता यस्य स जगत्पालनादिव्यापाराभावात् ॥ १७ ॥ १८ ॥ केवलादेव सृष्टिं दर्शयति—केवलेति ॥ हे अरिन्दम केवलेनात्मानुभावेन कालेन त्रिगुणात्मिकां स्वमायां संक्षोभयन् तया प्रकृत्या आदौ सूत्रं क्रियाशक्तिप्रधानं महत्तत्वं सृजति ॥ १९ ॥ तामिति ॥ विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वमहङ्कारद्वारेण सृजन्तीं तामेव सूत्ररूपां व्यक्तिं त्रिगुणव्यक्तिं त्रिगुणकार्यमाहुः ।व्यक्तिशब्दं प्रधानीकृत्य सूत्रस्यैव स्त्रीलिङ्गेन परामर्शः । त्रिगुणकार्यस्य सूत्रसंज्ञायां हेतुमाह । यस्मिन्निति । कारणभूते समष्टिप्राणरूपे सूत्रे यस्मिन्निदं विश्वं प्रोतं ग्रथितम् । येन प्राणरूपेण सूत्रेण पुमान् जीवः संसरते । तङार्षः ॥ २० ॥ यथेति ॥ ऊर्णा तन्तुसन्तानप्रकृतिर्नाभौ यस्य स कीटविशेषः स यथा हृदयात् वक्त्रद्वारा ऊर्णां संतत्य प्रसार्य तयोर्णया विहृत्य क्रीडित्वा भूयस्तां ग्रसति । तङभाव आर्षः । एवमेव परमेश्वरोऽपि स्वत एव विश्वं

प्रसार्य तत्र विहृत्य स्वस्मिन्नेवोपसंहरति ॥ २१ ॥ यत्र यत्रेति ॥ धिया निश्चयात्मिकया बुद्ध्या यत्र यत्र विषये मनः संकल्पविकल्पात्मकं सकलं निश्चलं स्नेहाद्यन्यतमेन हेतुना यो देही धारयेत्स तत्तत्सरूपतां याति प्राप्नोति ॥ २२ ॥ कीट इति ॥ हे राजन् तेन पेशस्कृता भ्रमरविशेषेण कुड्यां निरोधस्थाने प्रवेशितो निरुद्धः कीटो भयेन तं पेशस्कृतं ध्यायन् पूर्वरूपमसंत्यजन् तत्सात्मतां तत्सारूप्यं याति । साम्यतामिति पाठे तु स्वार्थेष्यञन्तात्समशब्दात्तल् आर्ष इत्येके । पूर्वरूपमसन्त्यजन्नित्यस्यायमभिप्रायः । यदा तेनैव देहेनान्यसारूप्यं दृश्यते तदा किं वक्तव्यं देहान्तरेण सारूप्यं घटते इति ॥ २३ ॥ एवमिति ॥ स्पष्टम् ॥ २४ ॥ देह इति ॥ देहोऽपि मम गुरुः यतः विरक्तिविवेकयोर्हेतुः सत्त्वनिधनमुत्पत्तिविनाशौ बिभ्रत् बिभ्राणः । स्मेति प्रसिद्धौ । किं च सततमार्तिमेवोदर्कमुत्तरोत्तरफलं च बिभ्राणः । यद्वा । सततार्तिरेवोदर्कमुत्तरफलं यस्य तत्सत्त्वनिधनं बिभ्राणः । अनेन देहेन यथा यथावत् तत्वानि विमृशामि तथापि यतः पारक्यं शृगालादिभक्ष्यमित्यवसितो निश्चितवान् अतः असङ्गः अस्मिन्नप्यासक्तिरहित

यत्र यत्र मनो देही धारयेत्सकलं धिया ॥ स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥ २२ ॥ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः ॥ याति तत्साम्यतां राजन्पूर्वरूपमसंत्यजन् ॥ २३ ॥ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ॥ स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥ देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम् ॥ तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णाति यत्प्रियचिकीर्षुतया वितन्वन् ॥ स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥ २६ ॥ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक्क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥

एव विचरामि ॥ २५ ॥ सततार्त्युदर्कतां प्रपञ्चयति—जायेति ॥ सकृच्छ्रं सकष्टं रेफरहितपाठे सकृदेव शं सुखमिति यथा भवति तथाऽवरुद्धानि संचितानि धनानि येन सः पुरुषः देहविशेषणं वा । यस्य देहस्य प्रियचिकीर्षुतया प्रियं कर्तुं भोगं संपादयितुमिच्छुतया । चिकीरषयेत्यार्षः पाठः । जायादिवर्गान् वितन्वन् संवर्द्धयन् तान् पुष्णाति । वृक्षस्येव धर्मः स्वभावो यस्य सः वृक्षो यथा विनश्यन्नपि वृक्षान्तरबीजमुत्पाद्य विनश्यति तथेत्यर्थः । स देहः स्वान्ते स्वस्यायुषोऽन्ते अस्य पुरुषस्य देहान्तरबीजं सृष्ट्वा अवसीदति नश्यति अस्य बीजं सृष्ट्वेति देहनाशेऽपि न दुःखसमाप्तिरित्याशयः ॥ २६ ॥ जिह्वेति ॥ अमुं देहं देहाभिमानिनं पुरुषं वा कर्हि कदाचित् जिह्वा एकतः रसं प्रत्यपकर्षति तर्षा पिपासा । स्त्रीत्वमार्षम् । जलं प्रति अपकर्षति तथा शिश्नो व्यवायं प्रति त्वक् स्पर्शं प्रति उदरमन्नं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपला दृक् रूपं प्रति कर्म शक्तिः कर्मेन्द्रियाणि क्व च क्वचित वचनादानगतिमलविसर्गादिस्वस्वविषयं प्रति अपकर्षति बह्व्यः सपत्न्यो यथा गेहपतिमेकं स्वामिनं गृहीत्वा सर्वतः स्वं स्वं प्रति लुनन्ति

आकृष्य त्रोटयन्ति तथेति ॥ २७॥ एवं देहस्य विरक्त्यादिहेतुत्वेन गुरुत्वमुक्त्वा दुर्लभत्वं दर्शयन् आत्मनिष्ठामभिधत्ते—सृष्ट्वेति ॥ देवो भगवान् आत्मनः शक्त्या अजया विविधानि पुराणि जीवानां निवासस्थानानि शरीराणि वृक्षसरीसृपादीन् सृष्ट्वा तैस्तैर्वृक्षादिशरीरैः धर्मादिपुरुषार्थसाधकत्वाभावात् न तुष्टं हृदयं यस्य स ब्रह्मणोऽवलोकाय अपरोक्षज्ञानपर्यन्तं योग्या धिषणा बुद्धिर्यस्मिंस्तं पुरुषं पुरुषशरीरं विधाय मुदं हर्षं प्राप । " तासां मे पौरुषी प्रिया " इति भगवदुक्तेः । " पुरुषत्वे चाविस्तरामात्मा " इति श्रुतेश्चाईश्वरो हि वागादीः सृष्टवान् ताश्च भोगार्थं शरीरमयाचन्त स च ताभ्यो गवादिशरीराण्यानीय चक्षुरादिस्थानेष्वत्र प्रविशतेत्याह । तत्र पुरुषशरीरे वागादयः समतुष्यन् तेनेश्वरोऽपि मुदमाप । तथा च श्रुतिः । " तथा ताभ्यो गामानयत ता अब्रुवन् न वै नोयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वेनोयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बत " इति ॥ २८ ॥ लब्ध्वेति ॥ यस्मात् इदं मानुष्यं जन्मार्थदमपि अनित्यम् अनुगतो मृत्युर्यस्य तादृगस्ति तस्माद्बहूनां सम्भवानां जन्मनामन्ते कथंचिदिदं

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या वृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥ २८ ॥ लब्ध्वा सुदुर्लभमिदं बहुसंभवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ॥ तूर्णं यतेत न पतेदनुमृत्यु यावन्निः-श्रेयसाय विषयः खलु सर्वतः स्यात्॥२९॥एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि ॥ विचरामि महीमेतां मुक्तसङ्गोऽनहंकृतिः॥३०॥ न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयं हि गीयते बहुधर्षिभिः ॥ ३१ ॥ श्रीभगवानुवाच ॥ इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः ॥ वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥

लब्ध्वा इहास्मिन्नेव जन्मनि तत्रापि यावन्न पतेत् रोगादिना न विपद्येत तावदेव धीरः सन् तूर्णं शीघ्रं निःश्रेयसाय मोक्षाय यतेत विषयलाभार्थप्रयत्नेनेदं जन्म व्यर्थं न कुर्यात्। यतः खलु विषयलाभस्तु सर्वतः श्वशूकरादिजन्मस्वपि स्यात् सुलभ एव ॥ २९ ॥ एवं बहुधा विवेकं निरूप्य त्वं तु कल्पः कविर्दक्ष इत्यादेरुत्तरमाह—एवमिति ॥ एवं बहुभ्यो गुरुभ्योऽन्वयव्यतिरेकाभ्यां सम्यग्जातं वैराग्यं यस्य सः विज्ञानमात्मसाक्षात्कारात्मकमेवालोकः प्रदीपो यस्य सः । अतः आत्मनि स्वरूपे एव स्थित इति शेषः । अत एव देहेऽनहंकृतिः अहङ्काररहितः गृहपुत्रादिषु मुक्तसङ्गो ममतारहितश्चाहमेतां महीं विचरामि ॥३०॥ न हीति ॥ एकस्माद्गुरोः सुस्थिरं सुपुष्कलं ज्ञानं न स्यात् । यत एतद-द्वितीयमपि ब्रह्म ऋषिभिर्बहुधा गीयते अतो व्यामोहः स्यादेव। एते हि असम्भावनादिनिवर्त्तकतया स्वबुद्ध्या कल्पिताः गुरवः उपदेशको गुरुस्त्वेक एवेति ॥ ३१ ॥ इतीति ॥ गभीरधीः स विप्रो दत्तात्रेयः यदुम् इत्युक्त्वा तं यदुमामन्त्र्य पृष्ट्वा तेन वन्दितः पूजितश्च प्रीतः सन् यथागतं तथैव यदृच्छया ययौ ॥ ३२ ॥

अवधूतेति ॥ नोऽस्माकं पूर्वेषामपि पूर्वजो वृद्धः स यदुः अवधूतवचः श्रुत्वा धनपुत्रादिसर्वसङ्गाद्विनिर्मुक्तः सन् समे भगवत्येव चित्तं यस्य तथाभूतो बभूव । अत्र स्वामिपादानां श्लोकौ । "कपोतो मीनहरिणकुमारीगजपन्नगाः । पतङ्गः कुररश्चाष्टौ हेयार्थे गुरवो मताः ॥ मधुकृन्मधुहर्त्ता च पिङ्गला च द्वयोस्त्रयः । उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः॥" ॥३३॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्य नवमे व्यधाद्‌ङ्गसहायकः ॥ ९ ॥ दशमे देहसंबन्धात्संसृतिर्नात्मनः स्वतः ॥ इत्युक्तं हरिणा तत्र श्लोकाः पर्वतवह्नयः ॥ द्वे उवाचेति सार्द्धास्तु सप्तत्रिंशदनुष्टुभः ॥ १० ॥ मयेति ॥ मया गीतापञ्चरात्रादिषूक्तेषु पूजानमस्कारश्रवणादिवैष्णवधर्मेषु अवहितः प्रमादरहितःताननुतिष्ठन् अकामात्मा फलाभिसन्धिरहितः मदाश्रयः मदेकशरणः सन् तदविरोधेन वर्णाश्रमकुलाचारप्राप्तं कर्म समाचरेत् ॥ १ ॥ अन्वीक्षेतेति ॥ प्रथमतः स्वोचितधर्मैर्विशुद्ध आत्मा चित्तं यस्य स विषयेष्वाविष्ट आत्मा चित्तं येषां तेषां देहिनां गुणेषु विषयेषु तत्त्वध्यानेन परमार्थत्वाभिनिवेशेन हेतुना ये सर्वे आरम्भा उद्योगास्तेषां विपर्ययं सुखोद्देशेन क्रियमाणानां दुःखजनकत्वरूपफलवैपरीत्यमन्वीक्षेत पुनः पुनः पश्येत् । एवं फलवैपरीत्यदर्शनात्कामनानिवृत्तिः स्यादित्याशयः ॥ २ ॥

अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ॥ सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥३३॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे नवमोऽध्यायः ॥ ९ ॥ श्रीभगवानुवाच ॥ मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥ अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ॥ गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम् ॥ २ ॥ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ॥ नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥ ३ ॥ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ॥ जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ ४ ॥ यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् ॥ मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥

सुप्तस्येति ॥ यथा सुप्तस्य स्वप्नं पश्यतः पुंसो विषयालोको नानाविधपदार्थदर्शनं यथा वा राजादिवृत्तं ध्यायतो जनस्य तद्विषयको मनोरथो नानात्मकत्वात् एकस्मिन्नेवात्मन्यारोपितनानावस्तुविषयकत्वात् विफलः अर्थशून्यः भ्रम इत्यर्थः । तथा गुणैर्मनुष्यादिशरीरैर्भेदेनात्मनि धीः देवमनुष्यादिशरीरेऽहंप्रत्ययोऽपि भ्रमः नानात्मकत्वात् । अत्रैवं प्रयोगः इन्द्रियैर्या बहिर्नाना बुद्धिः सा विफला नानात्मकत्वात् ऐन्द्रियकत्वात् मनोजन्यस्वप्नमनोरथवत् इति ॥ ३ ॥ निवृत्तमिति ॥ मत्परः मदेकपरायणः निवृत्तं निष्कामं कर्म सेवेत आचरेत् प्रवृत्तं काम्यकर्म त्यजेत् । तथा जिज्ञासायामात्मतत्वविचारे सम्यक् प्रवृत्तश्चेत्तर्हि तद्विरोधित्वान्निवृत्तकर्मचोदनां विधिमपि नाद्रियेत् । तद्भाव आर्षः ॥ ४ ॥ यमानिति ॥ मत्परः यमान् अहिंसादीन् अभीक्ष्णम् आदरेण सेवेत नियमान् शौचादींस्तु क्वचित् । यदा शक्तिस्तदा आत्मज्ञानाविरोधेन सेवेत । यमनियमानेकोनविंशेऽध्याये वक्ष्यति । किं च यमेष्वप्यादरं त्यक्त्वा सेवेत मदभिज्ञं तत्वतो मां जानन्तं शान्तं मदात्मकं मद्रूपं गुरुं चोपासीत सेवेत ॥ ५ ॥

गुरुलक्षणं निरूप्य शिष्यलक्षणान्याह—अमानीति युग्मेन ॥ अमानी अभिमानरहितः अमत्सरः दक्षः आलस्यरहितः निर्ममो जायादिषु ममतारहितः परमेश्वरे गुरौ च दृढसौहृदः असत्वरः व्यग्रतारहितः अर्थजिज्ञासुः तत्वान्वेषी अनसूयुः गुर्वादौ दोषदृष्टिरहितः अमोघवाक् व्यर्थभाषणरहितः सर्वत्रात्मनोऽर्थं सुखादि सममेव पश्यन् जायापत्यादिषु उदासीनः स्यात् । इवशब्द एवार्थे । अयं भावः । आत्मनः सर्वदेहेष्वेकत्वाज्जायादिदेहेऽन्येषां देहे चात्मनोऽर्थः सुखादि सम एवातो जायादिदेहेष्वेव केन विशेषेण ममत्वाभिनिवेशं इत्येवमुदासीनः सन् गुरुं प्रपद्येतेति । यद्वा । आत्मनः स्वस्य अर्थं धनमिव समं पश्यन् तद्यथा यावद्यस्य करगतं तावदेव तस्य ममतास्पदं ननु सर्वदा । एवं तद्वदेव जायादिकमपीति ममताया अनैकान्तिकत्वान्निर्ममतैवोचिता ॥ ६ ॥ ७ ॥ विलक्षण इति ॥ स्थूलसूक्ष्माख्यदेहद्वयादात्मा विलक्षणः भिन्न एव । यतः ईक्षिता द्रष्टा स्वदृक् स्वप्रकाशश्च । द्रष्टा हि द्रष्टृत्वेन दृश्यादिलक्षणः स्वप्रकाशश्च जडाद्विलक्षणो भवत्येव । यथा दाहकः प्रकाशकश्चाग्निर्दाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तथेति ॥८॥ एवमात्मनः नित्यत्वादिकमपि सिद्धमित्याह—निरोधेति ॥ यथा दारुष्वन्तः प्रविष्टोऽग्निः स्वतः निरोधोत्पत्त्यादिरहितोऽपि तेन दारुसंबन्धेन कृतान् निरोधोत्पत्त्यणु-

अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ॥ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥६॥ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ॥ ७ ॥ विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ॥ यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥८॥ निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् ॥ अन्तः प्रविष्ट आधत्त एवं देहगुणान् परः ॥९ ॥ योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ॥ संसारस्तन्निबन्धोऽयं पुंसो विद्याच्छिदात्मनः ॥ १० ॥ तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परम् ॥ संयम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥

बृहन्नानात्वमित्यादीन् गुणान् आधत्ते प्राप्नोति । यथा अग्निः स्वतः नाशरहितोऽपि दारुनाशात् निरोधं नाशम् आधत्ते एवमुत्पत्तिरहितोऽपि दारूत्पत्तेरुत्पत्तिं स्वतो महानपि तदणुत्वादणुत्वम् । तद्बृहत्वाद्बृहत्वम् । स्वयमेकोऽपि तन्नानात्वान्नानात्वमित्येवं तत्कृतान्गुणान् आधत्ते एवं देहे प्रविष्टो नित्यादिस्वरूपोऽपि परः आत्मा देहगुणाननित्यत्वादीन् आधत्ते ॥ ९ ॥ योऽसाविति ॥ पुरुषस्य परमेश्वरस्याधीनैः प्राकृतैर्गुणैः गुणपरिणामैर्बुद्धीन्द्रियादिभिर्योऽसौ सूक्ष्मः तथायं च स्थूलदेहो रचितः तन्निबन्धः तत्रात्माध्यासकृत एवायं जन्ममरणाद्यात्मकः पुंसो जीवस्य संसारः तस्मादात्मनो विद्याविज्ञानं तस्य संसारस्य छित् छेत्री आच्छिदिति वा छेदः ॥ १० ॥ तस्मादिति ॥ यस्माद्देहाद्यध्यासादेव संसारस्तस्मात् जिज्ञासया विचारेण आत्मस्थमात्मनि कार्यकारणसङ्घाते देह एव स्थितं केवलं शुद्धमसङ्गं परं देहाद्विलक्षणं भिन्नमात्मानं सङ्गम्य सम्यग्ज्ञात्वा एतत् एतस्मिन् देहादौ वस्तुबुद्धिमात्मबुद्धिं यथाक्रमं स्थूलसूक्ष्मक्रमेण निरसेत् त्यजेत् ॥ ११ ॥

आचार्य इति ॥ आचार्यः आद्यः अरणिः अधरारणिः अन्तेवासी शिष्यः उत्तरारणिः प्रवचनमुपदेशः तत्सन्धानं तयोर्मध्यमं मन्थनकाष्ठं विद्या तु सन्धिः सन्धौ भवन्नग्निरिव सुखावहः अविद्यादिदोषनाशकः परमानन्दप्रदश्च । तथा च श्रुतिः । "आचार्यः पूर्वरूपमन्तेवास्युत्तररूपं विद्या सन्धिः प्रवचनं सन्धानम्" इति ॥१२॥ अग्निसादृश्यमाह– वैशारदीति ॥ विशारदोऽतिनिपुणस्तथाभूतेन शिष्येण प्राप्ता तथाभूतेन गुरुणोपदिष्टा वा वैशारदी अतिविशुद्धात्मविषया बुद्धिः गुणप्रसूतां गुणकार्यरूपां मायां मोहिकां संसृतिं विधुनोति निवर्तयति यदात्मकमेतत् विश्वं जीवस्य संसृतिबन्धनं तान् गुणांश्च सन्दह्य दग्ध्वा स्वयं च शाम्यति । तत्र दृष्टान्तमाह।असमित् निरिन्धनोऽग्निर्यथा काष्ठादि दग्ध्वा स्वयमपि शाम्यति तद्वदिति । तदा च कार्येण कारणेनाविद्यया च व्यवधानाभावात्साक्षात्परमानन्द रूप एव भवतीति।यदात्ममित्यार्षम्।अव्ययीभावं प्रकल्प्य "अनश्च" इति टच् तु क्लिष्टः ॥ १३ ॥ आत्मैक्यविरोधिमतान्तरं निराकर्तुं तदुद्भावयति–अथेति युग्मम् ॥ एवं हि जैमिनीया आहुः।"अहं प्रत्ययविज्ञेय एवात्मा स च प्रतिशरीरं भिन्नः कर्तृभोक्तृरूपश्च न तु तत्स्वरूपभूतो निर्विकार एकः परमात्माऽस्ति" इति । तत्र यदि कर्मकर्तॄणां कर्मफलसुखदुःखयोर्भोक्तॄणां चैषां जीवानामथ यदि नानात्वं मन्यसे तथा

आचार्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः ॥ तत्संधानं प्रवचनं विद्यासन्धिः सुखावहः ॥ १२ ॥ वैशारदी सातिविशुद्धबुद्धिर्धुनोति मायां गुणसंप्रसूताम् ॥ गुणांश्च संदह्य यदात्ममेतत् स्वयं च शाम्यत्यसमिद्यथाग्निः ॥१३॥ अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ॥ नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥ १४ ॥ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा ॥ तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥ एवमप्यङ्ग सर्वेषां देहिनां देहयोगतः ॥ कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥

भोगस्थानानां स्वर्गादिलोकानां भोगकालस्य वा तदुपायकर्मबोधकागमस्य वा भोक्तुरात्मनो वा अनित्यत्वे वैराग्यं भवेत् । तत्र लोककालागमात्मनां यदि नित्यत्वं मन्यसे भोग्यवस्तूनां विच्छेदादपि वैराग्यं भवेत्तत्रापि सर्वभावानां स्रक्चन्दनवनितादीनां संस्था स्थितिः औत्पत्तिकी प्रवाहरूपेण नित्या इति च यदि मन्यसे तथोक्तं न कदाचिदनीदृशं जगदिति अतस्तत्कर्त्ता कश्चिदीश्वरोऽपि नास्तीत्यपि वदन्ति । किं च सर्वोऽपि व्यवहारोऽहं सुख्यहं दुःखीत्यादिरूपो यथा यथावत् सत्य एव नतु कल्पित इति यदि मन्यसे यदि चात्मस्वरूपभूतं नित्यमेकं ज्ञानं नास्त्येव तत्तद्घटपटाद्याकारभेदेन धीर्जायते अनित्या भिद्यते च । अतो नित्यज्ञानरूप आत्मा नास्ति किन्तु ज्ञानपरिणामवानेव । तथा च मुक्ताविन्द्रियादिरहितस्य परिणामासंभवाज्जडत्वेन तत्प्राप्तेरपुरुषार्थत्वात्प्रवृत्तिमार्ग एव श्रेयान्नतु निवृत्तिमार्ग इति मन्यसे ॥ १४ ॥ १५ ॥ एवं तन्मतमनूद्य निराकरोति–एवमिति ॥ अङ्ग हे राजन् एवमङ्गीकारेऽपि सर्वेषां देहिनां देहसंबन्धात् कालावयवतः लवनिमेषादिसंवत्सरान्तेभ्यः कालावयवेभ्यः असकृत् पुनः पुनर्जन्मादयो भावा विकाराः सन्ति भवन्त्येव अतो दुःखमवर्जनीयमित्याशयः ॥ १६ ॥

अत्रापीति ॥ अत्रापि त्वदङ्गीकृतपक्षेऽपि कर्मणां कर्तुरस्वातन्त्र्यं लक्ष्यते अनिच्छतोऽपि दुष्कर्मसु प्रवृत्तिदर्शनात् । तथा सुखदुःखानां भोक्तुश्च अस्वातन्त्र्यं लक्ष्यते स्वातन्त्र्ये दुःखभोगस्यासम्भवात् । एवं चेत्तर्हि विवशं कालकर्मगुणाधीनं पुरुषं कोऽन्वर्थो विषयो भजेत् सुखयेत्॥१७॥ननु कर्मसु कुशलाः सुखमेव भजन्ति अकुशला दुःखमिति चेत्तत्राह—नेति ॥ विदुषां तत्तदुपायाभिज्ञानामपि देहिनां क्वचिदपि कदाचिदपि किंचिदपि सुखं न विद्यते साधनदशायां धनादिप्राप्तिदशायां च वित्तव्ययादिदुःखसत्वात् । तथा मूढानामपि दुःखं किंचिन्नास्ति तेषामपि प्रारब्धवशाद्भोगैश्वर्यादिसुखदर्शनात्।वस्तुतस्तु सुखदुःखादेरन्तःकरणधर्मत्वादुभयत्रापि परं केवलं वृथैवाहंकरणमहं सुख्यहं निपुणोऽहं दुःखी मूर्ख इत्यहङ्कार इति ॥१८॥ यदीति ॥ यदि केऽपि सुखस्य प्राप्तिं प्राप्त्युपायं तथा दुःखस्य विघातोपायं च जानन्ति तदा तेऽप्यद्धा साक्षात् यथा मृत्युर्न प्रभवेत्तथा योगमुपायं तु न विदुः॥१९॥कोऽन्वर्थ इति॥अर्थो धनं कामः शब्दादिविषयो वा एनं देहिनं कः सुखयति न कोऽपि । यतः अन्तिके समीपे वर्तमानो मृत्युर्न तुष्टिदः तुष्टिं न

अत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते ॥ भोक्तुश्च दुःखसुखयोः कोऽन्वर्थो विवशं भजेत् ॥१७॥ न देहिनां सुखं किञ्चिद्विद्यते विदुषामपि ॥ तथा च दुःखं मूढानां वृथाहंकरणं परम् ॥ १८ ॥ यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः ॥ तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा ॥ १९ ॥ कोऽन्वर्थः सुखयत्येनं कामो वा मृत्युरन्तिके ॥ अघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥२०॥ श्रुतं च दृष्टवद्दुष्टं स्पर्धासूयात्ययव्ययैः ॥ बह्वन्तरायकामत्वात्कृषिवच्चापि निष्फलम् ॥ २१ ॥ अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः ॥ तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥ इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ॥ भुञ्जीत देववत्तत्र भोगान् दिव्यान्निजार्जितान् ॥ २३ ॥ स्वपुण्योपचिते शुभ्रे विमान उपगीयते ॥ गन्धर्वैर्विहरन् मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥

ददाति आघातं वधस्थानं प्रति नीयमानस्य पुरुषस्य यथा स्रक्चन्दनमिष्टान्नादिकं न सुखयति तथेति॥२०॥श्रुतमिति॥श्रुतं स्वर्गादिसुखमपि दृष्टसुखवत्स्पर्द्धासूयादिभिर्दुष्टं दुःखमिश्रितमेव तत्र स्वर्गे स्पर्द्धा परसुखासहनम् असूया पुण्यवतोऽपि परस्य गुणेषु दोषाविष्करणम् अत्ययो भोगान्ते नाशः व्ययः प्रत्यहं क्षयः । यद्वा । व्ययो नाशः अत्ययः अन्यस्यातिशयः तं दृष्ट्वा तदप्राप्त्या दुःखम् । किं च बहवोऽन्तराया वैगुण्यादिरूपा विघ्ना यस्मिन् कामे सुखे तस्य भावस्तत्त्वं तस्मात् दुर्लभं चेति शेषः । कृषिर्यथा बहुविघ्ना भवति तथेति । तथा च बहुसुखत्वेन श्रुतमपि स्वर्गादिकं निष्फलमेव॥२१॥ विघ्नवैगुण्याभावेऽपि नाशदुःखं दुष्परिहरमाह—अन्तरायैरिति ॥ यदि अन्तरायैः अविहतः धर्मः सुष्ठु अनुष्ठितः तदाऽपि तेन धर्मेण निर्जितं साधितं स्थानं पुमान् यथा गच्छति तन्मत्तः शृणु ॥ २२ ॥ इष्ट्वेति ॥ याज्ञिकः पुरुषः इह लोके यज्ञैर्देवता इन्द्रादीन् इष्ट्वा समाराध्य स्वर्लोकं याति । तत्र निजार्जितान् स्वानुष्ठितकर्मप्रापितान् दिव्यान् भोगान् देववद्भुञ्जीत भुंक्ते ॥ २३ ॥ स्वेति ॥ देवीनामप्सरसां मध्ये तासां हृद्यवेषधृक्

मनोहररूपधारी सन् विहरन् स्वपुण्येनोपाचिते प्रापिते शुभ्रे श्रेष्ठे विमाने स्थितो गन्धर्वैरुपगीयते ॥ २४ ॥ स्त्रीभिरिति ॥ किङ्किणीजालमालिना क्षुद्रघण्टिकासमूहशोभिना कामगेन यथेच्छं गच्छता विमानेन सुराक्रीडेषु देवोद्यानेषु नन्दनादिषु स्त्रीभिः सह निर्वृतः सुखितः क्रीडन्नात्मनः पातं पुण्यान्ते ततो भ्रंशं न वेद ॥ २५ ॥ तावदिति ॥ यावत्पुण्यं भोगेन समाप्यते तावत्स्वर्गे प्रमोदते। ततः क्षीणपुण्यस्तु अनिच्छन्नपि कालेन चालितः पातितः अर्वाक् अधः पतति ॥ २६ ॥ इष्ट्वेह देवता इत्याद्युक्तं सुखाभासमपि तदैवाप्नोति यदि विध्यनतिक्रमेण काम्ये प्रवृत्तिः स्यात् विधिलङ्घनेनाधर्मे प्रवृत्तौ तु दुर्गतिरित्याह—यदीति युग्मम् ॥ यदि चेत् असतां विषयासक्तानां सङ्गात् अधर्मे रतः अजितेन्द्रियः वाशब्दात् कश्चित्स्वतोऽप्यजितेन्द्रियः अत एव कामात्मा विषयाविष्टचित्तः अत एव कृपणो दीनः अतः लुब्धो भोगतृष्णाकुलः अत एव स्त्रैणः स्त्रीलम्पटः अत एव भूतविहिंसकः प्राणिपीडाकरो भवति तदा तु दुष्टैः प्रलोभितो धनाद्यर्थमविधिना शास्त्रविधानं विनैव पशून् आलभ्य हत्वा भूतादीन् यजन् जन्तुः यष्टा अवशः सन्

स्त्रीभिः कामगयानेन किङ्किणीजालमालिना ॥ क्रीडन्न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥ २५ ॥ तावत् प्रमोदते स्वर्गे यावत्पुण्यं समाप्यते ॥ क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः ॥ २६ ॥ यद्यधर्मरतः सङ्गादसतां वाऽजितेन्द्रियः ॥ कामात्माः कृपणो लुब्धस्त्रैणो भूतविहिंसकः ॥ २७ ॥ पशूनविधिनाऽऽलभ्य प्रेतभूतगणान् यजन् ॥ नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः ॥ २८ ॥ कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनः ॥ देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥ २९ ॥ लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ॥ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥ ३० ॥ गुणाः सृजन्ति कर्माणि गुणोऽनुसृजते गुणान् ॥ जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥ ३१ ॥ यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ॥ नानात्वमात्मनो यावत्पारतन्त्र्यं तदेव हि ॥ ३२ ॥

नरकान् गत्वा तत्रत्यं दुःखमनुभूयात्युल्बणं घोरं तमः अज्ञानबहुलं स्थावरादियोनिं याति ॥ २७ ॥ २८ ॥ कर्माणीति ॥ दुःखमेवोदर्कमुत्तरफलं येषां तानि कर्माणि देहेन कुर्वन् तैः कृतैः कर्मभिः पुनर्देहमाभजते प्राप्नोति। तत्रैवं संसारचक्रे वर्तमानस्य मर्त्यधर्मिणः मरणस्वभावस्य किं सुखं न किंचित् ॥ २९ ॥ स्वर्गादयो लोका नित्याः लोकपालाश्चामराः अतस्तेषां नित्यं सुखमस्तीति चेन्नेत्याह—लोकानामिति ॥ लोकानां कल्पजीविनां लोकपालानां चापि मत् मत्तः भयमस्ति। किं बहुना द्वौ परार्धौ परमायुर्यस्य तस्य ब्रह्मणोऽपि मत्तः कालात्मकाद्भयं भवति ॥ ३० ॥ कर्तृभोक्तृरूप आत्मेत्यपि निराकरोति—गुणा इति ॥ गुणाः गुणकार्याणीन्द्रियाणि कर्माणि सृजन्ति उत्पादयन्ति नत्वात्मा गुणः सत्वादिः गुणान् इन्द्रियाणि अनुसृजते प्रवर्तयति न त्वात्मा। तद्भावः। एवमात्मनः कर्तृत्वं नास्ति भोक्तृत्वमप्यौपाधिकमित्याह। असौ जीवस्तु गुणैर्देहेन्द्रियादिभिः संयुक्तः अध्यासेनैकतामापन्न एव कर्मफलानि सुखदुःखानि भुङ्क्ते अनुभवति ॥ ३१ ॥ आत्मनो नानात्वमपि निराकरोति—यावदिति ॥ यावत् गुणानां वैषम्य-

महङ्कारमिन्द्रियादिरूपेण परिणामः स्यात्तावदेव तदुपाधिकमात्मनो नानात्वम् । यावच्च देहादिरूपेण परिणतेषु गुणेष्वात्माध्यासेनात्मनो नानात्वं तदैव तावदेव पारतन्त्र्यं कामाधीनत्वम् ॥ ३२ ॥ यावदिति ॥ यावच्चास्यात्मनः अस्वातन्त्र्यं कर्माधीनत्वं तावदेवेश्वरतः कालरूपात् मत्तो भयं भवति अतो ये जना एतत् गुणवैषम्यं तत्कृतं भोगं कर्म च समुपासीरन् आसक्त्याहंममाभिमानेन सेवेरन् । त एव लोकादीनां प्रागुक्तानां विनाशित्वात् शुचा शोकेनार्पिताः प्रोताः सन्तो मुह्यन्ति क्लिश्यन्ति एतेन प्रवृत्तिमार्ग एव श्रेयानिति सूचितं तन्निरस्तम् ॥ ३३ ॥ काल इति ॥ प्रकृतिगुणानां व्यतिकरे क्षोभे मायारूपे सति कालः आत्मा ईश्वरः आगमः शास्त्रं लोकः स्वभावः देवत्वादिपरिणामहेतुः धर्मः तद्भोगकारणम् । इत्यादिशब्दैः बहुधा मामेव प्राहुः । नत्वेते मत्तो व्यतिरिक्ताः एतेन कुत्रचित्कालाधीनत्वं कुत्रचिदीश्वराधीनत्वमित्यादिपरस्परविरोधः परिहृतः ॥ ३४ ॥ गुणेष्विति ॥ अयं भावः गुणेषु असत्सु मुक्तिः सत्स्वेव वा आद्ये साधनाभावान्न मुक्तिः । द्वितीये तु हे विभो गुणेषु देहादिषु वर्तमानोऽपि देही देहजेषु कर्मसु सुखदुःखादिषु च कथं न बध्यते । यदि त्वाकाशवदनावृतत्वान्न बध्यते तदा अनपावृतः कथं बध्यते ॥ ३५ ॥ यदि तु सत्स्वेव गुणेषु तदहंकारेण बध्यते तन्निवृत्त्या च

यावदस्याऽस्वतन्त्रत्वं तावदीश्वरतो भयम् ॥ य एतत् समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥ ३३ ॥ काल आत्मागमो लोकः स्वभावो धर्म एव च ॥ इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥ ३४ ॥ उद्धव उवाच ॥ गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ॥ गुणैर्न बध्यते देही बध्यते वा कथं विभो ॥ ३५ ॥ कथं वर्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ॥ किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥ ३६ ॥ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ॥ नित्यबद्धो नित्यमुक्त एक एवेति मे भ्रमः ॥ ३७ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे दशमोऽध्यायः ॥ १० ॥ श्रीभगवानुवाच ॥ बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥ गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ १ ॥

मुच्यत इति मतं तर्हि कथं ज्ञातव्यमिति पृच्छति—कथमिति ॥ बद्धो मुक्तो वा कथं वर्तेत कथं विहरेत् कैर्वा लक्षणैः ज्ञायेत किं भुञ्जीत कथं भुङ्क्ते कथं विसृजेत् एवं कथं शयीत शेते आसीत याति वा । बद्धस्य मुक्तस्य वर्तनविहरणभोजनादीनि तुल्यान्येव दृश्यन्ते तानि साभिमानानि निरभिमानानि वा मया कैर्लक्षणैर्ज्ञायेरन् ॥ ३६ ॥ एतदिति ॥ हे अच्युत हे प्रश्नविदां वर एतत् बद्धमुक्तवैलक्षण्यविषयकं मम प्रश्नं प्रतिब्रूहि एक एवात्मा अनादिगुणसंबन्धान्नित्यबद्धः मुक्तेर्जन्यत्वे अनित्यत्वप्रसङ्गान्नित्यमुक्त इत्यप्यङ्गीकार्यं स्यात् । तत्रास्मिन्नर्थे मम भ्रमो भवति ॥ ३७ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्य दशमे व्यधादङ्गनासहायकः ॥ १० ॥ एकादशे बद्धमुक्तसाधूनां च निरूपणम् ॥ भक्तेश्च लक्षणं तत्र श्लोका नवपयोधयः[४९] ॥ उवाचवाचां त्रितयं स्युः पञ्चाशदनुष्टुभः ॥ ११ ॥ बद्ध इति ॥ आत्मा बद्धो मुक्त इति या व्याख्या व्यवहारः सा मे गुणतः मदधीनेभ्यो गुणेभ्य एव तत्कार्येष्वध्यासाद्बन्धः तन्निवृत्त्या च मोक्षः न तु वस्तुतः । स्वरूपतस्तु न बन्धो न वा मोक्षः अतो गुणस्य मायामूलत्वान्न-

नियन्तुर्मे तत्राध्यासाभावान्न मोक्षो न च बन्धनम् ॥ १ ॥ शोकेति ॥ यथात्मबुद्धेरेव ख्यातिर्विवर्त्तः स्वप्नो मिथ्या तथा शोकमोहौ सुखं दुःखं देहापत्तिर्देहान्तरप्राप्तिः देहस्यापत्तिर्मृत्युर्वा मायया तदध्यासेनात्मनि प्रतीयन्ते । अतो जीवस्यापि संसृतिरौपाधिक्येव न वास्तवी स्वरूपतः । अत एकस्याप्यध्यासप्राप्तत्वाद्बद्धत्वं वस्तुतस्तदभावान्नित्यमुक्तत्वं च घटत इत्याशयः ॥ २ ॥ विद्येति ॥ हे उद्धव विद्याविद्ये मम तनू तन्येते मोक्षबन्धावाभ्यामिति तनू शक्ती यतो मे मायया विनिर्मिते मायावृत्तिरूपत्वात् ते एव शरीरिणां जीवानां क्रमेण बन्धमोक्षकर्यौ । पूर्वसवर्णदीर्घ आर्षः । ननु तत्कार्यत्वे बन्धमोक्षयोरनादित्वनित्यत्वे न स्यातां तत्राह । ते चाद्ये अनादी अतो यावदविद्यां प्रवर्त्तयामि तावद्बन्धः यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः । ततः पूर्वमेव निर्मिते ॥ ३ ॥ नन्वात्माभेदे जीवो नाम कोऽन्योऽस्ति पृथक् कथं च बन्धमोक्षसुखदुःखादिव्यवस्था तत्राह—एकस्येति ॥ हे महामते एकस्यैव ममांशस्य अस्य जीवस्यैव अविद्यया अनादिर्बहुकालिको बन्धोऽस्ति मद्दत्तया विद्यया स्वरूपसाक्षात्कारेण तथेतरो मोक्षश्च भवति । तथा चाविद्यायां प्रतिबिम्बस्य मदंशस्य जीवस्यैतत्कृतो बन्धः तन्निवृत्तौ मोक्षः तस्य चोपाधितो भेदान्नाव्यवस्था ॥ ४ ॥ तदेवं व्यवस्थामुपपाद्य कथं वर्तेते-

**शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया ॥ स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥ २ ॥ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ॥ मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ ३॥ एकस्यैव ममांशस्य जीवस्यैव महामते ॥ बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः ॥ ४ ॥ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ॥ विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥ ५ ॥ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ॥ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ॥ योऽविद्यया युक्स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥ ७ ॥**

त्यादिप्रश्नोत्तरमाह । तत्र वैलक्षण्यं द्विधा जीवेश्वरयोरेकं मिथो जीवानां चैकं तत्राद्यमाह—अथेति ॥ अथ हे तात विरुद्धधर्मिणोः शोकानन्दधर्मवतोः एकस्मिन्धर्मिणि शरीरे नियम्यनियन्तृत्वेन स्थितयोर्जीवेश्वरयोर्मध्ये बद्धस्य मुक्तस्य वैलक्षण्यं ते तुभ्यं वदामि ॥ ५ ॥ सुपर्णाविति ॥ एतौ जीवेश्वररूपौ सुपर्णौ वृक्षात्पृथग्भूतपक्षिणाविव देहात्पृथग्भूतौ सदृशौ चिद्रूपत्वात् । सखायौ अवियोगादुपकार्योपकारितया स्थितत्वाच्च यदृच्छया अनिरुक्तया मायया वृक्षे वृश्च्यत इति वृक्षो देहः । "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।"इति स्मृतेः।तस्मिन् कृतं नीडं हृदयरूपं निकेतनं याभ्यां तौ तयोर्मध्ये एको जीवः पिप्पलान्नं पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलं सुखदुःखादिकं खादति भक्षयति अनुभवति । अन्य ईश्वरस्तु निरन्नः कर्मफलविषयभोगरहितोऽपि निजानन्दतृप्तत्वात् । बलेन ज्ञानादिशक्त्या भूयान् ततोऽधिकः । श्रुतिश्च "द्वा सुपर्णा सयुजा सखाया" इत्यादि ॥ ६ ॥ बलाधिक्यमाह—आत्मानमिति ॥ तत्र यः अपिप्पलादो विद्वान् स आत्मानमन्यं जीवं च वेद जानाति यस्तु पिप्पलादः स

त्वात्मानं परमात्मानं च न वेद अतो देहादिकमेवात्मतयाभिमन्यत इत्याशयः । अतो यः अविद्यया युक् युक्तः स तु नित्यबद्धः । यस्तु विद्यामयः सर्वज्ञ ईश्वरः स तु नित्यमुक्तः ॥ ७ ॥ अथ बद्धमुक्तजीवानां मिथो वैलक्षण्यमाह–देहस्थोऽपि इति ॥ विद्वान् जीवन्मुक्तः संस्कारवशेन देहस्थोऽपि वस्तुतो देहस्थो न भवति । तत्र दृष्टान्तमाह।यथा स्वप्नादुत्थितः स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तदभिमानाभावेन तद्गतसुखदुःखाद्यभावात्तद्वदिति तथा कुमतिः देहाद्यात्माध्यासवान् अज्ञो वस्तुतः अदेहस्थोऽपि देहस्थो भवति तन्निमित्तसुखदुःखाद्यनुभवात् यथा स्वप्नदेहगत इति ॥८॥ इन्द्रियैरिति ॥ गुणैः गुणकार्यैः इन्द्रियैरिन्द्रियार्थेष्वपि गुणेषु शब्दादिविषयेषु गृह्यमाणेषु यः विद्वान् अविक्रियः रागादिशून्यः सः अहं अहंकारं न कुर्यात् अहम् गृह्णामीति न मन्यते । अत्राहमित्यव्ययम् ॥ ९ ॥ दैवेति ॥ अबुधस्तु दैवाधीने पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानो गुणभाव्येन इन्द्रियकार्येण कर्मणाहं कर्तास्मीत्यभिमानेन तत्र देहादौ निबध्यते । एतैस्त्रिभिः श्लोकैः कथं वर्तेतेत्यस्य प्रश्नस्य सुखदुःखशून्यो

देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद्यथोत्थितः ॥ अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग् यथा ॥८॥ इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ॥
गृह्यमाणेष्वहं कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥ दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ॥ वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते
॥ १० ॥ एवं विरक्तः शयन आसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥ न तथा बध्यते विद्वांस्तत्र तत्रादयन्गुणान् ॥
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः ॥ १२॥ वैशारद्येक्षयाऽसङ्गशितया छिन्नसंशयः ॥ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥१३॥
यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् ॥ वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥ १४ ॥

निरभिमानश्च देहे वर्तेत इत्युत्तरमुक्तं भवति ॥ १० ॥ किं भुञ्जीतेत्यस्योत्तरमाह–एवमिति युग्मम् ॥ एवं शयनादिश्रवणाद्यन्तेषु वर्तमानोऽपि विरक्तः रागरहितः एवमन्यगतमेव कर्म मां बध्नातीत्येवं विद्वांस्तत्र तत्र विषयेषु गुणान् इन्द्रियाणि आदयन् भोजयन् प्रकृतिस्थः प्रकृतिकार्ये देहादिसङ्घाते स्थितोऽपि तत्रासंसक्तोऽहंममाभिमानरहितः सन् तथा अज्ञवन्न निबध्यते ।यथा खं सर्वत्र स्थितमपि यथा सविता जले प्रतिबिम्बितोऽपि यथाऽनिलः सर्वत्र संचरन्नपि न कुत्रापि सज्जते तथा तत्र तत्र गुणान् इन्द्रियाण्यादयन्नपि न बध्यते ॥ ११ ॥ १२ ॥ वैशारद्येति ॥ असङ्गेन सर्वत्र वैराग्येण शितया तीक्ष्णया वैशारद्या निपुणया ईक्षया बुद्ध्या छिन्नाः संशयाः असंभावनादयो यस्य सः स्वप्नात्प्रतिबुद्ध इव नानात्वात् अहं मनुष्योऽयं देवः अयं पशुरिदं मदीयमित्यादिभेददर्शनात् विशेषेण निवर्तते ॥ १३ ॥ कथं विहरेदित्यस्योत्तरमाह–यस्येति ॥ यस्य प्राणादीनां वृत्तयो व्यापाराः वीतसंकल्पाः इदमदनीयमिदं संपाद्यमित्यादिसंकल्परहिताः स्युः स देहस्थोऽपि तद्गुणैर्देहगुणैर्विमुक्तो ज्ञेयः ॥ १४ ॥

एवं बद्धमुक्तयोः स्वसंवेद्यं वैलक्षण्यमुक्तम् । अथ " कैर्वा ज्ञायेत लक्षणैः " इत्यस्योत्तरतया परैरपि सुज्ञेयं वैलक्षण्यमाह—यस्येति ॥ यस्यात्मा देहः हिंस्रैर्दुर्जनैर्हिंस्यते पीड्यते येन केनचिद्यदृच्छया अर्च्यते वा तथापि सः बुधश्चेत्तत्र क्वचिदपि न व्यतिक्रियते न विक्रियते दुर्जनेषु न कुप्यति सुजनेषु न हृष्यति ॥ १५ ॥ नेति ॥ साध्वसाधु वा कुर्वतो वदतो वा जनान्न स्तुवीत न च निन्देत । तदर्थः । गुणदोषाभ्यां वर्जितः सर्वव्यवहारविमुखः मुनिः मौनशीलः समदृक् स मुक्त इति शेषः ॥ १६ ॥ नेति ॥ अतः मुनिः मननशीलः आत्मारामः आत्मन्येव रममाणोऽपि बहिस्तु यः किंचित्साधु वैदिकमसाधु दैहिकमपि कर्म न कुर्यान्न किंचिदपि वदेन्न ध्यायेत् किं त्वनया प्रकृतिस्थोऽप्यसंसक्त इत्युक्तया वृत्त्या जडवद्विचरेत्स मुक्तः एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि । मुक्तलक्षणविरुद्धं बद्धलक्षणं ज्ञेयम् ॥ १७ ॥ शब्देति ॥ यस्तु शब्दब्रह्मणि वेदाख्ये निष्णातः केवलम् अर्थतः पारज्ञतोऽपि यदि परे ब्रह्मणि न निष्णायात् ध्यानाद्यभ्यासेन तदेकनिष्ठो न स्यात्तदा तस्याध्ययनादिशास्त्रश्रमः श्रमैकफलो न तु

यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद्यदृच्छया ॥ अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥ न स्तुवीत न निन्देत कुर्वतः

साध्वसाधु वा ॥ वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥ १६ ॥ न कुर्यान्न वदेत्किञ्चिन्न ध्यायेत्साध्वसाधु वा ॥ आत्मारामोऽ-

नया वृत्त्या विचरेज्जडवन्मुनिः ॥१७॥ शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ॥ श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८॥

गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ॥ वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ॥१९॥ यस्यां न मे

पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधमस्य ॥ लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥ एवं जिज्ञासयाऽ-

पोह्य नानात्वभ्रममात्मनि ॥ उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥२१॥

पुरुषार्थपर्यवसायी । यथा अधेनुं चिरप्रसूतां पुनः प्रसवाशाहीनां निःक्षीरां गां क्षीरार्थं रक्षतो जनस्य तद्रक्षाश्रमैकफला तथेत्यर्थः ॥ १८ ॥ गामिति ॥ अङ्ग हे उद्धव दुह्यत इति दोहः पयो दुग्धो दोहो नोत्तरत्र दोह्योऽस्ति यस्यास्तामग्रे प्रसवरहितां गाम् असतीं कामचारदुर्भाषणादिभिर्दुष्टां भार्यां च पराधीनं परपोष्यं देहम् असत्प्रजां दृष्टादृष्टसाधनशून्यं पुत्रम् अतीर्थीकृतमागतेभ्यः पात्रेभ्यः अदत्तं दुष्कीर्तिदुरितापादकं वित्तं धनं च मया हीनां मद्गुणादिप्रतिपादनरहितामन्यविषयां वाचं च यो रक्षति स दुःखदुःखी दुःखानन्तरमपि दुःखमेवास्ति यस्य तथाभूतो भवतीत्यर्थः ॥ १९ ॥ यस्यामिति ॥ अङ्ग हे उद्धव अस्य विश्वस्य स्थित्यादिरूपं तद्धेतुरित्यर्थः । श्रवणादिपराणां पावनं पावित्र्यकरं मम कर्म चरित्रं यस्यां वाचि प्रतिपाद्यतया न स्यात् तथा लीलावतारेषु ईप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म यस्यां न स्यात्तां वन्ध्यां निष्फलां गिरं वाचं धीरो धीमान् न बिभृयात् न धारयेत् ॥ २० ॥ एवमिति ॥ एवं जिज्ञासया विचारेण जीवात्मनि नानात्वभ्रमं देवमनुष्यादिदेहाध्यासमपोह्य निरस्य विरजं निर्मलं

मनः सर्वगे परिपूर्णे मयि भगवति अर्प्य समर्प्य संधार्य । ल्यबार्षः । कर्मानुष्ठानशास्त्राभ्यासादिकृत्यादुपारमेत न शास्त्रपाण्डित्यमात्रेणेत्यर्थः । तङार्षः ॥ २१ ॥ यदीति ॥ मयि ब्रह्मणि निश्चलं यथा भवति तथा मनो धारयितुं यदि त्वमनीशः अशक्तस्तदा निरपेक्षः फलकामनारहितः सन् सर्वाणि वर्णाश्रमविहितानि कर्माणि समाचर अनुतिष्ठ । ततो विशुद्धया मनो निश्चलं भविष्यतीत्याशयः । यद्वा । मयि मन्निमित्तं सर्वाणि कर्माणि समाचर तेन कर्मफलभोक्तृत्वं न भविष्यतीति भावः ॥ २२ ॥ कर्मभिर्विशुद्धसत्वस्य अन्तरङ्गां भक्तिमाह—श्रद्धालुरिति युग्मम् ॥ श्रद्धाया अन्तरङ्गत्वात् तद्वान् सुभद्राः पुण्यावहाः लोकस्य पावनीः पापनिवर्तिकाः मम कथाः शृण्वन् अनुगायन् श्रोतरि वक्तर्यसत्यपि निरन्तरं मुहुः स्मरन् तथा सेवनैर्मज्जन्माद्यभिनयन् अनुकुर्वन् तथा मत्प्रीत्यर्थं धर्मादीनाचरन् सेवमानः तत्र धर्मस्य भगवत्प्रीत्यर्थं सेवनं कामानां तत्प्रसादतया स्रगन्धवासोऽलङ्कारादेर्धारणम् अर्थस्य तदाराधनोपयोगिधनाद्युपार्जनम् एवं सर्वथाहमेवाश्रयो यस्य स जनः हे उद्धव सनातने सर्वकारणकारणे मयि

यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ॥ मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥ श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः ॥ गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः ॥ २३ ॥ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ॥ लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ २४ ॥ सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता ॥ स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥ २५ ॥ उद्धव उवाच ॥ साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो ॥ भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥२६॥ एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो ॥ प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम् ॥ २७ ॥ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ॥ अवतीर्णोऽसि भगवन्स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥ श्रीभगवानुवाच ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ॥ सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥

निश्चलां भक्तिं लभते ॥ २३ ॥ २४ ॥ सदिति ॥ एवं सतां साधूनां सङ्गेन लब्धया मयि भक्त्या यः भक्तो मामुपासिता ध्याता भवति स च ध्यानशीलः सद्भिर्दर्शितं वै निश्चितं परमं पदं मत्स्थानं मत्स्वरूपं चाञ्जसा सुखेनैव विन्दते लभते ॥ २५ ॥ पूर्वश्लोके साधुसङ्गलब्धया भक्त्येत्युक्तं तत्र साधुं पृच्छति—साधुरिति ॥ हे उत्तमश्लोक हे प्रभो स्वमत्या लोकाः बहून् साधून् मन्यन्ते परंतु तव तु कीदृशः साधुः संमतः तथा भक्तिरपि लोके बहुविधाऽस्ति तत्र सद्भिर्नारदादिभिरादृता या त्वयि उपयुज्येत सा भक्तिः कीदृशी ॥ २६ ॥ एतदिति ॥ स्पष्टम् ॥ २७ ॥ त्वमिति ॥ हे भगवन् त्वं परमं ब्रह्म व्योमवदसङ्गः यतः प्रकृतेः परः नियन्ता पुरुषः एवंभूतोऽपि स्वेषां भक्तानामिच्छयोपात्तं स्वीकृतं पृथक् परिमितं वपुर्येन तथाभूतः सन्नवतीर्णोऽसि ॥ २८ ॥ कृपालुरिति ॥ कृपालुः परदुःखासहिष्णुः सर्वदेहिनां केषांचिदपि अकृतद्रोहः तितिक्षुः परापराधसहिष्णुः सत्यमेव सारः साधनश्रेष्ठं यस्य सः अनवद्यः असूयादिदोषरहित आत्मा यस्य सः शत्रुमित्रादिषु समः यथाशक्ति सर्वेषामुपकारकः ॥ २९ ॥

कामैरिति ॥ कामैरहता अक्षुभिता धीर्यस्य सः दान्तो निगृहीतेन्द्रियः मृदुः कोमलचित्तः शुचिः सदाचारः अकिञ्चनः परिग्रहशून्यः अनीहः लौकिकालौकिकफलव्यापाररहितः मितभुक् लघ्वाहारः शान्तः नियतान्तःकरणः स्थिरः मद्भक्तौ निश्चलः मच्छरणः मदेकाश्रयः मुनिर्मननशीलः ॥ ३० ॥ अप्रमत्त इति ॥ अप्रमत्तः सावधानः गभीरात्मा निर्विकारः धृतिमान् आपत्स्वप्यकृपणः जितषड्गुणः जिताः क्षुत्पिपासे शोकमोहौ जरामृत्यू इति षडूर्मय एते षड् गुणा येन सः अमानी स्वसत्कारानभिलाषी अन्येभ्यो मानदः सत्कारकर्ता कल्पः परबोधने दक्षः मैत्रः अवञ्चकः कारुणिकः करुणयैवोपकारको न दृष्टलोभेन कविः तत्त्वज्ञः ॥ ३१ ॥ आज्ञायेति ॥ धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान् तत्त्यागे चित्तमालिन्यादिदोषांश्चाज्ञाय ज्ञात्वापि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेन हेतुना मया वेदरूपेणादिष्टान् उपदिष्टानपि सर्वान् स्वधर्मान् संत्यज्य अथवा विद्धैकादश्युपवासकृष्णैकादश्यनुपवासान्निवेद्य श्राद्धादयो ये भक्तिविरुद्धा धर्माः तान् संत्यज्य यो मां भजेत सोऽप्येवं पूर्वोक्तवत्सत्तमः साधुः ॥ ३२ ॥

कामैरहतधीर्दान्तो मृदुः शुचिरकिंचनः ॥ अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥ अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः ॥ अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥ आज्ञायैवं गुणान्दोषान्मयाऽऽदिष्टानपि स्वकान् ॥ धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः ॥ ३२ ॥ ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान्यश्चास्मि यादृशः ॥ भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥ मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् ॥ परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ॥ सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥ ३५ ॥ मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ॥ गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥ यात्रा बलिविधानं च सर्ववार्षिकपर्वसु ॥ वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥ ३७ ॥

ज्ञात्वेति ॥ अहं यावान् देशकालापरिच्छिन्नो यश्च सर्वात्मा यादृशः सच्चिदानन्दरूपोऽस्मि तं मां ज्ञात्वाज्ञात्वा पुनः पुनः शास्त्रगुरूपदेशतो विशेषतो ज्ञात्वा । यद्वा । याथातथ्येन ज्ञात्वा अज्ञात्वा वा अनन्यभावेन विषयान्तरासक्तिराहित्येन प्रेम्णा ये मां भजन्ति ते मे मम भक्ततमा मताः ॥ ३३ ॥ साधुलक्षणमुक्त्वा भक्तेर्लक्षणमाह—मल्लिङ्गेति ॥ मम लिङ्गानि प्रतिमादीनि तेषां मद्भक्तजनानां च दर्शनादि परिचर्या पादसंवाहनादिरूपा प्रणामः प्रसिद्धः ॥ ३४ ॥ मदिति ॥ सर्वलाभोपहरणं सर्वस्य लब्धस्य वस्तुनो मयि समर्पणं दास्येन निमित्तेनात्मनः सानुबन्धस्य देहस्य निवेदनं मदीयत्वेन स्थापनम् ॥ ३५ ॥ मज्जन्मेति ॥ मम जन्मनां कर्मणां च कथनं मम पर्वाणि जन्माष्टम्यादीनि तेषामनुमोदनम् । अनुमोदनप्रकारमेवाह । गीतेत्यादि ॥ ३६ ॥ यात्रेति ॥ यात्रा मद्दर्शनाद्यर्थगमनम् । सर्वेषु वार्षिकपर्वसु प्रतिवर्षभवेषु जन्माष्टम्येकादश्यादिषु विशेषतो बलिविधानं पूजाविधानं विशेषपुष्पोपहारादिसमर्पणं च वैदिकी तान्त्रिकी दीक्षा मन्त्रग्रहणेन संस्कारसंपत्तिः मदीयव्रतानामेकादश्युपवासादीनां धारणमाचरणम् ॥ ३७ ॥

ममेति ॥ ममार्चा मूर्तिस्तस्याः स्थापने श्रद्धा आदरः तथा उद्यानादिकर्मणि तेषां करणे सामर्थ्ये सति स्वतः तदभावे चान्यैः संभूयोद्यमः तत्र उद्यानं पुष्पप्रधानं वनम्। उपवनं तु फलप्रधानम्। आक्रीडं क्रीडास्थानम्। पुरं प्राकारवेष्टनम् ॥ ३८ ॥ सम्मार्जनेति ॥ अमायया फलाभिसन्धिलक्षणकपटत्यागेन दासवत् संमार्जनादिभिर्मह्यं मम गृहस्य शुश्रूषणं संमार्जनं रजसोपाकरणम्। उपलेपः गोमयोदकादिभिरालेपनं ताभ्यां सेको जलेन प्रोक्षणं मण्डलवर्त्तनं सर्वतो भद्रादिकरणम् ॥ ३९ ॥ अमानित्वमिति ॥ अमानित्वमभिमानराहित्यम्। अदम्भित्वं लोके मिथ्यास्वभक्तिख्यापनराहित्यम्। कृतस्यापरिकीर्तनम्। "धर्मः क्षरति कीर्तनात्" इति स्मृतेः। मे मह्यं निवेदिते दीपे अवलोकनमपि न कुर्यात् तद्दोषपरिहारार्थं वर्तिद्वयदीपं कुर्यात् इत्याहुः। तथा स्वयमन्येन वा निवेदितं न स्वीकुर्यात्। एतच्च साधारणस्थावरविषयं रागप्राप्तविषयं वा। भक्त्या तु ग्राह्यमेव सर्वशास्त्रेषु विष्णुनिर्माल्यसेवनस्य मोक्षादिप्रदत्वोक्तेः। यद्वा। अन्यस्मै निवेदितं दीपादिकं किंचिदपि मे मह्यं नोपयुञ्ज्यात् न निवेदयेदित्यर्थः।"विष्णोर्निवेदि-

ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ॥ उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥ संमार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः ॥ गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ३९ ॥ अमानित्वमदम्भित्वं कृतस्यापरिकीर्त्तनम् ॥ अपि दीपविलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥ यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥ सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ॥ भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥ ४२ ॥ सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ॥ आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना ॥ ४३ ॥ वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ॥ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥

तान्नेन यष्टव्यं देवतान्तरम् ॥ पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥ पितृशेषं तु यो दद्याद्धरये परमात्मने। रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः॥" इत्यादिवचनेभ्यः ॥ ४० ॥ यद्यदिति ॥ यद्यत् लोके लोकस्य सर्वजनस्येष्टतमं तत्सर्वं मह्यं निवेदयेत्। यद्वा। लोके शास्त्रे च यद्यत् इष्टतमं तेन दर्भमञ्जर्यादीनि शास्त्रविहितान्यपि लोके इष्टतमानि न सन्ति तथा मद्यादीनि लोके संकर्षणप्रियाण्यपि शास्त्रे इष्टतमानि न सन्त्यतस्तानि न निवेदयेदिति यच्चात्मनोऽतिप्रियं वस्तु तत्तत्सर्वं मह्यं निवेदयेत्। यतस्तन्मन्निवेदितमानन्त्याय कल्पते अक्षय्यसुखाय भवति ॥ ४१ ॥ सूर्य इति ॥ हे भद्र सूर्यादीनि एकादश मे मम पूजापदानीति ॥ ४२ ॥ सूर्य इति ॥ सूर्ये तु त्रय्या विद्यया सूक्तैरुपस्थानादिना मां यजेतेति सर्वत्रान्वयः। अङ्ग हे उद्धव यवसादिना तृणादिना आदिशब्दात् कण्डूयनादिना। स्पष्टमन्यत् ॥ ४३ ॥ वैष्णव इति ॥ वैष्णवे बन्धुवत्सत्कृत्या संमाननेन हृदयाकाशे मुख्याधिया सूत्राख्यप्राणदृष्ट्या तोये जले तोयादिभिर्द्रव्यैः आदिपदेन गन्धपुष्पाक्षतादिग्रहणम् ॥ ४४ ॥

स्थण्डिले इति ॥ स्थण्डिले प्रलिप्तसंस्कृतायां भुवि मन्त्रहृदयैः रहस्यमन्त्रन्यासैः आत्मनि देहादिसङ्घाते भोगैः अयं देहोऽपि भगवतोऽधिष्ठानमिति बुद्ध्या दत्तैः न तु लोभेन दत्तैः शास्त्रानिषिद्धैर्विषयैरात्मानं जीवं यजेत । सर्वभूतेषु प्राणिमात्रेषु समत्वेन समदृष्ट्या क्षेत्रज्ञं साक्षिणं मां यजेत ॥ ४५ ॥ धिष्ण्येष्विति ॥ समाहितः एकाग्रचित्तः एषु धिष्ण्येषु शङ्खादियुक्तं चतुर्भुजं शान्तं मद्रूपं ध्यायन् इत्युक्तेन प्रकारेणार्चेत् ॥ ४६ ॥ इष्टेति ॥ इष्टं यज्ञादिवैदिकं कर्म पूर्तमन्नप्रदानादि स्मार्तं कर्म तयोः समाहारस्तेन यः समाहितः सावधानः सन्नेवमुक्तप्रकारेण मां यजेत सः साधुसङ्गेन मयि सद्भक्तिं परमप्रेमात्मिकां लभते तस्य च निरन्तरं मत्स्मृतिर्भवतीति शेषः । यद्वा । इत्थं मत्स्मृतिः साधुसेवया भवति । यद्वा । इत्थं भक्तिमतः पुंसः साधुसेवया मत्स्मृतिः ज्ञानं भवति ॥ ४७ ॥ प्रायेणेति ॥ प्रायेण सत्सङ्गेन यो भक्तियोगस्तेन विना सध्र्यङ् समीचीनो मत्प्राप्त्युपायो न विद्यते । हि यस्मात्सतामहं प्रायणं प्रकृष्टमयनमतः सत्सङ्गो मद्भक्तेरन्तरङ्गम् इत्यर्थः । ज्ञानमार्गादपि भक्तियोगः श्रेयानित्याशयः ॥ ४८ ॥इदानीं सत्सङ्गः

**स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥ धिष्ण्येष्वेष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः ॥ युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः ॥ ४६ ॥ इष्टापूर्तेन मामेवं यो यजेत समाहितः ॥ लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ ४७ ॥ प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ॥ नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ ४८ ॥ अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन ॥ सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा ॥४९॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवाद एकादशोऽध्यायः॥११॥ श्रीभगवानुवाच ॥ न रोधयति मां योगो न सांख्यं धर्म एव च ॥ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ १ ॥ व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ॥ यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २ ॥**

साधनान्तराणि नापेक्षते फलाव्यभिचारीणि सांख्ययोगादीनि तु न तथेति वर्णयितुमाह—अथेति ॥ हे यदुनन्दन अथैतत् वक्ष्यमाणं परमं गुह्यं रहस्यमतः शृणु यतस्त्वं मे भृत्यः सेवकः सुहृत् शुद्धान्तःकरणः सखा चातः तुभ्यं सुगोप्यमपि इदं तु वक्ष्यामि ॥ ४९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशैकादशके व्यधाद्भक्तसहायकः ॥११॥ द्वादशे साधुसङ्गस्य महिमा वर्ण्यते ततः ॥ कर्मतत्त्यागव्यवस्थास्तत्र श्लोकाश्चतुर्दश ॥ त्रीण्युवाचेति पादाब्धाऽष्टाविंशं त्रिरनुष्टुभः ॥ १२॥ नेति युग्मम् ॥ यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगादिकं न रोधयति न वशीकरोति । हि यतः स सर्वसङ्गापहः अन्यसङ्गनिवर्तकः तत्र योग आसनप्राणायामादिसांख्यं तत्त्वानां विवेकः धर्मः सामान्यतः परोपकारादिः स्वाध्यायो वेदाध्ययनं तपः कृच्छ्रादिः त्यागः संन्यासः इष्टं च पूर्तं च इष्टापूर्तम् । तत्र इष्टं वैदिकमग्निहोत्रादि कर्म पूर्तं कूपारामादिनिर्माणं स्मार्तं कर्म दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते । व्रतानि एकादश्युपवासादीनि यज्ञो देवपूजा छन्दांसि रहस्यमन्त्राः तीर्थानि नियमाः शौचादयः यमाः अहिं-

सादयः ॥ १ ॥ २ ॥ सदिति चतुष्कम् ॥ हि यस्मात् सत्सङ्गेन रजस्तमःप्रकृतयोऽपि दैतेययातुधानादयः बहवस्तस्मिंस्तस्मिन् युगे युगे मत्पदं प्राप्ताः । तत्र यातुधाना राक्षसाः त्वाष्ट्रो वृत्रः कयाधुनाम्नी दानवी तस्यापत्यं कायाधवः प्रह्लादः अनयोर्जन्मतः प्रागेव नारदसङ्गः वृषपर्वा जातमात्र एव मातृपरित्यक्तो मुनिपालितो विष्णुभक्तोऽभूदिति पौराणिकी प्रसिद्धिः । बलेः प्रह्लादसङ्गः बाणस्य कपालोर्महादेवस्य सङ्गः मयस्य सभानिर्माणे पाण्डवसङ्गः बिभीषणस्य हनुमत्सङ्गः सुग्रीवादीनां त्रयाणां लक्ष्मणसङ्गः गजो गजेन्द्रः अस्य पूर्वजन्मनि नारदादिसङ्गः गृध्रो जटायुः अस्य गरुडदशरथादिसङ्गः वणिक्पथः तुलाधारो भारतप्रसिद्धः । व्याधः धर्मव्याधः अस्य राक्षसतां प्राप्तस्य वराहपुराणदृष्टेन वैष्णवेन सङ्गः कुब्जायाः पूर्वजन्मनि नारदसङ्गः इति माथुरहरिवंशे प्रसिद्धम् । गोप्यो मुनिवर्यादयः पूर्वजन्मनि कृतबहुसाधुसङ्गा एतज्जन्मनि नित्यसिद्धगोपीसङ्गिन्यः यज्ञपत्नीनां व्रजस्थकृष्णदूतीभिर्मालिकताम्बूलिकादिस्त्रीभिः क्रयविक्रयाद्यर्थं मथुराप्रस्थानसमये सङ्गः । तथा परे अनुक्ता अपि बहवः ॥३॥४॥५॥६॥

सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ॥ गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥४॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा बलिर्बाणो मयश्चाथ बिभीषणः ॥५॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥ व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ॥ ६ ॥ ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ॥ अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः ॥ ७ ॥ केवलेन हि भावेन गोप्यो गावो नगा मृगाः ॥ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥ यं न योगेन सांख्येन दानव्रततपोऽध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥९॥ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥ विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥ १० ॥

त इति ॥ न अधीताः श्रुतिगणा यैस्ते तथा न तदर्थमुपासिताः सेविताः महत्तमाः पण्डिता यैस्ते । किंच । न विद्यन्ते व्रतानि येषां ते तथा न तप्तानि तपांसि यैस्ते च ते तथा केवलात्सतां सङ्गादेव मामुपागताः ॥ ७ ॥ केवलेनेति ॥ केवलेन भावेन मदावेशितचित्तेनैव हेतुना गोप्यः शृङ्गाररसेन गावो वात्सल्यरसेन नगाः पर्वता गोवर्द्धनाद्याः सख्येन नगा वृक्षा वा वृन्दावनादिस्थाः नागाः कालीयाद्याः दास्येन येऽन्ये मूढधियस्तेऽपि सिद्धाः कृतार्था निर्मुक्तबन्धनाः सन्तोऽञ्जसा अनायासेनैव मामीयुः ॥ ८ ॥ यमिति ॥ योगादिभिः यत्नवान् कृतप्रयत्नोऽपि यं मां न प्राप्नुयात्तं मामीयुरिति पूर्वेणान्वयः । व्याख्या शास्त्रव्याख्यानम् । अत्र च प्रथमं या गोप्यः पश्चादयो वा श्रीकृष्णेन सह सङ्गताः ते सन्तः तत्सङ्गोऽन्येषां सत्सङ्गः तेन च तेषां भक्तिरिति ज्ञेयम् ॥ ९ ॥ रामेणेति ॥ श्वाफल्किना अक्रूरेण कर्त्रा रामेण सह मयि मथुरां प्रणीते नीते सति मयि विगाढेन भावेन प्रेम्णा अनुरक्तानि संसक्तानि चित्तानि यासां ताः वियोगेन तीव्रो दुःसह आधिर्यासां ताः गोप्यः मत्तोऽन्यं सुखाय न ददृशुः ॥ १० ॥

तास्ता इति ॥ अङ्ग हे उद्धव वृन्दावनगोचरेण प्रेष्ठतमेन च मया सह याभिर्या याः क्षपा रात्रयः सुखाधिक्यात् क्षणार्द्धवन्नीता यापितास्तास्ता वाचामगोचरा इत्यर्थः । या या इति पाठस्तु सुगमः । रात्रयो मया हीनास्तासां गोपीनां कल्पसमा बभूवुः ॥ ११ ॥ ता इति ॥ मयि अनुषङ्गेण आसक्त्या बद्धा धियो याभिस्ता गोप्यः स्वमात्मानं देहम् अदः दूरस्थम् इदं सन्निहितं च नाविदन् । यद्वा । स्वं पतिपुत्रादिममतास्पदम् । आत्मानं देहमहंकारास्पदम् अदः परलोकम् इदं दृश्यमानमिमं लोकं च न अविदन् । यथा समाधौ स्थिता मुनयो न किंचिद्विदुस्तथेत्यर्थः । किंतु यथा नामरूपे विहाय नद्योऽब्धितोये प्रविष्टा भवन्ति तथा ता अपि नामरूपे त्यक्त्वा मयि प्रविष्टाः ॥ १२ ॥ मत्कामा इति ॥ मत्कामाः अस्वरूपविदः मत्स्वरूपमपि न जानन्ति ताः शतसहस्रशः अबला अपि रमणं जारं जारबुद्धिवेद्यमपि परमं ब्रह्म मां सत्सङ्गात्प्रापुः ॥ १३ ॥ तस्मादिति युग्मम् ॥ यस्मादेवंभूतो मद्भजनप्रभावस्तस्मात् हे उद्धव त्वं चोदनां विधिं प्रति चोदनां विधिप्रतिकूलं निषेधं च शास्त्रम् । यद्वा । श्रुतिं स्मृतिं च तथा शास्त्र-

तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृंदावनगोचरेण ॥ क्षणार्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥ ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ॥ यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥ मत्कामा रमणं जारमस्वरूपविदोऽबलाः ॥ ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ १३ ॥ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥ प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥१४॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥ याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ १५ ॥ उद्धव उवाच ॥ संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ॥ न निवर्त्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥ श्रीभगवानुवाच ॥ स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ॥ मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७ ॥

मुत्सृज्य अनादृत्य सर्वदेहिनामेकमात्मानं मामेव सर्वात्मभावेन सर्वत्रात्मभावनया सर्वप्रकारेण शरणं याहि । अतो मयैव स्वामिना त्वमकुतोभयः स्याः भवेः ॥ १४ ॥ १५ ॥ संशय इति ॥ हे योगेश्वरेश्वर पूर्वं तावन्मयोदितेष्ववहितः स्वधर्मेषु इत्यादिना कर्म कर्तव्यमित्युक्तम् । इदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते । अतस्तव वाक्यं शृण्वतो ममात्मस्थः आत्मनि कर्तृत्वाद्यस्ति नास्ति वेत्यात्मविषयः । यद्वा । आत्मनि मनसि स्थितः कर्म कार्यं त्याज्यं वेति संशयो न निवर्त्तते । येन संशयेन मे मनो भ्राम्यति अतस्तं निवर्तयेति शेषः । यद्वा । सर्वदेहिनामेकमात्मानं मां शरणं याहीति । तव वाचं शृण्वतो मम आत्मस्थः आत्मविषयकः संशयः सर्वदेहिनामेक एवात्मा कथमित्याकारः न निवर्त्तते अतः यथाहं सम्यग्बुध्येय तथा स्फुटं कथयेति ॥ १६ ॥ स एष इति ॥ स एषः अपरोक्षः जीवयतीति जीवः परमेश्वरः विवरेषु आधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य घोषेण पराख्येण नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन् मनोमयं मनोग्राह्यं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे

विशुद्धचक्रे च उपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णः अकारादिरित्येवं वैखर्याख्यः स्थविष्ठः अतिस्थूलो नानावेदशास्त्रात्मको भवति । तथा च श्रुतिः । "चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहासु त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति । " इति । श्रुतेरर्थस्तु वाचः परिमितानि शास्त्राणि तानि चत्वारि पदानि स्थानानि परा पश्यन्ती मध्यमा वैखरीति तानि च ये ब्राह्मणा मनीषिणोऽध्यात्मकुशलाः ते विदुः तेषां मध्ये लोकाः आदौ त्रीणि पदानि शरीरे आधारनाभिहृदयेषु निहितानि नेङ्गयन्ति न जानन्ति तुरीयं चतुर्थं वैखर्याख्यं मनुष्या वदन्ति मनुष्याणां वदने वर्त्तमानोऽर्थबोधकः शब्दो भवतीत्यर्थः ।"विवक्षवात्मेरितस्वान्ताहिताग्निचलितो मरुत् । व्यनक्ति यां मूलदेशे सा वाणी कथ्यते परा । नाभौ व्यनक्ति पश्यन्तीं मध्यमां हृदये व्रजन् । मूर्द्धाघातान्मुखं प्राप्तः स्पष्टवर्णां स वैखरीम् ॥" इति स्फुटार्थं पद्यम् । साम्बपञ्चाशिकायां सूर्यस्तुतौ श्लोकश्च । " या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तः प्रकटकरणैः प्राणसङ्गात्प्रसूते । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ " श्लोकार्थश्च । तां त्रिविधां भारतीं प्रपद्ये या सा मित्रावरुणसदनात् अग्निसोमस्थानात् उच्चरन्ती उद्भवन्ती मित्रोऽग्निर्वरुणः सोमः तयो स्सदनं परमात्मा यतः श्वासः शीतोष्णत्वं च त्रिषष्टिं वर्णान् जनयति वायुसङ्गजान् प्रकटकरणैः बुद्धिं गतैः प्रत्यक्षरूपैः इन्द्रियैः अन्तः

यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः ॥ अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥१८॥
एवं गदिः कर्मगतिर्विसर्गो घ्राणो रसो दृक्स्पर्शः श्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः ॥ १९ ॥

पश्यति न तूच्चारयति सा पश्यन्त्याख्या । तां प्रथममुदितामुत्पन्नां बुद्धि संस्थाम् उच्चारयामीति विचारयुक्तां मध्यमां मुखेऽवस्थितां करणविशदां स्थानप्रयत्ननिर्मलां वैखरीं च प्रपद्ये । त्रिषष्टिर्वर्णाश्च ह्रस्वदीर्घप्लुतभेदेन स्वरा एकविंशतिः । ऌलोरप्लुतत्वात् एचामह्रस्वत्वाच्च हलस्त्रयस्त्रिंशत् पञ्चविंशतिः स्पर्शाः चत्वारोऽन्तस्थाः चत्वार ऊष्माणः अनुनासिका यमाः पञ्चविसर्गानुस्वारो ⁐क⁐पौ चेति ॥१७॥ यथेति ॥ यथा खे अनलः ऊष्मा अव्यक्तोष्मरूपो बलेन दारुणि अधिकं मथ्यमानः अनिलबन्धुः अनिलसहायः सन् सूक्ष्मविस्फुलिङ्गादिरूपो जातो भवति । ततश्च प्रकृष्टो जातो हविषा समिध्यते संवर्धते तथैवेयं वाणी ममाभिव्यक्तिरिति ॥ १८ ॥ एवमिति ॥ एवं गदिर्गदनं भाषणं मेऽभिव्यक्तिरिति सर्वत्रानुषङ्गः । कर्म हस्तयोर्वृत्तिः गतिः पादयोः वृत्तिः विसर्गः मलमूत्रत्यागः पायूपस्थयोर्वृत्तिरिति कर्मेन्द्रियाणां घ्राणोऽवघ्राणं रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति नासादिपञ्च ज्ञानेन्द्रियाणां वृत्तयः संकल्पो मनसः विज्ञानं बुद्धिचित्तयोः अभिमानोऽहङ्कारस्य वृत्तिः सूत्रं प्रधानस्य वृत्तिः एवं रज आदिविकारः कार्यरूपः सर्वोऽपि प्रपञ्चो मे व्यक्तिः । तत्र रजसः कार्यमिन्द्रियवर्गः सत्त्वस्य तद्देवतावर्गः तमसः पृथ्व्यादिमहाभूतानीति प्रपञ्चो मे व्यक्तिरित्यनुषङ्गः ॥ १९ ॥

तस्मादीश्वरादिव्यक्तिरूपः प्रपञ्चो नेश्वराद्भिन्नोऽस्तीत्याह—अयमिति ॥ अयं जीवः ईश्वरः आदावव्यक्त एक एव । हि शब्दोऽवधारणे । यतः स एव आद्यः कारणं त्रिवृत् त्रिगुणाश्रयः अब्जयोनिः लोकपद्मस्य कारणभूतः वयसा कालेन विश्लिष्टा विभक्ता वागादीन्द्रियरूपाः शक्तयो यस्य । यद्वा । विशेषेण श्लिष्टा आलिङ्गिता मायाशक्तिर्येन स बहुप्रकार इव भाति । यथा योनिमभिव्यक्तिस्थानं क्षेत्रं प्रतिपद्य प्राप्य बीजान्येव वृक्षादिरूपेण बहुधा भान्ति तद्वदिति ॥२०॥ यस्मिन्निति ॥तन्तुविताने संस्था स्थितिर्यस्य स पटो यथा दीर्घतन्तुषु ओतः तिर्यक्तन्तुषु प्रोतस्तन्तुभ्यो न पृथक् तथेदं समष्टिव्यष्ट्यात्मकं विश्वमपि यस्मिन् कारणात्मके ईश्वरे ओतं प्रोतं ततः पृथक् न भवतीत्यर्थः । य एष उक्तविधः समष्टिव्यष्ट्यात्मको देहः स एव संसारतरुः वृक्षवत् स्वाध्यासद्वारा जन्ममरणाद्यात्मकसंसारस्य कारणम् । पुराणः अनादिः कर्मात्मकः प्रवृत्तिस्वभावः अत एव पुष्पफले भोगापवर्गौ । यद्वा । पुष्पमदृष्टं फलं सुखदुःखादिकं च प्रसूते जनयति ॥ २१ ॥ द्वे इति ॥ द्वे पुण्यपापे अस्य बीजे स च शतमूलः शतमपारिमिता वासना मूलानि यस्य सः त्रयो गुणा नालानि प्रकाण्डा यस्य पञ्चमहाभूतानि स्कन्धा यस्य पञ्च शब्दादयो विषया रसास्तेषां प्रसूतिः यस्मिन् दशेन्द्रियाणि एकं मनश्च

अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ॥ विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः ॥ य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥२१॥ द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः ॥ दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः ॥ २२ ॥ अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ॥ हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥२३॥ एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ॥ विवृश्च्य जीवाशयमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे द्वादशोऽध्यायः ॥१२॥

शाखा यस्य सः द्वयोः सुपर्णयोः जीवपरमात्मनोः पक्षिणोर्नीडं यस्मिन् त्रीणि वातपित्तश्लेष्मरूपाणि वल्कलानि त्वचो यस्य सः । द्वे सुखदुःखे फले यस्य सः अर्कं प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्तः तन्निर्भिद्य गतस्य संसाराभावात् ॥ २२ ॥ अदन्तीति ॥ गृध्यन्तीति गृध्राः विषयाभिलाषिणः ग्रामेचरा गृहस्थाः अस्य शरीरवृक्षस्य एकमविद्यामयं दुःखात्मकं फलमदन्ति परिणामतः स्वर्गादिसुखस्यापि दुःखरूपत्वात् । हंसा विवेकिनः अरण्यवासाः संन्यासिनः एकं विद्यामयं सुखरूपं फलमदन्ति । एवं मायामयं मायया "एकोऽहं बहु स्याम्" इति संकल्परूपया बहुरूपं जातमेकं परमात्मानम् इज्यैः पूज्यैः गुरुभिः कृत्वा यो वेद जानाति स एव वेदं वेद वेदतत्त्वार्थं जानाति तस्य देहाद्यात्माध्यासनिरासात् सर्वसाधनत्याग एव युक्तः ॥ २३ ॥ एवमिति ॥ एवमुक्तेन प्रकारेण अप्रमत्तः सावधानः धीरो जितेन्द्रियश्च सन् गुरुसेवया लब्धया मदेकभक्त्या शितेन तीक्ष्णेन विद्याकुठारेण आत्मसाक्षात्कारात्मकज्ञानपरशुना वेति द्वयोर्ज्ञानभक्त्योः स्वतन्त्रता जीवाशयं जीवोपाधिं त्रिगुणात्मकलिङ्गशरीरं विवृश्च्य छित्त्वा परमात्मानं

च संपद्य प्राप्य अथानन्तरमत्रं शास्त्रोक्तं साधनसमूहं त्यज । अत्र संशयः शृण्वत इत्यादि प्रश्नस्य प्रथमव्याख्याभिप्रायकत्वे स एष इत्यादिप्रकरणस्य उत्तररूपस्यायं भावः । ईश्वरस्तावत्स्वमायावशात्प्रपञ्चात्मना भाति तत्प्रपञ्चाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि ततो विधिप्रतिषेधाधिकारः तदानीं सत्वशुद्ध्यर्थं कर्माणि कुर्वित्युक्तम् । सत्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय भक्तिविक्षेपककर्मादरं परित्यज्य दृढविश्वासेन भजेत्युक्तम् । जातायां तु विद्यायां न किंचित्कर्तव्यमस्तीति प्रश्नस्य द्वितीयव्याख्याभिप्रायकत्वे तु परमेश्वर एक एव प्रपञ्चात्मना जीवात्मना च बहुधा भाति । भेदप्रतीतिमूलभूताविद्याजनितलिङ्गशरीरस्य विद्यया नाशे चाध्यासनिवृत्त्या जीवः परमेश्वरेणैक्यं सिद्धमेव प्राप्नोति इति ॥ २४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशद्वादशके व्यधाद्गङ्गासहायकः ॥ १२ ॥ त्रयोदशे सत्त्ववृद्ध्या विद्योदय उदीर्यते ॥ गुणचेतो वियोगश्च श्लोकास्तत्र द्विर्विंशद्वयः ॥ सँमोवाचेति सार्द्धाः षट्चत्वारिंशदनुष्टुभः ॥ १३ ॥ जीवाशयस्य त्रिगुणमयत्वात्त्रिगुणोपशमे जीवाशयच्छेदो भवतीत्याह—सत्वमिति ॥ सत्वं रजः तम इति बुद्धेः प्रकृतेरेव गुणा न त्वात्मन इति अतः सत्वेन सत्त्ववृद्ध्या अन्यतमौ हन्यात् रजस्तमोवृत्ती जयेदित्यर्थः । सत्वं च सत्यदया-

॥ श्रीभगवानुवाच ॥ सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ॥ सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि ॥ १ ॥ सत्त्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः ॥ सात्त्विकोपासया सत्त्वं ततो धर्मः प्रवर्तते ॥ २ ॥ धर्मो रजतमो हन्यात्सत्त्ववृद्धिरनुत्तमः ॥ आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥ आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ॥ ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥ ४ ॥ तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते ॥ निन्दन्ति तामसं यत्तद्राजसं तदुपेक्षितम् ॥ ५ ॥

दिवृत्तिरूपमुपशमात्मकेन सत्वेनैव हन्यात् ॥ १ ॥ सत्वादिति ॥ वृद्धात्सत्वात्पुंसो मद्भक्तिरूपो धर्मो भवेत् । ततश्च रजस्तमोनिरासो भवत्येव । सात्विकानां पदार्थानामुपासनया सेवया सत्त्वं वृद्धं भवति ततो धर्मः प्रवर्तते ॥ २ ॥ धर्म इति ॥ सत्त्वाद्वृद्धिर्यस्य सः अत एव न विद्यते उत्तमो यस्मात्सर्वोत्तमो भक्तिलक्षणो धर्मो रजस्तमश्च हन्यात् । तस्मिन् उभयस्मिन् हते सति तन्मूलः ते रजस्तमसी रागद्वेषादिना मूलं यस्य स विद्याप्रतिबन्धकः अधर्मोऽप्याशु विनश्यति ॥ ३ ॥ आगम इति ॥ आगमः शास्त्रम् अपः आपः । दीर्घाभाव आर्षः। आगमोऽर्थ इत्यपि पाठः।प्रजाः पुत्रः जनाश्च देशः काश्यादिः कालो वसन्तादिः कर्म वेदोक्तं जन्म ब्राह्मणादि सत्कुले जन्म दीक्षादिकं च ध्यानं च देवादीनां मन्त्रो द्वादशाक्षरादिः संस्कारः जातकर्मादिः एते आगमादयो दश गुणानां वृद्धिहेतवः ॥ ४ ॥ तदिति ॥ एषामागमादीनां मध्ये यद्यद्वृद्धा ज्ञानवृद्धाः प्रचक्षते प्रशंसन्ति तत्तदेव सात्त्विकम् । यद्यच्च निन्दन्ति तत्तामसम् । यत्तु तैर्वृद्धैरुपेक्षितं न च स्तुतं न च निन्दितं तद्राजसम् ॥ ५ ॥

सात्त्विकानीति ॥ सत्वगुणस्य विवृद्धये पुमान् तेषु सात्त्विकान्येव साधनानि सेवेत । ततः सात्त्विकसेवातो भक्तिलक्षणो धर्मो भवति ततश्च यावत्स्मृतिरात्मसाक्षात्कारः यावच्च अपोहनं देहद्वयतत्कारणभूतगुणत्रयापोहः तावत्पर्यन्तं ज्ञानं भवति तत्र सात्विकानि निवृत्तिशास्त्राण्येव सेवेत न प्रवृत्तिपाखण्डशास्त्राणि तीर्थजलान्येव सेवे त न गन्धोदकसुरादीनि प्रजाजनाः निवृत्तान् जनान् सेवेत न प्रवृत्तिपरान् । विविक्तमेव देशं सेवेत न रथ्याद्यूतादिदेशान् । कालं ब्राह्ममुहूर्त्तादिकं ध्यानादौ न प्रदोषनिशीथादीन् । कर्म च नित्यनैमित्तिकमेव सेवेत न काम्याभिचारादीनि । जन्म च वैष्णवदीक्षालक्षणं सेवेत न शाक्तक्षुद्रदीक्षारूपम् । ध्यानं च श्रीविष्णोरेव कुर्यान्न कामिनीसखिविद्विषाम् । मन्त्रं च प्रणवादिकमेव जपेन्न काम्यक्षुद्रादीन् । संस्कारं चात्मशोधकमेव कुर्यान्न केवलं देहगृहादिशोधकं स्नानमार्जनादिकम् । अन्यथा रजस्तमोवृद्धिरपि स्यादित्याशयः॥६॥ वेणुसङ्घर्षज इति ॥ वेणूनां सङ्घर्षाज्जातोऽग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तत्स्वकारणभूतं वेणुवनं सर्वं दग्ध्वा स्वयमपि शाम्यति एवं तत्क्रियः तस्याग्नेरिव क्रिया व्यापारो यस्य सः गुणव्यत्ययाज्जातो देहोऽपि स्वत उत्पन्नेन ज्ञानेन स्वकारणभूतान् गुणान्निरस्य स्वयं शाम्यति ॥ ७ ॥ विदन्ति इति ॥ हे कृष्ण यद्यपि केचित् मर्त्याः प्रायेण

सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये ॥ ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥ ६ ॥ वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ॥
एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ॥ ७॥ उद्धव उवाच ॥ वदन्ति मर्त्याः प्रायेण विषयान्पदमापदाम् ॥ तथापि भुञ्जते कृष्ण तत्कथं
श्वखराजवत् ॥ ८ ॥ श्रीभगवानुवाच ॥ अहमित्यन्यथा बुद्धिः प्रमत्तस्य यथा हृदि ॥ उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥
रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ॥ ततः कामो गुणध्यानादुःसहः स्याद्धि दुर्मतेः ॥ १० ॥ करोति कामवशगः कर्माण्यविजिते-
न्द्रियः ॥ दुःखोदर्काणि संपश्यन्रजोवेगविमोहितः ॥ ११ ॥

विषयान् आपदां दुःखानां पदं स्थानं विदन्ति जानन्ति तथापि तद् तान् कथं भुञ्जते कुतो न ततो विरक्ता भवन्ति । श्वानो यथा भर्त्स्यमाना अपि शुनीमुच्छिष्टग्रासं वा भुञ्जते । खरा यथा पद्भ्यां ताड्यमाना अपि खरीमनुधावन्ति । अजा यथा हन्तुमानीता अपि अजां प्रतिधावन्ति । तद्वदेतेऽपि कथं स्वपराभवमननुसन्दधाना विषयासक्ता भवन्ति इत्यर्थः ॥८॥ मिथ्याभिनिवेशेन भुञ्जते इति सहेतुकमाह—अहमिति ॥ प्रमत्तस्य विचारशून्यस्याविवेकिन आदौ देहादावहमिति अन्यथा मिथ्याबुद्धिर्हृदि यथावदुत्सर्पति उत्पद्यते ततोऽहंबुद्धेश्च वैकारिकं सत्त्वकार्यत्वात्सत्त्वप्रधानमपि मनः प्रति घोरं दुःखकारणं रजः उत्सर्पति मनो व्याप्नोतीत्यर्थः॥९॥ रज इति ॥ दुर्मतेः अविवेकिनः रजोयुक्तस्य च मनसः प्रथमम् इदं भोग्यमिति संकल्पः ततश्च इदमेवमिदमेव भोग्यमिति साविकल्पः सविशेषः संकल्पः भोग्यताविषयको वृत्तिविशेषः स्यात् । ततश्च अहोरूपमहो माधुर्यमिति गुणध्यानात् दुःसहः कामो भोगाभिनिवेशः स्यात् भवति ॥ १० ॥ करोतीति ॥ अतो यतो रजोगुणवेगेन विमोहितः अत एवाजितेन्द्रियः अत एव कामवशगः

ततो दुःखफलानि संपश्यन् जानन्नपि कर्माणि विषयभोगोपायान् करोति ॥ ११ ॥ एवं चेत्कस्यापि दुःखनिवृत्तिर्न स्यात्तत्राह–रज इति ॥ विद्वान् विवेकी तु यत् यद्यपि कदाचित् रजस्तमोभ्यां विक्षिप्ता धीर्यस्य तथाभूतो भवति उपलक्षणतया मूढधीश्च भवति तथापि विषयेषु दोषदृष्टिः पुनः अतन्द्रितः आलस्यरहितः प्रयत्नेन मनो युञ्जन् निरुन्धन् विषयेषु न सज्जते ॥ १२ ॥ एवमपि मनोनिरोधाशक्तौ सुखोपायमाह–अप्रमत्त इति ॥ अनिर्विण्णः मनसो दुर्धरत्वात् विलम्बे सत्यप्यौदासीन्यरहितः अप्रमत्तः सावधानः जितश्वासो जितासनश्च सन् यथाकालं त्रिषवणं शनैः मयि परमानन्दे मनोऽर्पयन् अनुयुञ्जीत स्थिरीकुर्यादित्यर्थः ॥ १३ ॥ एतावानिति ॥ सर्वतो विषयत आकृष्य मनो यथा यथावत् अद्धा साक्षान्मय्यावेश्यते स्थिरीक्रियत एतावानेव योगो मच्छिष्यैः सनकादिभिरपि मत्तः श्रुतः ततोऽन्येभ्य आदिष्टः । यद्वा । मच्छिष्यैः सनकादिभिः आदिष्टः मत्तः श्रुतः । यद्वा । सनकादिभिः सहिताय ब्रह्मण इति शेषः । मयाऽऽदिष्टः ॥ १४ ॥ यदेति ॥ हे केशव यदा यस्मिन् काले येन रूपेण

**रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः ॥ अतन्द्रितो मनो युञ्जन्दोषदृष्टिर्न सज्जते ॥१२॥ अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयञ्छनैः ॥ अनिर्विण्णो यथाकालं जितश्वासो जितासनः ॥ १३ ॥ एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ॥ सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥१४॥ उद्धव उवाच ॥ यदा त्वं सनकादिभ्यो येन रूपेण केशव ॥ योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥१५॥ श्रीभगवानुवाच ॥ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ॥ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ १६ ॥ सनकादय ऊचुः ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ॥ कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥ १७ ॥ श्रीभगवानुवाच ॥ एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥ स मामचिन्तयद्देवः प्रश्नपारतितीर्षया ॥ तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥**

त्वं सनकादिभ्यो योगमादिष्टवांस्तदेतद्रूपं वेदितुमिच्छामि तत्कथयेति शेषः ॥ १५ ॥ पुत्रा इति ॥ हिरण्यगर्भस्य चतुर्मुखस्य मानसाः इति तेषां सूक्ष्मबुद्धित्वं विषयासक्तिराहित्यं च सूचितम् । पुत्राः सनकादयः पितरं ब्रह्माणं प्रतिसूक्ष्मां दुर्ज्ञेयामैकान्तिकीं योगस्य गतिं परां काष्ठां पप्रच्छुः ॥१६॥ गुणेष्विति ॥ हे प्रभो गुणेषु विषयेषु स्वभावतो रागादिवशाच्चेतः आविशते आसक्तं भवति । तद्धार्षः । ते च गुणा विषयाः स्मर्यमाणा वासनारूपेण चेतसि प्रविशन्ति अतः अतितितीर्षोः संसारार्णवमतिक्रमितुमिच्छोः मुमुक्षोस्तेषां विषयाणां चेतसश्चान्योऽन्यं सन्त्यागो विभागः कथं स्यात् ॥१७॥ एवमिति ॥ महान् देवोऽपि स्वयंभूरपि भूतभावनः सृष्ट्यादिकर्ताप्येवं पृष्टो ध्यायमानो विचारयन्नपि । आर्षः शानच् चानश् वा । यतः कर्मधीः कर्मविक्षिप्तबुद्धिः । अतः प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तन्नाभ्यपद्यत ॥ १८ ॥ स इति ॥ यदा स देवो ब्रह्मा प्रश्नस्य पारमुत्तरं तस्य तितीर्षया जिज्ञासया मामचिन्तयत् । हंसो यथा नीरं क्षीरं च पृथक् कर्तुं शक्तः एवमहं गुणांश्चेतश्चेति द्योतयितुमहं तदा हंसरूपेण तस्य ब्रह्मणः सकाशं समीपमगममुपगतः ॥ १९ ॥

दृष्ट्वेति ॥ तदा ते सनकादयो मां दृष्ट्वा ब्रह्माणमग्रतः कृत्वा उपव्रज्य मत्समीपमागत्य पादाभिवन्दनं कृत्वा को भवानिति पप्रच्छुः ॥ २० ॥ इतीति ॥ हे उद्धव इत्येवमहं तत्त्वजिज्ञासुभिर्मुनिभिः पृष्ट इति पृथक् वाक्यं तेभ्यो यदहमवोचमिति पृथग्वाक्यमतोऽहमिति द्विरुक्तिर्न दोषः । यद्वा । अहन्ताया इभ्यः स्वामी नियन्ता न तु नियम्यः इति अहमित्यस्य विशेषणम् । तन्मे वचनं निबोध ॥२१॥ देहादिविविक्तात्मज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वयमेव विषयचेतसोर्विश्लेषो भवतीति वक्तुं प्रश्नखण्डनमिषेणैव तावदात्मानात्मविवेकं प्राह—वस्तुन इति ॥ हे विप्राः अयं युष्मत्प्रश्नः किमात्मविषयकः किंवा तदुपाधिभूतसङ्घातविषयकः । यद्यात्मविषयकस्तर्हि तस्य वस्तुनः परमार्थभूत-स्यानानात्वे एकत्वे सति वो युष्माभिः कृतः ईदृशः बहुषु निर्धारणरूपः को भवानिति प्रश्नः कथं घटेत अत उत्तरमपि न संभवति । वक्तुर्वा मे मम क आश्रय इति आत्मन एकत्वात्कं जातिगुणादिकं भेदमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥२२॥ सङ्घातविषयकत्व आह—पञ्चेति ॥ पञ्चात्मकेषु पञ्चसु महाभूतेषु अत एव वस्तुतः परमार्थतः समानेषु सत्सु देवमनुष्यादिशरीरेष्वपि को भवानिति वः प्रश्नो हि यस्मात् वाचारम्भो वाङ्मात्रेणारब्धो न परमार्थविचारपूर्वकम् अतोऽनर्थकः ॥ २३ ॥ मनसेति ॥ मनसा वचसा अन्यैरि-

**दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवन्दनम् ॥ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥ इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभि-स्तदा ॥ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ २१ ॥ वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः॥कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥ २२ ॥ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ॥ को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः ॥ २३ ॥ मनसा वचसा दृष्ट्या गृह्यतेऽन्यैर-पीन्द्रियैः ॥ अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ २४ ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ॥ जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥ गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ॥ गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥**

न्द्रियैरपि यद्गृह्यते तत्तत् अहमेव मत्तोऽन्यन्नास्ति इत्यञ्जसा तत्वविचारेण बुद्ध्यध्वम् । एतेनैव सर्वात्मकोऽहमिति को भवानित्यस्योत्तरमुक्तम् ॥ २४ ॥ गुणेष्विति ॥ हे प्रजाः पुत्राः गुणेषु चेत आविशते । तद्भावः । गुणाश्च चेतसि प्रविशन्ति तथापि गुणाश्चेतश्चेत्युभयं संग्रथितं मदात्मनः वस्तुतो ब्रह्मस्वरूपस्य जीवस्य देहः भोगायतनमध्यस्त उपाधिः न तु स्वरूपम् । अयमाशयः । यदि कर्तृत्वभोक्तृत्वादिरूपतया विषयैः संग्रथितं चित्तं चित्तबुद्ध्यादिशब्दवाच्यमेव जीवस्य स्वरूपं भवेत् तदा ततो वियोगो न घटेत तस्य वास्तवं स्वरूपं तु अहं ब्रह्मैव चित्ताध्यासेन तु तत्स्वभावनया विषयैः संग्रथितम् अतः स्वस्य ब्रह्मभावनया विषयाणां मिथ्यात्वानुसंधानेन सर्वतो निर्विद्य भगवन्तं भजतो भवत्येव परिपूर्णरूपावस्थानमिति ॥ २५ ॥ गुणेष्विति ॥ अतः अभीक्ष्णं पुनः पुनः गुणसेवया तत्संस्कारेण गुणेष्वाविशत् आसक्तं यत् चित्तं ये च वासनारूपेण चित्ते प्रकर्षेण भवन्ति प्रविशन्ति तथाभूता गुणाश्चेत्येतदुभयं मद्रूपः सन् मदात्मस्वरूपसाक्षात्कारेण त्यजेत् ॥ २६ ॥

जाग्रदिति॥ जाग्रत् जागरः स्वप्नः सुषुप्तं चेत्येता बुद्धेरेव वृत्तयस्ताश्च न स्वाभाविक्यः।किंतु"सत्वाज्जागरणं विद्यात्"इत्यादिवक्ष्यमाणक्रमेण गुणत एव जीवस्तु तासां वृत्तीनां साक्षित्वेन ततो विलक्षणस्तदवस्थारहित एव विनिश्चितः ॥ २७ ॥ कथं तर्हि अहं जागर्मीत्यादिप्रतीतिस्तत्राह-यर्हीति ॥ यर्हि यस्मात् संस्रियते अनया इति संसृतिर्बुद्धिस्तया। अयं बन्धः एव आत्मनो गुणवृत्तिदः भवति । तस्मात्तुर्येऽवस्थात्रयातीते मयि स्थितः बन्धं जह्यात् त्यजेत् । तत्तदा च गुणचेतसां गुणानां चेतसश्चान्योऽन्यं त्यागो भवति ॥ २८ ॥ कथं संसृतिबन्धः कथं च तं जह्यात्तदाह-अहमिति ॥ अहंकारेण देहादावहमित्यभिमानेन कृतमात्मनो बन्धमर्थविपर्ययं आनन्दाद्यावरणेनानर्थहेतुं विद्वान् जानन् निर्विद्य दुःखमेतदिति विषयाद्विरज्य तुर्ये मयि स्थित एकतापन्नः संसारचिन्तां संसारहेतुभूतं देहाद्यभिमानं तत्कृतां भोगचिन्तां च त्यजेत् ॥ २९ ॥ यावदिति ॥ पुंसो यावन्नानार्थधीर्नानार्थेषु शरीरादिषु अहंममात्मिका धीः गुरूपदिष्टशास्त्राभ्यासजन्याभिर्युक्तिभिर्न निवर्तेत । तावत्सः अज्ञः आत्मज्ञानशून्यः जागर्त्यपि स्वपन्

जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ॥ तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥ यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ॥ मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥ २८ ॥ अहंकारकृतं बन्धमात्मनोऽर्थविपर्ययम् ॥ विद्वान्निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ २९ ॥ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ॥ जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥ असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥ गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ॥ स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥

स्वप्नान्पश्यन्निव भवति । स्वप्ने जागरणं यथेति॥३०॥असत्वादिति ॥ अन्येषां देवमनुष्यादिभावानामसत्त्वात् आत्मन्यविद्यमानत्वात् तत्कृता भिदा वर्णाश्रमादिभेदः । गतयः वेदबोधिताः स्वर्गादिफलानि हेतवः कर्माणि चास्यात्मनो मृषा अविद्याकल्पिता इत्यर्थः । अविद्यावद्विषय एव वेद इति भावः । यथा स्वप्नदृशः स्वप्नद्रष्टुः गत्यादयो मृषा तथेत्यर्थः ॥३१॥ युक्तिभिरित्युक्तं ता युक्तीराह-य इति ॥ त्रिगुणवृत्तिदृक् जागराद्यवस्थात्रयद्रष्टा इन्द्रियाणामीशः यो जागरे अनुक्षणधर्मिणः अनुक्षणं बाल्यतारुण्यादयः विनाशवैरस्यादयो वा धर्मास्सन्ति येषां तान् अर्थान् बहिः समस्तकरणैश्चक्षुरादिभिः भुङ्क्ते यश्च स्वप्ने हृदि तत्सदृक्षान् जागरदृष्टसदृशान् वासनामयान् विषयान् भुङ्क्ते यश्च सुषुप्ते संस्कारशेषायां बुद्धौ तान्सर्वानुपसंहरते सः स्मृत्यन्वयात् स्मृत्या प्रतिसन्धानेन सर्वावस्थास्वन्वयात् यः स्वप्नानद्राक्षं यश्च तदनन्तरं न किंचिदवेदिषं स एव एतर्हि जागर्मीति प्रत्ययात् हेतोः सः तिसृषु अपि अवस्थासु एक एव विश्वतैजसप्राज्ञभेदस्तु उपाधिकृत एव एतेन बाल्ययुवाद्यवस्थास्वपि प्रतिसन्धानेनात्मैक्यं द्रष्टव्यमिति ॥ ३२ ॥

एवमिति ॥ अत एवमुक्तप्रकारेण विमृश्य विचार्य गुणतो या एता मनसस्त्र्यवस्थास्ता मन्मायया स्वरूपावरकाविद्यया मयि मदंशभूते जीवे कृता न तत्त्वतः सन्तीति निश्चितोऽर्थः आत्मस्वरूपो यैस्ते यूयमनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च तीक्ष्णेन ज्ञानासिना अखिलानां संशयानामात्मनो देहादिभिन्नत्वाभिन्नत्वैकत्वानेकत्वादीनामाधिम् आधीयन्तेऽस्मिन्नित्याधिरहङ्कारस्तं संछिद्य हार्दं हृदि स्थितं मा मां भजत। यद्वा। अखिलसंशयानामाधिं पडिकं नाशकं मां भजत ॥ ३३ ॥ अनुमानानि दर्शयति—ईक्षेतेति ॥ इदं जगत् विभ्रममीक्षेत। तत्र हेतवः यतः मनसो विलासरूपं मनोविलासरूपत्वादित्यर्थः। एवमग्रेऽपि तथा दृष्टम्। विनष्टं विनश्वरम् अतिलोलं चञ्चलं च अलातचक्रवत् यथा स्वप्नः स्वप्नो यथेति दृष्टान्तौ एवम् अनुमिनुयादित्यर्थः। अत एकं विज्ञानमेकमेव मनसा कल्पितम् उरुधा विभाति त्रिधा देहेन्द्रियान्तःकरणरूपो योऽयं गुणविसर्गकृतो विकल्पो भेदः स माया अविद्याकल्पित इत्यर्थः ॥ ३४ ॥ दृष्टिमिति ॥ यस्माद्देहादिकं सर्वमात्मनि कल्पितं तस्मात्ततो देहादेर्दृष्टिं प्रतिनिवर्त्य तत्राहंममाभिमानं

एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ॥ संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३ ॥ ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥ ३४ ॥ दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ॥ संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥ ३५ ॥ देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरां मदान्धः ॥ ३६ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रति समीक्षत एव सासुः ॥ तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३७ ॥

त्यक्त्वा निजसुखानुभवः परमानन्दस्वरूपात्मानुसन्धानपरो भवेत्। तन्निश्चल्यार्थं च निवृत्ततृष्णस्तूष्णीं निरीहश्च भवेत्। मनोवाक्कायव्यापाररहितो भवेदित्यर्थः। क्वचिदावश्यकाहारादिषु यद्यपीदं देहादिकं संदृश्यते तथापि यतः पूर्वमवस्तुबुद्ध्या आत्मातिरिक्तनिश्चयेन त्यक्तमतस्तत्पुनर्मोहाय न भवेदेव किंतु आनिपातात् देहपातपर्यन्तं तस्य स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः ॥ ३५ ॥ देहमिति ॥ सिद्धः आत्मनिष्ठः दैवात् प्रारब्धकर्मवशादासनादुत्थितम् उत्थाय स्थितम् उपविष्टं वा ततः क्वचिदपेतं निर्गतं पुनस्तत्रैवोपेतमागतं वा नश्वरमिदं देहमपि न पश्यति नानुसन्धत्ते कुतोऽन्यत्। यतो येन देहेन स्वरूपमध्यगमत् तं देहम्। यद्वा। यतो यस्मात्कारणात् स्वरूपमध्यगमत् आत्मतत्त्वं ज्ञातवान्। यथा मदिरामदेनान्धः पुरुषः परिकृतं परिहृतं वासस्तत्र स्थितं पतितं वा नानुसन्धत्ते तद्वदित्यर्थः ॥ ३६ ॥ नन्वेवं देहोऽपि म्रियेतेत्याशङ्क्याह—देहोऽपीति ॥ सासुः प्राणेन्द्रियसहितः देहोऽपि यतो दैववशगः प्रारब्धाधीनः अतः स्वारम्भकं कर्म यावदस्ति तावत्पर्यन्तं प्रतिसमीक्षत एव जीवत्येव प्रतिबुद्ध ज्ञातं वस्तु आत्म-

तत्वं येन सः अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येन स सप्रपञ्चं गृहपुत्रकलत्रधनादिसहितं तं देहं पुनर्न भजते अहंममतया न गृह्णाति । यथा प्रतिबुद्धः स्वाप्नं शरीरादिकं न भजते तद्वदित्यर्थः ॥ ३७ ॥ मयेति ॥ हे विप्राः साङ्ख्यमात्मानात्मविवेकः योगोऽष्टाङ्गः तयोर्गुह्यं रहस्यमेतन्मया वो युष्मभ्यमुक्तम् । युष्माकं मोक्षधर्मविवक्षया हंसरूपेणागतं यज्ञं यज्ञो वै विष्णुस्तमागतं मां जानीत । अनेनैव धर्मा अप्युपदिष्टा इति ज्ञेयम् । अत एव यत्नेन हंसरूपेण ब्रह्मणोभ्यात्थेत्यनुवादो भविष्यति ॥ ३८ ॥ अहमिति ॥ हे द्विजश्रेष्ठाः अहं योगसाङ्ख्यादीनां श्रीप्रभृतीनां च परायणं परमाश्रयः फलभूतश्चास्मि सत्यमनुष्ठीयमानो धर्मः ऋतं प्रमीयमाणो धर्मः तेजः प्रभावः ॥ ३९ ॥ मामिति ॥ अतः साम्यासङ्गादयो गुणाः अन्ये च सर्वे गुणाः । यद्वा । अगुणाः गुणपरिणामरूपा न भवन्ति किन्तु नित्याः साम्यासङ्गादयः गुणाः निर्गुणं निरपेक्षकमिति सुहृदं सर्वहिते रतं सर्वात्मानम् अत एव प्रियं मां भजति ॥ ४० ॥ इतीति ॥ इत्येवं मे मत्तो हंसरूपाच्छिन्नः सन्देहः गुणचित्तविश्लेषविषयको येषां ते सनकादयो मुनयः मां सभाजयित्वा

मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः ॥ जानीत मागतं यज्ञं युष्मद्धर्मविवक्षया॥३८॥अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः ॥ परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥३९॥ मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ॥ सुहृदं प्रियमात्मानं साम्याऽसङ्गादयो गुणाः ॥४०॥ इति मे च्छिन्नसंदेहा मुनयः सनकादयः ॥ सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः॥४१॥ तैरहं पूजितः सम्यक्संस्तुतः परमर्षिभिः ॥ प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥४२॥ इति श्रीभागवत एकादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३॥ उद्धव उवाच ॥ वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ॥ तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥ भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥२॥ श्रीभगवानुवाच ॥ कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥ मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥

पूजयित्वा संस्तवैरगृणत तुष्टुवुः । तङ्गार्षः ॥ ४१ ॥ तैरिति ॥ तैः परमर्षिभिः पूजितः संस्तुतश्चाहं परमेष्ठिनः पश्यतः सतः स्वकं धाम वैकुण्ठं प्रत्येयाय प्रतिगतवान् ॥ ४२ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायोऽकार्षीदेकादशस्य त्रयोदशे ॥ १३ ॥ चतुर्दशे परं श्रेयो भक्तिरेवेति वर्ण्यते ॥ साधनैर्ध्यानयोगश्च तत्र श्लोका नगाब्धयः ॥ चत्वार्युवाचवाक्यानि नैववेदा अनुष्टुभः ॥ १४ ॥ वदन्तीति ॥ हे कृष्ण ब्रह्मपदं वेदपरं तस्य सर्वप्रमाणश्रेष्ठत्वात् तद्वादिन एव बहूनि तत्साधनानि वदन्ति तेषां किं विकल्पेन प्राधान्यम् । उताहो अथवा एकस्यैव मुख्यता ॥ १ ॥ भवतेति ॥ हे स्वामिन् न अपेक्षितम् अपेक्षा यस्मिन् स निष्कामो भक्तियोग एव मोक्षसाधनतया भवतोदाहृतः उक्तः । येन भक्तियोगेन सर्वतः सङ्गं विषयेष्वासक्तिं निरस्य त्यक्त्वा मनस्त्वय्याविशेत् ॥ २ ॥ कालेनेति ॥ इयं वेदसंज्ञिता वाणी प्रलये सति महता कालेन नष्टा ततः सृष्टेरादौ मया ब्रह्मणे प्रोक्ता । यस्यां मदात्मको मय्येवात्मा चित्तं येन स धर्म उक्तः ॥ ३ ॥

तेनेति ॥ तेन ब्रह्मणा सा वाणी पूर्वजाय पुत्राय मनवे स्वायम्भुवाय प्रोक्ता ततः भृगुरादिर्येषां ते सप्त भृगुमरीच्याङ्गिरःपुलस्त्यपुलहक्रतवः ब्रह्माणः प्रजापतयश्च ते महर्षयश्च अगृह्णन् ॥ ४ ॥ तेभ्य इति सार्द्धम् ॥ तेभ्यः पितृभ्यः तत्पुत्रा देवादयोऽगृह्णन्निति संबन्धः । गुह्यकाः यक्षाः किंदेवाः श्रमस्वेददौर्गन्ध्यादिराहित्येन किं देवा मनुष्या वेति संदेहास्पदभूताः द्वीपान्तरमनुष्याः । एवं किन्नराः किंचिन्नरा इव मुखतः शरीरतो वा । किंपुरुषाः किंचित्पुरुषा इव वानरादयः ॥ ५ ॥ बह्व्य इति सार्द्धम् ॥ रजःसत्त्वतमांसि भुवः जन्मस्थानानि यासां ताः तेषां देवादीनां प्रकृतयः वासना बह्व्यः सन्ति याभिर्वासनाभिर्भूतानि देवासुरमनुष्यादीनि भिद्यन्ते स्वरूपसामान्येऽपि भेदेन व्यवह्रियन्ते तथा भूतानां मतयश्च याभिर्भिद्यन्ते यथाप्रकृति स्वस्वप्रकृत्यनुसारेणैव सर्वेषां प्राणिनां चित्रा वाचो वेदार्थव्याख्यानरूपाः स्रवन्ति मुखान्निःसरन्ति ॥ ६ ॥ एवमिति ॥ एवं प्रकृतिवैचित्र्यादेव केषांचिदध्ययनादिशून्यानामपि नृणामुपदेशपारम्पर्येण मतयो भिद्यन्ते । अपरे तु तत एव पाखण्डमतयो वेदविरुद्धार्थकल्पकमतयो भवन्ति ॥ ७ ॥ मदिति ॥

तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ॥ ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ॥ ४ ॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ॥ मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ किं देवाः किन्नरा नागा रक्षःकिंपुरुषादयः ॥ ५ ॥ बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥ याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ६ ॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ॥ पारम्पर्येण केषांचित्पाखण्डमतयोऽपरे ॥ ७ ॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥८॥ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ॥ अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥ केचिद्यज्ञं तपो दानं व्रतानि नियमान्यमान् ॥९॥ आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ॥ १० ॥

हे पुरुषर्षभ मन्मायामोहितधियः पुरुषा यथाकर्म यथारुचि अनेकान्तं नानाविधं श्रेयःफलं तत्साधनं च वदन्ति अतोऽग्रे क्वचिच्छ्रेयोरूपं क्वचित्साधनरूपं चोक्तम् ॥ ८ ॥ धर्ममिति सार्द्धम् ॥ एके मीमांसकाः स्वर्ग एव फलं धर्म एव तत्साधनमिति श्रेयो वदन्तीति सर्वत्र संबन्धः । "स्वर्गकामो यजेत" इति श्रुतेः । तथा काव्यालङ्कारकृतो यश एव श्रेयःसाधनं स्वर्गसुखप्रदम् इति वदन्ति । वात्स्यायनादयः कामं स्त्रीसम्भोगं श्रेयो वदन्ति । सत्यं यथार्थभाषणं दममिन्द्रियनिग्रहम् । शमं मनोनिग्रहं योगशास्त्रकृतः श्रेयस्साधनं वदन्ति । अन्ये च दृष्टार्थवादिनो दण्डनीतिकृतो वै प्रसिद्धमैश्वर्यमेव स्वार्थफलं वदन्ति अतः सामाद्युपायाश्रयः साधनमिति तेषां मतम् । केचिन्नास्तिकाः शास्त्रमर्यादात्याग-पूर्वकं भोजनं विषयभोगमेव श्रेयः पुरुषार्थं वदन्ति । केचित् वैदिकाः यज्ञं श्रेयःसाधनं वदन्ति तपोदानादिनिष्ठाः तपोदानादि श्रेयःसाधनं वदन्ति ॥ ९ ॥ आद्यन्तवन्त इति ॥ एषां धर्मादिसाधनानां लोकाः फलानि आद्यन्तवतः अनित्या एव । तत्र हेतुः । कर्मभिर्विनिर्मिताः संपादिताः यत्कृतकं तन्नश्वरमिति व्याप्तेः । दुःखान्युदर्काः उत्तरफलानि

येषां ते पुण्यक्षये पुनः पतनदुःखभोगादेरावश्यकत्वात् तमोनिष्ठाः मोहावसानाः क्षुद्रस्तुच्छ एवानन्दो येभ्यस्ते भोगदशायामसूयादिभिः शुचा शोकेनार्पिता व्याप्ताः ॥१०॥ मय्यर्पितेति ॥ हे सभ्य मयि सच्चिदानन्दविग्रहे अर्पितो निवेशित आत्मा मनो येन तस्य अत एव सर्वतः सर्वेषु वैषयिकसुखेषु निरपेक्षस्य पुंसो मया परमानन्दरूपेण आत्मना स्वरूपतया स्फुरता यत्सुखं स्यात् तद्विषयात्मनां विषयाविष्टचित्तानां कुतः स्यात् ॥ ११ ॥ अकिञ्चनस्येति ॥ अकिञ्चनस्य परिग्रहशून्यस्य तदपेक्षारहितस्य च दान्तस्य जितेन्द्रियस्य शान्तस्य जितमनसः अत एव समचेतसः रागद्वेषादिरहितस्य मया परमानन्दस्वरूपेणैव सन्तुष्टमनसः पुंसः सर्वा दिशः सुखमया एव । ङीबभाव आर्षः । दिग्ग्रहणं कालावस्थादेरप्युपलक्षणम् ॥ १२ ॥ नेति ॥ मय्यर्पितात्मा पारमेष्ठ्यं ब्रह्माधिपत्यं नेच्छति । एवं महेन्द्रधिष्ण्यं स्वर्गराज्यं नेच्छति । सार्वभौमं कृत्स्नभूमण्डलाधिपत्यं नेच्छति । रसाधिपत्यं पातालादिस्वाम्यं नेच्छति । योगसिद्धीरणिमाद्यैश्वर्याणि नेच्छति । अपुनर्भवं मोक्षमपि नेच्छति । किं बहुना । मद्विना मां हित्वाऽन्यत् किमपि नेच्छति

**मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ॥ मयात्मना सुखं यत्तत् कुतः स्याद्विषयात्मनाम् ॥ ११ ॥ अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ॥ मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १२ ॥ न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १३ ॥ न तथा मे प्रियतम आत्मयोनिर्न शंकरः ॥ न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १४ ॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ॥ अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १५ ॥ निष्किंचना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ॥ कामैरनालब्धधियो जुषन्ति यत् तन्नैरपेक्ष्यं न विदुः सुखं मम ॥ १६ ॥ बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ॥ प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १७॥**

अहमेव तस्य प्रेष्ठ इत्यर्थः ॥ १३ ॥ न तथेति ॥ यथा भक्त इति वक्तव्यत्वे प्रत्यक्षत्वाद्भवानिति हर्षेणोक्तम् । यथा मे भक्तः प्रियतमस्तथात्मयोनिर्ब्रह्मा पुत्रोऽपि प्रियतमो न भवति । एवं शङ्करः मत्स्वरूपभूतोऽपि सङ्कर्षणो भ्राताऽपि श्रीर्भार्यापि आत्मा श्रीमूर्तिरपि प्रियतमा न भवति ॥ १४ ॥ निरपेक्षमिति ॥ अस्याङ्घ्रिरेणुभिरहं पूयेय । मदन्तर्वर्तिब्रह्माण्डानि पवित्रीकुर्यामित्याशयेन । यद्वा । तद्भक्त्यनिष्कृतिदोषात् पवित्रितः स्यामिति भावनया निरपेक्षत्वशान्तत्वादिगुणविशिष्टं मुनिमहं नित्यमनुव्रजामीति ॥ १५ ॥ निष्किञ्चना इति ॥ निष्किञ्चनाः परिग्रहरहिताः मय्येवानुरक्तचेतसः शान्ता रागादिरहिताः महान्तो निरस्ताहङ्काराः अखिलेषु जीवेषु वत्सलाः दयायुक्ताः कामैर्विषयैरनालब्धा अस्पृष्टा धीर्येषां ते एवंभूताः नैरपेक्ष्यं नास्ति अपेक्षणीयं येषां ते निरपेक्षास्तैरेव लभ्यं मम सम्बन्धि यत्सुखं जुषन्ति सेवन्ते । तङभाव आर्षः । तत्सुखमन्ये न विदुर्न लभन्ते ॥१६॥ आस्तामुत्तमभक्तकथा यतः प्राकृतभक्तोऽपि कृतार्थ एवेत्याह । यद्वा । यथा ज्ञानिप्रकरणे यथा दुराचारो ज्ञानी निन्दिष्यते ज्ञानित्वं च तस्य निषिद्ध्यते

यस्त्वसंयतषड्वर्ग इत्यादिना तथात्र भक्तो न निन्द्यते इत्याह—बाध्यमान इति ॥ यतः अजितेन्द्रियः अतो विषयैर्बाध्यमानः आकृष्यमाणोऽपि मद्भक्तः प्रगल्भया प्रतिक्षणमेधमानतया समर्थया भक्त्या हेतुभूतया प्रायः विषयैर्नाभिभूयते केचिद्भक्त्या भासवन्तोऽभिभूता अपि दृश्यन्त इति प्रायोग्रहणम् ॥ १७ ॥ यथेति ॥ हे उद्धव यथा पाकार्थं प्रज्वालितः सुसमिद्धोऽग्निरेधांसि काष्ठानि कृत्स्नशः सर्वाणि एव भस्मसात् करोति तथा कामादिना कथंचिदपि जाता मद्विषया भक्तिः कृत्स्नश एनांसि समस्तानि पापानि भस्मसात् करोति ॥ १८ ॥ नेति ॥ ऊर्जिता प्रवृद्धा मम भक्तिर्मां यथा साधयति वशीकरोति तथा योगादयो न वशीकुर्वन्ति योगादयः न रोधयति । मामित्यत्र व्याख्याताः ॥ १९ ॥ भक्त्येति ॥ सतां प्रिय आत्माहं श्रद्धया युतया एकया अनन्यप्रयोजनया भक्त्यैव ग्राह्यः मन्निष्ठा भक्तिः श्वपाकानपि संभवात् जातिदोषादपि पुनाति ॥ २० ॥ धर्म इति ॥ सत्यं यथार्थभाषणं दया परदुःखप्रहाणेच्छा ताभ्यामुपेतो युक्तो दानयज्ञादिधर्मः तथा तपः अनशनादि तेनान्विता युक्ता विद्या शास्त्राभ्यासः मद्भक्त्य

यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् ॥ तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥१८॥ न साधयति मां योगो न सांख्यं धर्म उद्धव ॥ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ १९ ॥ भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ॥ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥ २० ॥ धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ॥ मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २१ ॥ कथं विना रोमहर्षं द्रवता चेतसा विना ॥ विनानन्दाश्रुकलया शुद्ध्येद् भक्त्या विनाऽऽशयः ॥ २२ ॥ वाग् गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ॥ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २३ ॥ यथाऽग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते स्वरूपम् ॥ आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २४ ॥

पेतं रहितमात्मानमन्तःकरणं सम्यक् नैव प्रपुनाति ॥ २१ ॥ कथमिति ॥ रोमहर्षो रोमाञ्चः तस्माद्विना तथा द्रवता चेतसा द्रवो नाम भगवद्ध्यानकृतः शैथिल्यरूपो विकारविशेषः तं प्राप्नुवता चेतसा विना आनन्दजातया अश्रुकलया च विना कथं भक्तिरवगम्यत इति शेषः । भक्त्या विना चाशयोऽन्तःकरणं कथं शुद्ध्येदिति । यद्वा । भक्त्या हेतुना यद्द्रवच्चेतस्तेन विना कथं रोमहर्षः कथं वा आनन्दाश्रुकला रोमहर्षं विना आनन्दाश्रुकलया च विना कथमाशयः शुद्ध्येदिति ॥ २२ ॥ वागिति ॥ यस्य भक्तस्य वाक् गद्गदा मत्प्रेमवशात् स्खलिताक्षरा भवति यस्य चित्तं द्रवते बहिर्व्यवहारे शिथिलं भवति । तदर्थः । मद्वियोगानुसन्धानेनाभीक्ष्णं रुदति रोदिति । आर्षः प्रयोगः । मत्क्रीडारहस्यस्मरणेन क्वचिद्धसति च विलज्जः सन् क्वचिदुच्चैर्मच्चरितं गायति नृत्यति चेति स मद्भक्तियुक्तः पुमान् स्वदर्शनस्पर्शोपदेशादिभिर्भुवनं पुनाति । किं पुनः स्वाश्रयमाशयम् ॥ २३ ॥ भक्त्यैवात्मशुद्धिर्नान्यत इत्याह—यथेति ॥ यथाऽग्निना ध्मातं संतापितमेव हेम सुवर्णम् अन्तर्मलं जहाति न प्रक्षालनादिभिः स्वं निजं रूपमौ-

ज्वल्यं च भजते प्राप्नोति तथैवात्मा जीवोऽपि मद्भक्तियोगेन कर्मानुशयं संसारहेतुभूतां कर्मवासनां विधूय अथानन्तरमेव मां भजति । स्वरूपभूतं मां प्राप्नोति इत्यर्थः ॥ २४ ॥ ननु ज्ञानादेव मुक्तिरिति शास्त्रसिद्धान्तात्कुतो भक्तियोगेनेत्युच्यते इत्याशङ्क्य भक्तेरवान्तरव्यापारो ज्ञानं न पृथगित्याशयेनाह–यथा यथेति ॥ मम पुण्याः पुण्यावहा या गाथाः कथास्तासां श्रवणैः अभिधानैश्चात्मान्तः करणं यथा यथा परिमृज्यते परिशोध्यते तथा तथाऽसौ जीवः सूक्ष्मं वस्तु आत्मतत्त्वं पश्यति । यथा यथाञ्जनसंप्रयुक्तं चक्षुर्दोषं जहाति तथा तथा रूपग्रहणे समर्थं भवति तथेति ॥ २५ ॥ किंच ज्ञानं नाम चित्तस्य मदाकारः परिणामः स च मां भजतः स्वत एव भवति । न च यत्नान्तरमपेक्षत इत्याशयेनाह–विषयानिति ॥ पूर्वार्द्धादौ यथेति उत्तरार्द्धादौ तथेति शेषः । अर्थः स्पष्ट एव ॥ २६ ॥ तस्मादिति ॥ यतो विषयध्यानं संसारकारणं मद्ध्यानं च मत्प्राप्तिसाधनं तस्मात् स्वप्नमायामनोरथैस्तुल्यं देहेन्द्रियविषयाणामसदभिध्यानमहंममतया चिन्तनं हित्वा मद्भावेन श्रवणस्मरणादिना भावितं शोधितं मनो मयि समाधत्स्व स्थिरं कुरु ॥ २७ ॥ स्त्रीणामिति ॥ आत्मवान् जितमनाः अतन्द्रितः अनलसश्च सन् स्त्रीणां स्त्रीसङ्गिनां च सङ्गं दूरतस्त्यक्त्वा क्षेमे निर्भये विविक्ते निर्जने स्थाने

यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ॥ तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥२५॥ विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ॥ मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २६ ॥ तस्मादसदभिध्यानं यथा स्वप्नमनोरथान् ॥ हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥२७॥ स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ॥ क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ २८ ॥ न तथाऽस्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ॥ योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ २९ ॥ उद्धव उवाच ॥ यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकम् ॥ ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि ॥ ३० ॥

आसीनो मां चिन्तयेत् ॥ २८ ॥ नेति ॥ अस्य पुंसो यथा योषित्सङ्गात् यथा वा स्त्रीसङ्गिनां सङ्गतो बन्धः दुःखहेतुपापोत्पत्तिः स्त्र्याद्यधीनताप्रयुक्तक्लेशश्च भवेत्तथान्यप्रसङ्गतस्तौ न भवतः । अत्र स्त्रीसङ्गादपि स्त्रीसङ्गिसङ्गोऽधिकोऽनर्थहेतुः । यतः स्त्रीसङ्गे लज्जा स्वीयप्रतिष्ठा च बाधिकाऽस्ति । तत्सङ्गिसङ्गे तु प्रायस्ते अपि न बाधिके । किञ्च योषित्सङ्गी यथा तत्कथाभिस्तस्यामासज्जयाते लज्जाभयादिकमपि त्याजयति न तथा योषिदपीति उत्तरत्र स्त्रीसङ्गिसङ्गनिर्देशः ॥ २९ ॥ यथेति ॥ हे अरविन्दाक्ष यथा येन प्रकारेण यादृशं यादृग्विशेषणविशिष्टं यदात्मकं यत्स्वरूपं वा त्वां मुमुक्षुर्ध्यायेदेतत्सविशेषं ध्यानं मे मह्यं त्वं वक्तुमर्हसीति त्वंपदवान् सुगमः पाठः । ध्यानं मे वक्तुमर्हसि इति मेपदद्वययुक्तपाठे तु मुमुक्षुस्त्वां यथा ध्यायेत्तन्मे वक्तुमर्हसीति जिज्ञासोः कथनायेति मे मम पुनरेतत्त्वद्दास्यमेव परमपुरुषार्थः । ननु ध्यानेन कृत्यमस्तीति स्वामिपादाः । परे तु मे मम तु एतद्ध्यानमिति संहतपाणिद्वयेन तच्चरणयुगं दर्शयतीत्याहुः । यद्वा । एतत् एतादृशं मे मदीयं ध्यानमिति स्पष्टं मे वक्तुमर्हसि इति अत्र व्याख्याने एतन्मे ध्यान-

मिति भगवता वक्ष्यमाणध्यानस्य स्फुटत्वार्थमभिनयवाक्यम् । " इदमित्थमिति प्रायस्तव योगेश्वरेश्वर । " इतिवत् ॥ ३० ॥ सम इति युग्मम् ॥ निर्जितेन्द्रियः सन् इति प्रत्याहारोक्तिः । समदेशे चैलाजिनकुशोत्तरमास्तीर्णे आसने समकायः सन् यथा सुखमासीन इति नास्ति स्वस्तिकादिनियमः इत्युक्तम्। हस्तावुत्सङ्ग आधाय बहिर्दर्शनजन्यविक्षेपाभावार्थं स्वनासाग्रकृतेक्षणः सन् इत्यासनोक्तिः ॥ ३१ ॥ प्राणायाममाह—प्राणस्येति " प्राणबन्धनं हि सौम्य मनः " इति श्रुतेः । निर्जितप्राणस्यैव मनोजयो भवतीति तदर्थं श्लेष्मादिभिरापूरितमिडापिङ्गलाख्यनाडीविशेषरन्ध्ररूपं प्राणवायुसंचारमार्गं पूरककुम्भकरेचकैः शोधयेत्। "इडया पूरयेद्वायुं त्यजेत्पिङ्गलया ततः।" इति रीत्या विपर्ययेण रेचकपूरककुम्भकक्रमेण वा शनैरभ्यसेत् । प्राणमार्गशोधनमिति शेषः । अन्तःस्थस्य वायोर्बहिर्निःसारणं रेचकम् । बहिष्ठस्यान्तः प्रवेशनं पूरकम् । यथास्थितस्य स्तम्भनं कुम्भकम् । इडा वामनाडी पिङ्गला दक्षिणा ॥ ३२ ॥ प्राणायामो द्विधा सगर्भोऽगर्भश्च तत्र श्रेष्ठत्वात्प्रणवगर्भमाह—हृदीति ॥ मूलाधारादारभ्य अविच्छिन्नं सन्तं घण्टानादतुल्यं बिसोर्णवत् कमलमृणालतन्तुवत् सूक्ष्मं हृदि सन्तमोङ्कारं प्राणेन उदीर्य ऊर्ध्वं द्वादशाङ्गुलपर्यन्तं नीत्वाऽथ तत्र मात्रातीते स्वरं पञ्चदशं नादं बिन्दुं वा संवेशयेत् ।

श्रीभगवानुवाच ॥ सम आसन आसीनः समकायो यथासुखम् ॥ हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३१ ॥ प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥ ३२ ॥ हृद्यविच्छिन्नमोंकारं घण्टानादं बिसोर्णवत् ॥ प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम् ॥ ३३ ॥ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् ॥ दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः ॥ ३४ ॥ हृत्पुण्डरीकमन्तस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥ कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम् ॥ ३५ ॥ वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमङ्गलम् ॥ ३६ ॥ समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् ॥ सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३७ ॥

अथ पुनरपि तं च बिन्दुनादशिरस्कं कुर्यादित्यर्थः । यद्वा । मूलाधारादारभ्य मूर्द्धान्तपर्यन्तं बिसतन्तुवत्सूक्ष्ममविच्छिन्नं सन्तं हृदि मनसि प्राणेनोदीर्याभिव्यज्य अथ पुनस्तत्रोङ्कारे घण्टानादतुल्यं स्वरमुदात्तं नादं स्थिरीकुर्यात् ॥३३॥ एवमिति ॥ एवं प्रणवसंयुक्तं प्राणं त्रिषवणं त्रिसन्ध्यं दशकृत्वो दशवारान् यः समभ्यसेत् स मासादर्वागेव जितानिलः वशीकृतप्राणः स्यात् ॥३४॥ यादृशमित्यस्योत्तरं वक्तुं ध्येयपीठमाह—हृदिति सार्द्धम् ॥ अन्तःस्थं देहान्तर्वर्ति ऊर्ध्वनालमधोमुखं मुकुलितं च कदलीपुष्पसङ्काशं यद्धृत्पुण्डरीकं हृदयकमलमस्ति तदूर्ध्वमुखमधोनालमुन्निद्रं विकसितमष्टपत्रं सकर्णिकं च ध्यात्वा तत्कर्णिकायामुत्तरोत्तरम् सूर्यादीन् न्यसेत् मण्डलरूपेण चिन्तयेत्—ध्यायेत् ॥३५॥ वह्निमध्ये इति अर्द्धम् ॥ ध्यानमङ्गलं ध्यानस्य शुभविषयमेतद्वक्ष्यमाणं मम रूपं वह्निमण्डलमध्ये स्मरेत् ध्यायेत् ॥ ३६ ॥ सममिति ॥ समम्नुरूपावयवं प्रशान्तं प्रसन्नं शोभनमुखं दीर्घाश्चारवश्चत्वारो भुजा यस्मिंस्तत् सुचारु अतिरम्यं सुन्दरा ग्रीवा यस्मिंस्तत् शोभनौ कपोलौ यस्य तत् शुचि शोभनं स्मितं मन्दहासो यस्य तत्॥३७॥

समानेति ॥ समानयोः कर्णयोर्विन्यस्ते स्फुरन्ती मकराकारे कुण्डले यस्य तत् हेमतुल्ये पीते अम्बरे यस्य तत् घनमिव श्यामं श्रीवत्सस्य श्रियाश्च निकेतनं क्रमेण वक्षसि दक्षिणतो वामतश्च ताभ्यां युक्तमित्यर्थः ॥ ३८ ॥ शङ्खेति ॥ शङ्खादिभिर्विभूषितं नूपुरैःनूपुराभ्यां विलसन्तौ पादौ यस्य तत् कौस्तुभस्य प्रभया आयुतं समन्तादलंकृतम् । स्पष्टमन्यत् ॥ ३९ ॥ द्युमदिति सार्द्धम् ॥ द्युतिमद्भिः किरीटादिभिः आसमन्तात् युतमलंकृतं प्रसादेनानुग्रहेण शोभनं मुखमीक्षणे च यस्मिंस्तत् सुकुमारमतिकोमलं तदेवंभूतं मम रूपं सर्वेषु पादादिमूर्द्धान्तेष्वङ्गेषु मनो दधत् ध्यायेदिति धारणाध्याने उक्ते ॥ ४० ॥ इन्द्रियाणीति ॥ धीरः अव्यग्रः सन् इन्द्रियार्थेभ्यः शब्दादिविषयेभ्यो मनसा इन्द्रियाणि आकृष्य प्रत्याहृत्य तत्संकल्पविकल्पात्मकं मनः सारथिभूतया इदमेव चिन्तनीयं नान्यदिति निश्चयात्मिकया बुद्ध्या सर्वत आकृष्य मयि परमानन्दविग्रहे प्रकर्षेण नयेत्

समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् ॥ हेमाम्बरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ॥ ३८ ॥ शङ्खचक्रगदापद्मवनमालाविभूषितम् ॥ नैपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥ ३९ ॥ द्युमत्किरीटकटककटिसूत्राङ्गदाऽऽयुतम् ॥ सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ॥ सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ ४० ॥ इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः ॥ बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥ ४१ ॥ तत् सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ॥ नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ ४२ ॥ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ॥ तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेत् ॥४३॥ एवं समाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टे मयि सर्वात्मञ्ज्योतिर्ज्योतिषि संयुतम् ॥४४॥ ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ॥ संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४५ ॥ इति श्रीभागवत एकादशस्कन्धे भगवदुद्धवसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥

स्थापयेदित्यर्थः । यद्वा । सर्वतः सर्वाङ्गयुक्ते मयि ॥ ४१ ॥ तदिति ॥ तत्सर्वाङ्गव्यापकं चित्तं सर्वत आकृष्यैकत्राङ्गे धारयेत् । अन्यान्यङ्गान्यपि भूयः पुनर्न चिन्तयेत् । किंतु सुस्मितं मुखमेव भावयेत् चिन्तयेत् ॥ ४२ ॥ तत्रेति ॥ तत्र मुखे लब्धं पदं स्थानं स्थैर्यं येन तच्चित्तं ततोऽप्याकृष्य व्योम्नि व्योमवत्सर्वव्यापके सर्वाधारे निर्लेपे मयि धारयेत् । एवं मदारोहः सर्वव्यापकेन मया सहैकतां प्राप्तः तदपि चिन्तनं त्यक्त्वा किंचिदपि ध्यातृध्येयध्यानविभागं न चिन्तयेत् । श्रीहंसदेवेन गुणचेतसोस्त्यागो य उक्तस्तस्यायमेव प्रकार इति ज्ञेयम् ॥ ४३ ॥ एवमिति ॥ एवं समाहिता मय्येव निश्चला मतिर्यस्य सः । आत्मनि स्वस्मिन् मां विचष्टे पश्यति । सर्वात्मनि मय्येवात्मानं च पश्यति । ज्योतिषि महाभूततेजसि संयुतमेकतां प्राप्तं दीपादिज्योतिरिवेति ॥ ४४ ॥ ध्यानेनेति ॥ सुतीव्रेणान्तरायानुपहतेन ध्यानेनेत्थं मनो युञ्जतः समादधतो योगिनः

द्रव्यभ्रमः देहादावहमिति ज्ञानभ्रमः अहं जानामीति क्रियाभ्रमोऽहं करोमीति देहेन्द्रियान्तःकरणाध्यासलक्षणः दृश्यद्रष्टृदर्शनरूपो वा भ्रमः आशु निर्वाणं लयं यास्यति॥४५॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमादेकादशचतुर्दशे ॥ १४ ॥ ततः पञ्चदशे प्रोक्ताः सिद्धयो धारणानुगाः ॥ ताश्च मुक्तेरन्तरायास्तत्र श्लोका षडग्र्यः ॥ तावन्त्योऽनुष्टुभोऽप्यत्रोवाचवाचां त्रयं मतम् ॥ १५ ॥ जितेति ॥ युक्तस्य स्थिरचित्तस्य । स्पष्टमन्यत् ॥ १ ॥ कयेति ॥ कया धारणया कास्वित् किंनाम्नी कथंप्रकारिका वा सिद्धिर्भवति ताश्च सर्वाः सिद्धयः कतिसङ्ख्याकाः एतद्ब्रूहि यतो भवानेवैतज्जानाति यतो योगिनां सिद्धिप्रद इति ॥ २ ॥ सिद्धय इति ॥ योगपारगैः सिद्धैरष्टादश सिद्धयः प्रोक्ताः तत्कारणभूता धारणाश्चाष्टादश प्रोक्ताः । तासां सिद्धीनां मध्ये अणिमादयोऽष्टौ सिद्धयो मत्प्रधाना अहमेव प्रधानं मुख्यः स्वभावत आश्रयो यासां ताः मयि ताः संपूर्णा अन्यत्र मत्सारूप्यं प्राप्तेषु तु किञ्चिन्न्यूना इति भावः।अनूर्मिमत्वादयः दश तु गुणहेतवः सत्त्वोत्कर्षहेतुका एव योगपारगैरित्युक्तेः।त्रिकालज्ञत्वादिक्षुद्र-

॥ श्रीभगवानुवाच ॥ जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ॥ मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥ उद्धव उवाच ॥ कया धारणया कास्वित्कथं वा सिद्धिरच्युत ॥ कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥ श्रीभगवानुवाच ॥ सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ॥ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥ ३ ॥ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ॥ प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥ गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ५ ॥ अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥

सिद्धीरन्येऽपि जानन्ति इति भावः ॥ ३ ॥ अणिमेति ॥ अणिमादयस्तिस्रः सिद्धयो मूर्तेर्देहस्य भवन्ति । प्राप्तिर्नाम सिद्धिः सर्वप्राणिनामिन्द्रियैः सह तत्तदधिष्ठातृदेवतारूपेण सम्बन्धस्तेन तत्तद्विषयप्राप्तिः श्रुतेषु पारलौकिकेषु दृष्टेषु दर्शनयोग्येषु भूविवरादिपिहितेष्वपि पदार्थेषु अपि प्राकाश्यं भोगदर्शनसामर्थ्यं प्राकाश्याख्या सिद्धिः शक्तीनां माया तदंशभूतानां प्रेरणम् । तत्रेश्वरे मायायाः अन्येषु तदंशानां यथेष्टं प्रेरणमीशिताख्या सिद्धिः ॥ ४ ॥ गुणेष्विति ॥ हे सौम्य गुणेषु विषयभोगेष्वसङ्गोऽनासक्तिर्वशिताख्या सिद्धिः ।यत्कामः यद्यत्सुखं कामयते तत्तदवस्यति तस्य तस्य सीमानं प्राप्नोति कामावशायिताख्या सिद्धिः । एता अणिमादयोऽष्टौ सिद्धयो मे मम औत्पत्तिकाः स्वभावत एव सिद्धा निरतिशयाश्चेत्यर्थः॥५॥ गुणहेतुका आह–अनूर्मि इति ॥ अनूर्मिमत्त्वं क्षुत्पिपासादिराहित्यम् । दूरे उत्पन्नस्य शब्दस्य श्रवणं दूरे वर्तमानपदार्थस्य दर्शनं चेति सिद्धिद्वयं मनोजवः देहस्य मनोवद्वेगेन गतिः कामरूपं यथेष्टरूपधारणसामर्थ्यं स्वदेहं त्यक्त्वा परकाये प्रवेशः ॥ ६ ॥

स्वच्छन्देति ॥ स्वेच्छामृत्युः अप्सरोभिः सह या देवानां क्रीडास्तासामनुदर्शनं प्राप्तिः । यथा संकल्पसंसिद्धिः । संकल्पानुरूपतत्तद्वस्तुप्राप्तिः इयं किंचित्कायिकादिप्रयत्नसापेक्षेति कामावसायितातो भेदः कल्प्यः । अप्रतिहता आसमन्तात् गतिर्यस्याः सा आज्ञेति । यद्वा । अप्रतिहता आज्ञा गतिश्चेति एका सिद्धिरित्येके । अप्रतिहताज्ञत्वमप्रतिहतगतित्वमिति द्वे सिद्धी इत्यपरे ॥ ७ ॥ इदानीं पञ्च क्षुद्रसिद्धीराह—त्रिकालेति ॥ त्रिकालज्ञत्वं भूतभविष्यद्वर्तमानकालगतपदार्थज्ञानम् । अद्वन्द्वं शीतोष्णादिभिरनभिभवः । परचित्तादीत्यादिशब्देन गृहादिग्रहणम् । तेषामभिज्ञता साक्षात्कारः अग्न्यादीनां प्रतिष्टम्भः संस्तम्भनं कुतोऽप्यपराजयः ॥ ८ ॥ एताश्चेति ॥ स्पष्टम् ॥ ९ ॥ भूतेति ॥ भूतसूक्ष्मशरीरके मयि तन्मात्रं तदेकाकारं मनो धारयन् तन्मात्रं सूक्ष्माकारमुपास्ते यः स तन्मात्रोपासकः मम मदीयमणिमानमवाप्नोति यथेष्टसूक्ष्मतापत्त्या शिलादिषु सूक्ष्मवस्तुषु च प्रवेशसामर्थ्यं प्राप्नोतीत्यर्थः ॥ १० ॥ महतीति ॥ महत्यात्मनि ज्ञानशक्तिमहत्तत्त्वशरीरके मयि परे परमेश्वरे यथासंस्थं महत्तत्त्वाकारं मनो दधत् महिमानमवाप्नोति यथे-

स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ॥ यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहताऽऽगतिः ॥७॥ त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ॥
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः ॥८ ॥ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ॥ यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥ ९ ॥ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः ॥ अणिमानमवाप्नोति तन्मात्रोपासको मम ॥ १० ॥ महत्यात्मन्मयि परे यथासंस्थं मनो दधत् ॥ महिमानमवाप्नोति भूतानां च पृथक् पृथक्॥११॥ परमाणुमये चित्तं भूतानां मयि रञ्जयन् ॥ कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥१२॥ धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ॥ सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३॥
महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् ॥ प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥

ष्टमहत्त्वस्वीकारसामर्थ्यं प्राप्नोतीत्यर्थः । यथा सर्वमपि व्याप्तुं शक्नोति तथा भूतानामाकाशादीनां च मध्ये पृथक् पृथक् यद्यन्मदभिन्नतया चिन्तयति तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥ परमेति ॥ वाय्वादिभूतानां ये परमाणवः तन्मये तदुपाधिके मयि मनो रञ्जयन् धारयन् योगी परमाणुरूपकालवत्सूक्ष्मवस्तुभवनसामर्थ्यरूपं लघिमानमवाप्नुयात् । सर्वथा गुरुत्वाभावार्थं कालपरमाणुतुल्यत्वमुक्तम् । पृथ्व्यादिपरमाणुषु गुरुत्वसद्भावात् । न च कालस्य निरवयवत्वात्तत्परमाण्वसंभवः शङ्कनीयः । गौणवृत्त्या सूक्ष्मांशे तात्पर्यात् । "स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।" इत्युक्तेः ॥१२॥ धारयन्निति ॥ वैकारिके सात्त्विकेऽहङ्कारे तदुपाधौ मयि अखिलमेकाग्रं मनो धारयन् मन्मनाः मदुपासकः सर्वप्राणीन्द्रियाणामात्मत्वमधिष्ठातृत्वरूपां प्राप्त्याख्यां सिद्धिं प्राप्नोति ॥ १३ ॥ महतीति ॥ क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि यो मानसं धारयेत् सः अव्यक्ताज्जन्म यस्य सूत्रस्य तस्य तदुपाधेर्मम सम्बन्धि पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाश्यं विन्दत इत्यन्वयः ॥ १४ ॥

विष्णाविति ॥ अधीश्वरे त्रिगुणमायानियन्तारि विष्णौ व्यापके अत एव कालविग्रहे कलयितृरूपे अन्तर्यामिणि यश्चित्तं धारयेत् स क्षेत्राणां देहादीनां क्षेत्रज्ञानां तदुपाधिकजीवानां च चोदनां प्रेरणसामर्थ्यरूपम् ईशित्वमवाप्नोति । न तु विश्वसृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः जगद्व्यापारवर्जमिति शरीरकसूत्रात् ॥१५॥ नारायण इति ॥ तुरीयाख्ये विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः ईशस्य यत्रिभिर्हीनं तुरीयं तत्पदं विदुरित्युक्तलक्षणे । यस्य स्थूलं सूक्ष्मं चेति कार्यद्वयं कारणं माया च नोपाधिः किन्तु तुरीयं सच्चिदानन्दाकारं तस्मिन् । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥" इत्युक्तभगवच्छब्देन शब्दिते कथिते ऐश्वर्यादिमति नारायणे मयि मनो दधत् मद्धर्मा योगी वशितां गुणकार्येष्वनासक्तिरूपां सिद्धिमियात्प्राप्नुयात् ॥ १६ ॥ निर्गुण इति ॥ निर्गुणे ब्रह्मणि व्यापके मयि विशदं प्राणायामादिभिः शुद्धं मनो धारयन् यत्र परमानन्दप्राप्तौ सर्वोऽपि कामः अवसीयते समाप्यते निवर्तते तं परमानन्दं कामावसायिताख्यां सिद्धिं प्राप्नोति ॥ १७ ॥ गुणहेतुकसिद्धीनां धारणा

विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे॥स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम्॥१५॥नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते॥मनो मय्यादधद्योगी मद्धर्मा वशितामियात् ॥१६॥ निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः ॥ परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥ श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ॥ धारयन् श्वेततां याति षडूर्मिरहितो नरः ॥ १८ ॥ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ॥ तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥१९॥ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ॥ मां तत्र मनसा ध्यायन्विश्वं पश्यति सूक्ष्मदृक् ॥२०॥ मनो मयि सुसंयोज्य देहं तदनु वायुना ॥ मद्धारणाऽनुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥

आह—श्वेतेति ॥ शुद्धे गुणपारतन्त्र्यरहिते धर्ममये धर्मप्रवर्तके श्वेतद्वीपपतौ अनिरुद्धमूर्तौ मयि चित्तं धारयन् नरः श्वेततां शुद्धतां गुणपारवश्यराहित्यं याति अतः क्षुत्पिपासादिषडूर्मिरहितश्च भवति ॥ १८ ॥ मयीति ॥ आकाशात्मनि आकाशवन्निर्मलः सर्वव्यापकश्चात्मा स्वरूपं यस्य तस्मिन् समष्टिरूपप्राणे तद्रूपे मयि मनसा घोषं नादमुद्वहन् चिन्तयन् असौ हंसो जीवः तत्राकाशे उपलब्धा ज्ञाता सन् तत्रस्थाः । यद्वा । उपलब्धाः अभिव्यक्ताः या भूतानां प्राणिनां चित्राः वाचस्ता दूरत एव शृणोति ॥ १९ ॥ चक्षुरिति ॥ त्वष्टा आदित्यस्तस्मिन् अपरिच्छिन्ने चक्षुः संयोज्य तं त्वष्टारं च चक्षुषि संयोज्य तत्रोभयसंयोगे मां मनसा ध्यायन् सूक्ष्मदृक् सन् दूरस्थमपि सर्वं विश्वं पश्यति ॥ २० ॥ मन इति ॥ मनो देहं च तदनुवर्तिना वायुना सह मयि सुसंयोज्य या मद्धारणा क्रियते तस्याः अनुभावेन प्रभावेण यत्र मनो याति तत्रात्मा देहोऽपि यातीत्यर्थः । यद्वा । मनः कर्तृ आत्मानं वायुना सह देहं च मयि सुसंयोज्य यत्र याति तत्र तदनु देहोऽपि याति ॥ २१ ॥

यदेति ॥ यदा मन उपादाय उपादानकारणं कृत्वा वशीकृत्य च यद्यद्देवादिरूपं बुभूषति भवितुमिच्छति तत्तन्मनोरूपं मनसोऽभीष्टं रूपं योगी भवेत् प्राप्नोति । पाण्यर्थे भुवस्तङ्भाव आर्षः । यतो मद्योगबलं योऽहमचिन्त्यशक्तिर्नानाकारस्तस्मिन् मयि मनसो योगो धारणा तस्य बलं प्रभाव एवाश्रयः सर्वासां सिद्धीनां कारणमित्यर्थः ॥ २२ ॥ परेति ॥ सिद्धः वशीकृतप्राणेन्द्रियसङ्घातो योगी परकायं विशन् यत्र प्रविविक्षति तत्रात्मानं भावयेत् चिन्तयेत् । ततः प्राणः प्राणप्रधानलिङ्गशरीरोपाधिः पिण्ड स्वदेहं हित्वा वायुभूतः बाह्यवायौ प्रविष्टस्तेन सह नासिकारन्ध्रद्वारा तं कायं प्रविशति । भृङ्गो यथा पुष्पात्पुष्पान्तरमनायासेन प्रविशति तद्वदिति ॥ २३ ॥ पिण्डं हित्वेत्युक्तं तत्प्रकारं कथयन् स्वच्छन्दमृत्युमाह—पार्ष्ण्येति ॥ पार्ष्ण्या पार्ष्णिना पादमूलेन गुदं मूलाधारमापीड्य संनिरुध्य प्राणं प्राणोपाधिमात्मानं क्रमेण हृदुरःकण्ठमूर्द्धस्वारोप्य ब्रह्मरन्ध्रेण द्वारेण ब्रह्म नीत्वा ब्रह्मेत्युपलक्षणं ब्रह्म वा अन्यद्वा यदपेक्षितं तत्स्थानं नीत्वा मनसा ध्यात्वा तनुमुत्सृजेत् त्यजेदित्यर्थः॥ २४ ॥विहरिष्यन्निति ॥ सुरा आक्रीडन्ति

यदा मन उपादाय यद्यद्रूपं बुभूषति ॥ तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः ॥ २२ ॥ परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ॥ पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ॥ २३ ॥ पार्ष्ण्याऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ॥ आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत् तनुम् ॥ २४ ॥ विहरिष्यन्सुराक्रीडे मत्स्थं सत्त्वं विभावयेत् ॥ विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः सुरस्त्रियः ॥ २५ ॥ यथा संकल्पयेत् बुद्ध्या यदा वा मत्परः पुमान् ॥ मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते ॥ २६ ॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ॥ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥ २७ ॥ मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः ॥ तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥

यस्मिंस्तत्सुराक्रीडं देवोद्यानादिकं तत्र विहर्तुमिच्छन् मत्स्थं मन्मूर्त्तिरूपं शुद्धं सत्वं यदा चिन्तयेत्तदा सत्ववृत्तीः सत्त्ववृत्तयः । पूर्वसवर्णदीर्घ आर्षः । सत्वांशभूताः सुरस्त्रियः अप्सरसो विमानेन तं प्रत्युपतिष्ठन्तिं समीपे स्थिता भवन्ति ॥ २५ ॥ यथेति ॥ मत्परः मदाराधननिष्ठः पुमान् सत्ये सत्यसंकल्पे मयि मनो युञ्जन् यदा वा यस्मिन् काले अकालेऽपि । यथा वेति पाठे येन केन प्रकारेण यथावत्प्रकारकं वस्तु बुद्ध्या संकल्पयेत् तदैव तथाप्रकारकं तद्वस्तु यथावत् समुपाश्नुते सम्यक् प्राप्नोति ॥ २६ ॥ य इति ॥ ॥ ४८ ॥
यो वै पुमान् ईशितुः सर्वनियन्तुः वशितुः स्वतन्त्रस्य । मत् इति ममेत्यर्थे । मम भावं भावनां स्वभावं वाऽऽपन्नः प्राप्तः तस्य चाज्ञा कुतश्चिदपि न विहन्येत प्रतिहता न भवेत् । यथा ममाज्ञा प्रतिहता न भवति तथेति एता गुणहेतवः ॥ २७ ॥ क्षुद्रा आह—मद्भक्त्येति ॥ शुद्धसत्वस्य शुद्धचित्तस्य धारणाविदः त्रिकालज्ञस्य मम धारणां जानतः कुर्वतस्तस्य योगिनः स्वजन्ममृत्युभ्यामुपबृंहिता सहिता त्रैकालिकी त्रिकालवस्तुविषया बुद्धिर्जायते अनयैव परचित्ताद्यभिज्ञताऽपि निरूपिता ज्ञेया ॥ २८ ॥

अग्नीति ॥ मद्योगशान्तचित्तस्य अग्न्यादिसर्वोपघातशून्यो योऽहं तद्विषयको यो योगो धारणा तेनैव शान्तं स्थितं चित्तं यस्य तस्य मुनेर्योगमयं प्राणायामादिभिः परिपक्वं वपुरग्न्यादिभिर्न हन्येत । यादसां जलचराणां मत्स्यादीनामुदकं यथाभिघातकं न भवति तथा तद्वपुषोऽग्न्यादयः अभिघातका न भवन्तीति । अनयैवाऽद्वन्द्वताऽपि व्याख्याता ॥२९॥ मद्विभूतीरिति ॥ यः श्रीवत्सादिभिर्विभूषिताः ध्वजादिभिश्च युक्ता मद्विभूतीः ममावतारान् ध्यायन् भवति स सर्वत्रापराजितो जयवान् भवेत्॥३०॥उपासकस्येति ॥ मामिति द्वितीयाऽर्थी । उपासकस्य भजतो मुनेर्योगिनः एवमुक्तप्रकारेण पृथक् पृथग्धारणया पूर्वकथिता अशेषतः सर्वाः सिद्धयो यथायोग्यमुपतिष्ठन्ति सम्प्राप्ता भवन्ति ॥ ३१ ॥ यद्वा किं नानाधारणाप्रयासेन एकयैव सर्वाः सिद्धयो भवन्तीत्याह—जितेन्द्रियस्येति ॥ दान्तस्य वशीकृतान्तःकरणस्य जितः श्वासः प्राणः आत्मा देहश्च येन तस्य मद्धारणां नारायणे तुरीयाख्ये इत्यत्रोक्तां धारणां धारयतः कुर्वतः पुंसो या सिद्धिर्दुर्लभा सा का न कापि दुर्लभेत्यर्थः ॥ ३२ ॥ तथापि सिद्धयो न प्रार्थ्या

**अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ॥ मद्योगश्रान्तचित्तस्य यादसामुदकं यथा ॥ २९ ॥ मद्विभूतीरभिध्यायञ्छ्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यजनैः स भवेदपराजितः ॥ ३० ॥ उपासकस्य मामेवं योगधारणया मुनेः ॥ सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥ जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ॥ मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ॥ ३२ ॥ अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् ॥ मया संपद्यमानस्य कालक्षपणहेतवः ॥ ३३ ॥ जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ॥ योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥ ३४ ॥ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ३५ ॥**

इत्याह—अन्तरायानिति उत्तमं मदुपासनात्मकं योगं युञ्जतः कुर्वतः योगिनः एताः सिद्धीरन्तरायान् विघ्नान् वदन्ति । वृद्धा इति शेषः । यतः एताः मया सम्पद्यमानस्य संप्राप्स्यतः मध्ये कालक्षपणहेतवः जन्मभोगादिना विलम्बहेतव इत्यर्थः ॥ ३३ ॥ जन्मेति ॥ जन्मादिभिर्यावतीर्यावत्यः । पूर्वसवर्णदीर्घ आर्षः । इह लोके सिद्धयो भवन्ति जन्मना यथा देवानां यथा च यादसामुदकस्तम्भः पक्षिणां खेचरता इत्यादिकाः औषधैः यथा वलीपलितराहित्यादयः तपसा विश्वामित्रादीनामिव नवीनलोकरचनासामर्थ्यादयः मन्त्रैर्यथा वशीकरणाद्याः ताः सर्वा अपि योगेनोक्तप्रकारकेण योगी प्राप्नोति । योगस्य गतिं परमफलं मत्सालोक्यादिकं तु अन्यैर्जन्मादिसाधनान्तरैर्न व्रजेत् न प्राप्नोति ॥ ३४ ॥ सर्वासामिति ॥ अहमेव सिद्धीनां हेतुः दाता पतिः पालकः प्रभुः स्वामी न केवलं सिद्धीनामेव हेत्वादिः । किन्तु तत्कारणस्य योगस्य सांख्यस्य ज्ञानस्य तत्फलस्य मोक्षस्य च वेदवादिभिः प्रतिपादितस्य धर्मस्य तदुपदेष्टॄणां ब्रह्मवादिनां च हेत्वादिरहमेव ॥ ३५ ॥

अहमिति ॥ सर्वेषां देहिनां जीवानामहमेवात्मा अन्तरः अन्तर्यामी बाह्यः व्यापकश्च अनावृतः अपरिच्छन्नः भूतेषु जरायुजादिचतुर्विधदेहेषु भूतानि यथान्तर्बहिश्च भवन्ति तथा स्वयमहमपि भवामीत्यर्थः ॥ ३६ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशपञ्चदशे व्यधाद्रङ्गासहायकः ॥१५॥ षोडशे तु हरेराविर्भावयुक्ता विभूतयः॥ प्रभावादिविशेषेण श्लोकाः सार्द्धाः कृताश्चत्वारिंशत् ॥ द्वे उवाचेति चत्वारिंशत् पादोनाः पञ्चवेदा अनुष्टुभः ॥ १६ ॥ त्वमिति ॥ त्वं साक्षात्परमं ब्रह्म अनाद्यन्तमुत्पत्तिविनाशरहितम् अपावृतं निरावरणं स्वतन्त्रं वा ब्रह्म त्वम् अतएव सर्वेषामपि भावानां पदार्थानां त्राणादयो यस्मात्सः त्वम् उपादानकारणमित्यर्थः । त्राणं रक्षणं स्थितिर्जीवनम् अप्ययो नाशः उद्भवः उत्पत्तिः ॥ १ ॥ उच्चेति ॥ हे भगवन् ब्राह्मणाः वेदरहस्यविद एव उच्चावचेषु भूतेषु स्थितमकृतात्मभिः अशोधितचित्तैः दुर्ज्ञेयमपि त्वां याथातथ्येन उक्तपरमार्थरूपेण उपासते ॥ २ ॥ येष्विति ॥ अतो दुर्ज्ञेयत्वात् येषु येषु च भावेषु पदार्थेषु परमर्षयो विवेकिनो भक्त्या त्वामुपासीनाः चिन्तयन्तः संसिद्धिं परमप्रेमलक्षणां भक्तिं ज्ञानं

अहमात्मान्तरो बाह्योऽनावृतः सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा ॥ ३६ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे पञ्चदशोऽध्यायः ॥१५॥ उद्धव उवाच ॥ त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ॥ सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः ॥ १ ॥ उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ॥ उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ॥ २॥ येषु येषु च भावेषु भक्त्या त्वां परमर्षयः ॥ उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ॥ ३ ॥ गूढश्चरसि भूतात्मा भूतानां भूतभावन ॥ न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥ याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ॥ ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदङ्घ्रिपद्मम् ॥ ५ ॥ श्रीभगवानुवाच ॥ एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर ॥ युयुत्सुना विनशने सपत्नैरर्जुनेन वै॥६॥ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् ॥ ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥ ७ ॥

वा प्रपद्यन्ते लभन्ते तत् वस्तु मे प्रयत्नेन वदस्व ॥ ३ ॥ गूढ इति ॥ हे भूतभावन यतस्त्वं भूतानामात्मान्तर्यामी भूतानां मध्ये गूढः अप्रकटः चरसि अतस्ते तव मायया मोहितानि भूतानि सर्वे पश्यन्तमपि त्वां न पश्यन्ति ॥ ४ ॥ या इति ॥ ते त्वया अनुभाविताः केनचिच्छक्तिविशेषेण संयोजिता याः काश्च काश्चिद्भूमौ दिवि रसायामधोलोके सर्वासु दिक्षु च ते तव विभूतयस्ता मह्यमाख्याहि । तीर्थानां पदमाश्रयं च ते तव यदङ्घ्रिपद्मं च तन्नमामि॥५॥एवमिति॥ हे प्रश्नविदां वर एवं यथा त्वं पृच्छसि तथा । एतदिति सामान्ये नपुंसकम् । एतदेव प्रश्नं प्रष्टव्यं विनशने कुरुक्षेत्रे सपत्नैः शत्रुभिर्युयुत्सुना योद्धुमिच्छता अर्जुनेनाप्यहं पृष्टः ॥ ६ ॥ युयुत्सोर्विभूतिप्रश्ने प्रसङ्गमाह–ज्ञात्वेति ॥ अहं हन्तायं च मया हत इति लौकिको लोकवन्मोहितचित्तः अत एव राज्यनिमित्तं ज्ञातिवधं गर्ह्यं निन्द्यमधर्मं च ज्ञात्वा ततो युद्धान्निवृत्त आसीदिति शेषः ॥ ७ ॥

स इति ॥ तदा रणमूर्द्धनि स पुरुषश्रेष्ठो मया युक्त्या प्रतिबोधितः सन् यथा त्वमभिभाषसे पृच्छसि एवमेव संग्राममुखे मामभ्यभाषत अपृच्छत् । अतो यथा तं प्रत्युक्तवांस्तथा तवापि कथयामीत्याशयः ॥ ८ ॥ अहमिति ॥ हे उद्धव अमीषां भूतानामात्मेति सुहृत्पालक इति ईश्वरः नियन्तेति चाहमुपास्य इति सर्वत्र शेषः । तथा सर्वाणि भूतान्यप्यहं तेषां भूतानां स्थित्यादयो यतो भवन्ति । सोऽप्यहमिति अस्मच्छब्दसमानाधिकरणाः प्रथमान्ता द्वितीयान्ताश्च सर्वा विभूतयस्ताश्चोपासनार्थं कथ्यन्ते । षष्ठी च क्वचिन्निर्द्धारणे क्वचिच्च सम्बन्धे यथायोग्यं द्रष्टव्या ॥ ९ ॥ विशेषतो विभूतीराह—अहमिति ॥ गतिमतां गतिरहं कलयतां वशीकुर्वतां मध्ये कालोऽहं गुणानां सत्त्वादीनां यत्साम्यं प्रधानं तदहं गुणिनि गुणवति पदार्थे औत्पत्तिकः स्वाभाविको यो गुणः सोऽहम् ॥ १० ॥ गुणिनामिति ॥ गुणिनामुद्भूतसत्त्वादिगुणत्रयवतां सूत्रं प्रथमकार्यं क्रियाप्रधानं महतां बृहतां महान्महत्तत्वमहं सूक्ष्माणां वस्तूनां मध्ये तिसूक्ष्मो जीवोऽहं सूक्ष्मोपाधित्वात् दुर्ज्ञेयत्वाच्च जीवस्य सूक्ष्मत्वम् ॥ ११ ॥ हिरण्येति ॥ वेदानां

**स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ॥ अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥ अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ॥ अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥ अहं गतिर्गतिमतां कालः कलयतामहम् ॥ गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥ गुणिनामप्यहं सूत्रं महतां च महानहम् ॥ सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥ हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत् ॥ अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ॥ १२ ॥ इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ॥ आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥ ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ॥ देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥ १४ ॥ सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ॥ प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥ मां विद्धयुद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ॥ सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥ १६ ॥ ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम् ॥ तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥ १७ ॥**

वेदाध्यापकानां हिरण्यगर्भो ब्रह्माऽहम् । मन्त्राणां मध्ये त्रिवृत् । त्रयाणामकारोकारमकाराणां वृत् वर्तनं यस्मिन् स प्रणव ओंकारः अहम् । छन्दसां पदानि त्रिपदा गायत्र्यहम् ॥ १२ ॥ इन्द्र इति ॥ वसूनां मध्ये हव्यवाट् पावकोऽहम् । आदित्यानां मध्ये विष्णुर्वामनोऽहम् । विष्णवाख्य आदित्यो वा । एकादशसंख्याकानां रुद्राणां मध्ये नीललोहिताख्यो रुद्रोऽहम् ॥ १३ ॥ ब्रह्मेति ॥ मनुः स्वायंभुवः धेनुषु हविर्धानी कामधेनुरहम् । स्फुटमन्यत् ॥ १४ ॥ सिद्धेति ॥ पतत्रिणां पक्षिणां राजा सुपर्णो गरुडोऽहम् अर्यमा तेषां राजाहम् । स्फुटमन्यत् ॥ १५ ॥ मामिति ॥ नक्षत्रौषधीनां प्रभुं सोमं चन्द्रं मां विद्धि । यक्षरक्षसां प्रभुं धनेशम् । स्फुटमन्यत् ॥ १६ ॥ ऐरावतमिति ॥ यादसां जलचराणां प्रभुं वरुणं मां विद्धि । तपतां तापवतां द्युमतां दीप्तिमतां च मध्ये सूर्यं मां विद्धि । स्फुटमन्यत् ॥ १७ ॥

उच्चैरिति ॥ संयमतां दण्डयतां मध्ये यमः।छत्वाभाव आर्षः । स्फुटमन्यत् ॥ १८ ॥ नागेति ॥ शृङ्गिणां दंष्ट्रिणां च राजा मृगेन्द्रः सिंहः । तुर्यः संन्यासः प्रथमो ब्राह्मणः । स्फुटमन्यत् ॥१९॥ तीर्थानामिति ॥ स्रोतसां प्रवाहरूपाणां तीर्थानां मध्ये गङ्गाऽहम् । सरसां स्थिरोदकाशयानां समुद्रोऽहम् धनुष्मतां मध्ये त्रिपुरघ्नो रुद्रोऽहम् । स्फुटमन्यत् ॥ २० ॥ धिष्ण्यानामिति ॥ धिष्ण्यानां निवासस्थानानां मध्ये मेरुरहमस्मि । गहनानां दुर्गमानां हिमालयोऽहम् वनस्पतीनां वृक्षाणां मध्ये अश्वत्थोऽहम् । ओषधीनां फलपाकान्तस्थायिनीनां मध्ये यवोऽहम्॥२१॥ पुरोधसामिति ॥ ब्रह्मिष्ठानां वेदार्थनिष्ठानां बृहस्पतिरहम्। सेनान्यां सेनापतीनां स्कन्दोऽहम्। अग्रण्यां सन्मार्गप्रवर्तकानां भगवान् अजो ब्रह्माऽहम् । स्फुटमन्यत् ॥२२॥ यज्ञानामिति ॥ शुचीनां शोधकानां मार्जनतक्षणवर्षणादीनां मध्ये वाय्वादिरूपः शुचिः शोधकोऽहम् । स्फुटमन्यत् ॥२३॥ योगानामिति ॥ योगानां योगाङ्गानामष्टानां मध्ये आत्मसंरोधः समाधिरहम् । विजिगीषतां जयमिच्छताम् । शता आर्षः । मन्त्रो नीतिरहम् । कौशलानां विवेकादिनैपुणानां मध्ये आन्वीक्षिकी

उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ॥ यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥ नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ॥ आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥ १९॥ तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम् ॥ आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥२०॥ धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः ॥ वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥ २१ ॥ पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ॥ स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥ २२ ॥ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ॥ वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥ योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ॥ आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥ स्त्रीणां तु शतरूपाऽहं पुंसां स्वायंभुवो मनुः ॥ नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥२५॥ धर्माणामस्मि संन्यासः क्षेमाणामबहिर्मतिः ॥ गुह्यानां सूनृतं मौनं मिथुनानामजस्त्वहम् ॥२६॥ संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ॥ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥ २७॥

आत्मानात्मविवेकविद्याऽहम् । पञ्चविधानां ख्यातिवादिनामेवमिदमेवं वेति यो दुरन्तो विकल्पः सोऽहम्।ख्यातयश्च "आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा । तथा निर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥ विज्ञानशून्यमीमांसा तर्काद्वैतविदां मतम् ।" अन्या अपि ख्यातीः केऽपि वदन्ति । विस्तरोऽन्यत्र श्रीभागवतपर्यङ्के च ज्ञेयः ॥२४॥ स्त्रीणामिति ॥ कुमारः सनत्कुमारः । स्फुटमन्यत्॥२५॥धर्माणामिति ॥ धर्माणां संन्यासः भूताभयप्रदानमस्मिक्षेमाणामभयस्थानानां मध्ये अबहिर्मतिः अन्तर्निष्ठास्मि गुह्यानां सूनृतं प्रियवचनं मौनं चाहम् । नहि प्रियभाषणे मौने च पुरुषस्याभिप्रायो ज्ञायते । मिथुनानां तु यस्य देहार्द्धाभ्यां मिथुनमभूत् सः अज एव मुख्यं मिथुनमित्याशयः॥ २६॥ संवत्सर इति ॥ अनिमिषामप्रमत्तानां मध्ये । नुडभाव आर्षः क्विबन्तमिषतेर्वा । संवत्सरोऽहमस्मि।ऋतूनां मधुमाधवौ चैत्रवैशाखौ वसन्त इत्यर्थः । तथा नक्षत्राणाम् अभिजित्

अहम् । उत्तराषाढा चतुर्थपादः श्रवणपञ्चदशांशश्च । तथा च श्रुतिः।"अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामधस्ताच्छ्रोणायाः" इति॥२७॥अहमिति ॥ युगानां कृतं कृतयुगम् । अहं धीराणां द्वन्द्वसहानां जितेन्द्रियाणां च मध्ये देवलः असितश्चाहम् । व्यासानां वेदविभागकर्तॄणां द्वैपायनोऽस्मि । कवीनां तीक्ष्णबुद्धीनां मध्ये आत्मवान् सूक्ष्मबुद्धिः काव्यः शुक्रोऽस्मि ॥२८॥ वासुदेव इति ॥ भगवताम् "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।" इत्येवंलक्षणानां वासुदेवश्चित्ताधिष्ठाता प्रथमव्यूहोऽहम् । किंपुरुषाणां वानराणाम् । स्फुटमन्यत् ॥२९॥ रत्नानामिति ॥ सुपेशसां सुन्दराणां पद्मकोशः । दर्भजातीनां काशदूर्वादीनां मध्ये कुशोऽस्मि। हविःषु चरुपुरोडाशादिषु घृतेषु गव्यमाज्यं घृतमहम्।स्फुटमन्यत् ॥ ३० ॥ व्यवसायिनामिति ॥ व्यवसायिनां धनाद्यर्जनपराणां लक्ष्मीर्धनादिसम्पदहम् । कितवानां छलयतां छलग्रहः छलसंकल्पोऽहम् । तितिक्षूणां क्षमावतां तितिक्षा क्षमाऽहम् । सत्त्ववतां धीराणां सत्वं धैर्यं सात्विकानां सत्वगुणो वाऽहम् ॥ ३१॥ ओज इति ॥ ओज इन्द्रियाणां

**अहं युगानां च कृतं धीराणां देवलोऽसितः ॥ द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥ २८॥ वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ॥ किंपूरुषाणां हनुमान् विद्याध्राणां सुदर्शनः ॥२९॥ रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम् ॥ कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ॥ ३० ॥ व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ॥ तितिक्षाऽस्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ॥३१॥ ओजः सहो बलवतां कर्माहं विद्धि सात्त्वताम् ॥ सात्वतां नवमूर्तीनामादिमूर्तिरहं परा ॥ ३२ ॥ विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ॥ भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥ ३३ ॥ अपां रसश्च परमस्तेजिष्ठानां विभावसुः ॥ प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥ ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ॥ भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥ ३५ ॥**

सामर्थ्यं सहो मनसः बलं शरीरस्य ओजआदिमतामोजआदिरूपोऽहम् । सात्वतां भक्तानां मदर्पितं कर्म मां विद्धि । सात्त्वतां वैष्णवानां नवव्यूहानामर्चने वासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहवामना इति या नव मूर्तयस्तासां मध्ये या परा कारणभूता आदिमूर्तिर्वासुदेवाख्या साऽहम् । नवमूर्तिषु वामनस्थाने ब्रह्मशब्दः क्वचित् । ब्रह्मापि तत्र विष्णुरेव ॥ ३२ ॥ विश्वावसुरिति ॥ गन्धर्वाप्सरसां विश्वावसुः पूर्वचित्तिश्चेति गन्धर्वाणां विश्वावसुः अहम् । अप्सरसां पूर्वचित्तिः अहम् । भुवः गन्धमात्रमविकृतो गन्धोऽहं सुगन्धो वा ॥ ३३ ॥ अपामिति ॥ अपां परमो मधुरो रसोऽहम् । तेजिष्ठानां तेजस्विनां विभावसुरग्निः अहम् । सूर्यादीनां प्रभाऽहम् । नभसः परः मधुरः पराख्यः सूक्ष्मकारणभूतो वा शब्दोऽहम् ॥ ३४ ॥ ब्रह्मण्यानामिति ॥ अर्जुनः पार्थः भूतानां प्राणिनां स्थित्यादिहेतुरहम् । प्रतिसङ्क्रमः प्रलयः । स्फुटमन्यत् ॥ ३५ ॥

गतीति ॥ गत्यादयः पञ्च पादादिकर्मेन्द्रियव्यापाराः स्पर्शादयः पञ्च त्वगादिपञ्च ज्ञानेन्द्रियव्यापारास्तेऽपि सर्वेऽहम् । लक्षणं दर्शनम् । तथा सर्वेषामिन्द्रियाणामपीन्द्रियं तत्तदर्थग्रहणशक्तिः तत्तदधिष्ठातृरूपं वाऽप्यहम् ॥ ३६ ॥ विशेषतो विभूतीर्निरूप्य सामान्येनाह—पृथिवीति सार्द्धम् ॥अत्र पृथिव्यादिशब्दैस्तन्मात्राणि विवक्षितानि विकारस्य पृथगुक्तेः। अहमहङ्कारः महान्महत्तत्त्वमेताः सप्त प्रकृतिविकृतय उक्ताः । विकारः पञ्चमहाभूतानि एकादशेन्द्रियाणि चेत्येवं षोडशसङ्ख्याकः पुरुषो जीवः अव्यक्तं प्रकृतिः एवं पञ्चविंशति तत्त्वान्युक्तानि ।तदुक्तम् ।"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति।किंच रजः सत्वं तम इति प्रकृतेर्गुणाः तथा परं ब्रह्म च एतत्सर्वमहमेव किंच एतत्प्रसंख्यानमेतेषां परिगणनम् । तथा एतेषां लक्षणतो ज्ञानं च तथा तत्फलं तत्त्वनिश्चयश्चाहमेव ॥ ३७॥ मयेति ॥ ईश्वरेण जीवेनेत्यादिरूपेण मया विना क्वचिदपि भावो नास्तीत्यन्वयः । तत्र ईश्वरेण जीवेन च विना चेतनात्मको भावो न विद्यते । गुणेन सत्वादिना महदादिना च विना जडात्मको भावो न विद्यते। सर्वेषामात्मना व्यष्टिसमष्ट्युपहितेन जीवेन समष्टिव्यष्टिरूपोपाधिना च विना चिज्जडात्मको भावो नास्ति । स सर्वोऽपि मया विना नास्तीत्यहमेव सर्वमित्यर्थः । अथ भावः ।

गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् ॥ आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ॥ ३६ ॥ पृथिवी वायुराकाश आपो ज्योतिरहं महान्॥
विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम् ॥ अहमेतत् प्रसंख्यानं ज्ञानं तत्त्वविनिश्चयः ॥३७॥ मयेश्वरेण जीवेन गुणेन गुणिना विना॥ सर्वा-
त्मनाऽपि सर्वेण न भावो विद्यते क्वचित् ॥ ३८ ॥ संख्यानं परमाणूनां कालेन क्रियते मया ॥ न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः
॥३९॥ तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥ ४० ॥ एतास्ते कीर्तिताः सर्वाः
संक्षेपेण विभूतयः ॥ मनोविकारा एवैते यथा वाचाऽभिधीयते ॥ ४१ ॥

जीवेश्वररूपो द्विविधो यो भावः यश्च गुणगुणिरूपः यश्च क्षेत्रक्षेत्रज्ञरूपः स सर्वोऽपि मया विना नास्ति अहमेव सर्वमिति ॥ ३८॥ विशेषतः सर्वविभूतिकथनमशक्यमित्याह—संख्यानमिति॥ कथंचिन्महता कालेन पृथिव्यादिपरमाणूनां सङ्ख्यानं मया क्रियते कृत्वा वक्तुं शक्यते तथापि कोटिशोऽण्डानि सृजतःमे मम विभूतीनां सङ्ख्यानं कर्तुं न शक्यते। यदा मत्सृष्टब्रह्माण्डानामेव सङ्ख्यानमशक्यं तदा तद्गतानां विभूतीनां कथं शक्यम् ॥ ३९ ॥ तेज इति ॥ यत्र यत्र तेजः प्रभावः श्रीः सम्पत् कीर्तिर्यशः ऐश्वर्यं नियन्तृत्वं । ह्रीर्निन्दितकर्मणि लज्जा।त्यागो वैराग्यम् । सौभगं मनोनयनाह्लादकत्वम् । भगो भाग्यं धर्मश्च वीर्यं बलं तितिक्षा क्षमा विज्ञानं यथार्थज्ञानम् उपलभ्येत स स मेंऽशको विभूतिः ॥ ४० ॥ एता इति ॥ ते तुभ्यमेता विभूतयः मयि चित्तावताराय संक्षेपेण कीर्त्तिताः । वस्तुत एते मनसो विकारा एव न तु परमार्थाः । यथा किंचित् खपुष्पादि वाचा वाङ्मात्रेणाऽभिधीयते तत्तुल्याः । अतोऽत्र नातीवाभिनिवेशः कार्यः इति स्वामिपादाः । अन्ये तु एते लोके दृश्यमानाः पदार्थाः मनोविकाराः स्नेहद्वेषादयः यथा वर्तन्ते तथैव

लोके वाचा अभिधीयते अभिधीयन्ते । एकत्वं समुदायाभिप्रायेण न तु विभूतिरूपेणेत्यर्थः । यथा पदार्थमात्रस्य मद्विभूतित्वेऽपि यस्य यत्र स्नेहमयो विकारः तत्र तेन अयं मे पुत्रोऽयं मे पिता इत्याद्यभिधीयते न तु मद्विभूतित्वेन । यत्र यस्य द्वेषमयो मनोविकारस्तत्र तेन अयमपकर्ता अयं द्वेष्य इत्याद्यभिधीयते न तु मद्विभूतित्वेन इत्यादि प्राहुः ॥ ४१ ॥ वाचमिति ॥ तस्मात् वाचं स्वच्छन्दवचनात् यच्छ नियच्छ वशीकुरु । एवं मनो यच्छ मनोयमनार्थं प्राणान् यच्छ । इन्द्रियाणि च यच्छ।आत्मना सत्वसंपन्नया बुद्ध्या आत्मानं बुद्धिमेव यच्छ । एवं चेत् भूयः अध्वने संसारमार्गाय न कल्पसे न योग्यो भवसि किन्तु ततो भविष्यसीत्यर्थः ॥ ४२ ॥ य इति ॥ वाङ्मनसी इत्युपलक्षणम् । अजभाव आर्षः । यो यतिः संयमी धिया वागादीन् असंयच्छन् भवति तस्य यथेष्टाचारदोषेण व्रतादि पुण्यं स्रवति नश्यति । आमघटगताम्बु यथा स्रवति तच्च न ज्ञायते तथेति ॥ ४३ ॥ तस्मादिति ॥ यस्माद्वागाद्यसंयमने सर्वसाधनवैयर्थ्यं तस्मात् मत्परायणः मदेकशरणः सन् मद्भक्तियुक्तया बुद्ध्या वागादीन्नितरां यच्छेत् ततश्च तेन

वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च ॥ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥ ४२ ॥ यो वै वाङ्मनसी सम्यगसंयच्छन्धिया यतिः ॥ तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥ ४३ ॥ तस्मान्मनोवचः प्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥ ४४ ॥ इति श्रीभागवते एकादशस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ उद्धव उवाच ॥ यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥ १ ॥ यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ॥ स्वधर्मेणारविन्दाक्ष तत्समाख्यातुमर्हसि ॥ २ ॥ पुरा किल महाबाहो धर्मं परमकं प्रभो ॥ यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ॥ ३ ॥ स इदानीं सुमहता कालेनामित्रकर्शन ॥ न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥ ४ ॥

तस्य संसारः परिसमाप्यते स कृतकृत्यो मुक्तो भवतीत्यर्थः ॥ ४४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ षोडशे गङ्गासहायो व्यधादेकादशस्य च ॥ १६ ॥ ततः सप्तदशे धर्मो ब्रह्मचारिगृहस्थयोः ॥ संक्षेपाद्वर्ण्यते तत्र श्लोका मातङ्गमार्गणैः ॥ उवाच त्रितयं सार्द्धाष्टपञ्चाशदनुष्टुभः ॥ १७ ॥ य इति ॥ वर्णाश्रमाचारवताम् अपिना तद्धीनानामपि सर्वेषां द्विपदां यस्त्वया त्वद्भक्तिलक्षणः तज्ज्ञापकः तत्साधनमित्यर्थः । धर्मोऽभिहितः कथितः ॥ १॥ यथेति ॥ हे अरविन्दाक्ष सा त्वयि भक्तिर्यथा येन प्रकारेण अनुष्ठीयमानेन स्वधर्मेण नृणां भवेत् तत् तं धर्मं तदनुष्ठानप्रकारं च ममाख्यातुं कथयितुमर्हसीति ॥ २ ॥ पुरेति ॥ हे महाबाहो हे प्रभो हे माधव परमकं परमः सर्वत उत्कृष्टश्चासौ कं सुखरूपश्च तं यत् यं धर्मं तेन पूर्वनिरूपितेन हंसरूपेण त्वं ब्रह्मणेऽभ्यात्थ कथितवान्। हंसरूपेण धर्मोऽपि निरूपित एव न तु योगमात्रम् ।" जानीतमागतं यज्ञं युष्मद्धर्मविवक्षया ।" इत्युक्तेः ॥ ३ ॥ स इति ॥ हे अमित्रकर्शन स त्वया प्रागनुशासितोऽपि धर्मो महता कालेन पुनर्लुप्तोऽत इदानीं मर्त्यलोके प्रायो न वर्त्तते । अग्रे तु नैवं

भविता ॥ ४ ॥ वक्तेति ॥ हे अच्युत यस्मात् ते त्वत्तोऽन्यो भुवि तथा यत्र मूर्तिधराः कला वेदाद्या विद्याः सन्ति तस्यां वैरिञ्च्यां द्रुहिणसम्बन्धिन्यां सभायामप्यस्य भक्तिसाधनरूपस्य धर्मस्य वक्ता कर्ता अविता रक्षकश्च नास्ति ॥ ५ ॥ कर्त्रेति ॥ हे मधुसूदन हे देव तस्मात् धर्मस्य कर्त्राऽवित्रा प्रवक्त्रा च भवता महीतले त्यक्ते सति नष्टमिमं धर्मं कः प्रवक्ष्यति । अत्र इदानीं त्वदुपदेशं विनाग्रे नैव भविष्यतीत्याशयः ॥ ६ ॥ तत्त्वमिति ॥ यस्मादेवं तत्तस्मात् हे सर्वधर्मज्ञ त्वद्भक्तिर्लक्ष्यते जन्यते येन स धर्मो नोऽस्माकं मनुष्याणां मध्ये यस्य वर्णाश्रमनिष्ठस्याधिकारिणो यथा यत्प्रकारको विधीयते तथा हे प्रभो स्वामिन् मे मह्यं त्वं वर्णय ॥ ७ ॥ इत्थमिति ॥ स्पष्टम् ॥ ८ ॥ धर्म्य इति ॥ हे उद्धव तवैष प्रश्नो धर्म्यः धर्मादनपेतः निर्द्धारणानुष्ठानद्वारा धर्महेतुः नृणां नैःश्रेयसकरो मोक्षसाधनम् । अतो वर्णाश्रमाचारवतां तं धर्मं वर्णयामि । त्वं च मे मत्तो निबोध ॥ ९ ॥ आदौ मदुपासनलक्षण एव मुख्यो धर्म आसीत् । आचारलक्षणस्तु पश्चात्प्रवृत्तः । स चैवमनुष्ठितो भक्तिहेतुरिति वक्तुमाह—आदाविति ॥ कल्पादौ यत्कृत-

वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ॥ सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥ कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ॥ त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥ ६ ॥ तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः ॥ यथा यस्य विधीयेत तथा वर्णय मे प्रभो ॥ ७ ॥ श्रीशुक उवाच ॥ इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान् हरिः ॥ प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥ ८॥ श्रीभगवानुवाच ॥ धर्म्य एष तव प्रश्नो नैश्रेयसकरो नृणाम् ॥ वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ॥ कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः ॥ १० ॥ वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ॥ उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥११॥ त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी ॥विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥ १२ ॥ विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः ॥ १३ ॥

युगं तस्मिन् सर्वेषां नृणां हंस इति स्मृतो वर्ण एक एवासीत् । यतस्तदा सर्वाः प्रजाः जात्या जन्मना स्वभावत एव कृतकृत्यास्तस्मात्तं कृतयुगं विदुः ॥ १० ॥ किंच विधायकाभावादपि तदानीं नान्यत्कर्मासीदित्याह—वेद इति ॥ अग्रे वेदः प्रणवरूप एवासीत् नाधिकः । धर्मश्च मनोविषयो वृषरूपधृक् चतुष्पादहमेव न तु क्रियाविशेषो यज्ञादिः । अतस्ते सर्वे तपोनिष्ठाः मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः इत्युक्तेः । एकाग्रतया मुक्तकिल्बिषा जनाः हंसं शुद्धं माम् उपासते ध्यायन्तीति ॥ ११ ॥ त्रेतेति ॥ हे महाभाग ततः पश्चात्त्रेतायुगप्रवेशे मे वैराजरूपस्य प्राणान्निमित्तात् हृदयात्सकाशात् त्रयी ऋग्यजुःसामरूपास्त्रयोऽवयवा यस्याः सा विद्या प्रादुरभूत् । तस्याः त्रय्याः सकाशात् हौत्राध्वर्यवौद्गात्रैस्त्रिवृत् त्रिरूपो मखोऽहमासम् । " यज्ञो वै विष्णुः " इति श्रुतेः ॥ १२ ॥ विप्रेति ॥ विप्रादयश्चत्वारो वर्णा वैराजात्पुरुषाज्जाताः प्राक् सृष्टा एव प्रकटीब-

भूवुस्ते क्रमान्मुखादिजा ज्ञेयाः ये । विप्रादयः आत्मनो मनसः आचारः शमादिरूप एव लक्षणं ज्ञापकं येषां ते ॥१३॥ गृहाश्रम इति ॥ मम वैराजरूपस्य जघनतो गृहाश्रमः । हृदो वक्षसोऽधस्तात् ब्रह्मचर्यमिति नैष्ठिकाभिप्रायमिति स्वामिपादाः । स्पष्टमन्यत् । शीर्षणीति छान्दसम् ॥ १४ ॥ वर्णानामिति ॥ वर्णाश्रमवतां नृणां मुखबाह्वादिपूर्वोक्तजन्मभूम्यनुसारिणी जन्मस्थानानुसारिण्यः । पूर्वसवर्णदीर्घ आर्षः । प्रकृतयः स्वभावा आसन् । तदेव स्पष्टयति । नीचैः अव्ययमिदम् । पादादिभिः जन्मभूमिभिः नीचा मन्दाः उत्तमैर्मुखादिभिरुत्तमाः ॥ १५ ॥ शम इति ॥ शमः अन्तःकरणनिग्रहः । दमो बाह्येन्द्रियनिग्रहः । तपः तत्वालोचनम् । शौचं बाह्याभ्यन्तरशुद्धता । यथालाभं सन्तोषः । क्षान्तिः परैरपराधे कृतेऽपि विकाराभावः । आर्जवं कौटिल्यराहित्यं मद्भक्तिश्च । दया परदुःखपरिहाणेच्छा । सत्यं हितं मधुरं यथार्थभाषणम् । इमास्तु ब्रह्मप्रकृतयः ब्राह्मणत्वाभिव्यञ्जकाः स्वभावसिद्धधर्माः । एतैरेवाश्रमस्वभावा अपि विज्ञेयाः ॥ १६ ॥ तेज इति ॥ तेजः परैरनभिभवनीयत्वम् । बलं पराभिभवसामर्थ्यम् । धृतिः सन्ताप-

गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ॥ वक्षःस्थानाद्वनेवासो न्यासः शीर्षणि संस्थितः ॥ १४ ॥ वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः ॥ आसन्प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमैः ॥ १५ ॥ शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् ॥ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ॥ स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १७ ॥ आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥ शुश्रूषणं द्विजगवां देवानां चाप्यमायया ॥ तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥ १९ ॥ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ॥ कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥ २० ॥ अहिंसा सत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥

सहनम् । शौर्यं निर्भयता । तितिक्षा दीनापराधसहनम् । औदार्यं दानोत्साहः । उद्यमः धनादिसञ्चयानुकूलो व्यापारः । स्थैर्यं सत्यसंकल्पत्वम् । ब्रह्मण्यता ब्राह्मणभक्तिः । ऐश्वर्यम् ईश्वरता इमाः क्षत्रप्रकृतयः ॥१७॥ आस्तिक्यमिति ॥ आस्तिक्यं गुरुशास्त्रवचने विश्वासः । अदम्भः परप्रतारणाराहित्यम् । अर्थोपचयैर्धनवृद्धिभिः अतुष्टिः अलम्बुद्धिराहित्यम् । इमास्तु वैश्यस्य प्रकृतयः ॥१८॥ शुश्रूषणमिति ॥ अमायया निष्कपटतया द्विजादीनां शुश्रूषा तत्र शुश्रूषायां निमित्तभूतायां लब्धेनान्नादिना संतोषश्च । इमाः शूद्रप्रकृतयः॥१९॥अशौचमिति॥अशौचं शौचराहित्यम् । अनृतमनृतभाषणम् । स्तेयं चौर्यम् ।नास्तिक्यं शास्त्रगुरुवचने अविश्वासः । शुष्कविग्रहः निर्हेतुकविरोधः । कामः विषयेच्छा । क्रोधः तर्षः अधिकेच्छा । अयं सर्वोऽप्यन्तेऽवसायिनां वर्णाश्रमहीनानां चाण्डालादीनां स्वभावः ॥२०॥ वर्णाभिव्यञ्जकस्वभावानुक्त्वाऽनुष्ठेयान् धर्मानाह—अहिंसेति ॥ हिंसा परपीडा तद्वर्जनमहिंसा । सत्यं यथार्थहितप्रियभाषणम् । अस्तेयं चौर्यवर्जनम् । अकामक्रोधलोभता कामादित्यागः । भूतानां प्राणिनां प्रियहितविषया ईहा

कामादिचेष्टा च अयं सार्ववर्णिक उपलक्षणतया प्राणिमात्रानुष्ठेयोऽयं धर्मः ॥ २१ ॥ वर्णधर्मान् गृहस्थप्रकरणे वक्ष्यति प्रथमं तावदाश्रमेषु ब्रह्मचारिणो धर्मा वर्ण्यन्ते । स च द्विविध उपकुर्वाणको नैष्ठिकश्च तत्रावस्य धर्मानाह—द्वितीयमिति ॥ द्विजस्त्रैवर्णिकः आनुपूर्व्यात् गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्य गुरुगृहे वसन् दान्तो वशीकृतेन्द्रियः आचार्येणाहूतः सन् । दीर्घाभाव आर्षः । ब्रह्म वेदमधीयीत । चकारात्तदर्थं च विचारयेत् ॥२२॥ मेखलेति ॥ जटिलः अनभ्यङ्गादिना जातजटः तथा अधौतदद्वासोऽरक्तपीठः दन्ताश्च तद्वासश्च दद्वासांसि न धौतानि यस्य स अधौतदद्वासा स चासावरक्तपीठश्च न कौतुकादिना रक्तं पीठमासनं यस्य स च स मेखलादीन्दधद्विभ्राणो भवेत् । अक्षशब्देनाकारादिक्षकारान्तवर्णक्रमबोधकेन जपमालोच्यते ॥ २३ ॥ स्नानेति ॥ स्नानभोजनहोमेषु तथा जपश्च मन्त्रादिजपः उच्चारो मूत्रपुरीषोत्सर्गश्च जपोच्चारं तस्मिंश्च समये वाग्यतो मौनी भवेत् । तथा नखान् कक्षगतानि उपस्थगतानि अपिशब्दादन्यानि च रोमाणि च न च्छिन्द्यात् ॥ २४ ॥ रेत इति ॥ ब्रह्मव्रतं

द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ॥ वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाऽऽहुतः ॥ २२ ॥ मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् ॥
जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान्दधत् ॥ २३ ॥ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ॥ न च्छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि
॥२४॥ रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ॥ अवकीर्णेऽवगाह्याऽप्सु यतासुस्त्रिपदीं जपेत् ॥२५॥ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुराञ्छुचिः ॥
समाहित उपासीत संध्ये च यतवाग्जपन् ॥ २६ ॥ आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः
॥२७॥ सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः ॥२८॥ शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ॥
यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः ॥ २९ ॥

ब्रह्मचर्यं तद्धरः अगृहस्थः जातु कदाचिदपि स्वयं बुद्धिपूर्वकं रेतो नावकिरेत् । यदि कथंचिद्रोगादिवशादवकीर्णं स्यात्तदा आप्स्ववगाह्य स्नात्वा यतासुः कृतप्राणायामः त्रिपदीं गायत्रीं जपेत् ॥ २५ ॥ अग्नीति ॥ नित्यम् उभे सन्ध्ये स्नानादिना शुचिः समाहित एकाग्रचित्तः सन्नग्न्यर्काचार्यादीन् उपासीत । ततो यतवाक् सन् गायत्रीं जपन् भवेत् । तत्राग्न्युपासनं होमेन अर्कोपासनमर्घ्यदानादिना आचार्याद्युपासनं प्रणामादिना गवामुपासनं तृणादिदानेन मध्याह्नसन्ध्यायां गवाद्युपासननियमो नास्तीति सूचयितुं द्विवचनम् । गुरुः केवलं शास्त्रोपदेष्टा आचार्यस्तु उपनयनादिपूर्वकं तदुपदेष्टेति भेदः ॥२६॥ आचार्यमिति ॥ नासूयेत् तत्र दोषान्न पश्येत् । यतो गुरुः सर्वदेवमयः । स्फुटमन्यत् ॥ २७ ॥ सायमिति ॥ पूर्वार्द्धं स्फुटम् । अन्यदपि यत्प्राप्तं तच्च निवेदयेत् । तेनानुज्ञातं तु संयतः सन्नुपयुञ्जीत भुञ्जीत ॥ २८ ॥ शुश्रूषमाण इति ॥ आचार्यं शुश्रूषमाणः नातिदूरे यानशय्यासनैर्नीचवत्कृताञ्जलिः सदोपासीत । यान्तं पृष्ठतो यानेन शयानम् अप्रमत्ततया समीपशयनेन विश्रान्तं पादसंवाहनादिभिः समीपोपवेशनेन

आसीनं कृताञ्जलिर्नियोगप्रतीक्षणाय नातिदूरेऽवस्थानेन इत्यर्थः ॥२९॥ एवमिति ॥ एवं वृत्तं वर्तनं यस्य सः सर्वभोगविवर्जितः यावद्विद्या अध्ययनं समाप्यते तावदखण्डितमविच्छिन्नं व्रतमुक्तविधं सर्वं नियमं बिभ्रत् धारयन् गुरुगृहे वसेत् ॥ ३० ॥ नैष्ठिकधर्मानाह—यदीति ॥ यदि असौ ब्रह्मचारी " छन्दसां यत्र मूर्तिधराः कला " इत्युक्तत्वात् वेदादीनां लोके ब्रह्मविष्टपं ब्रह्मलोकमारोक्ष्यन् आरोढुमिच्छन् भवेत् तदा बृहद्व्रतः यावज्जीवं ब्रह्मचर्यधरः सन् स्वाध्यायार्थमधिकवेदाध्ययनार्थमधीतनिष्क्रयार्थं च देहं गुरवे विन्यसेत् समर्पयेत् ॥ ३१ ॥ अग्नाविति ॥ अपृथग्धीर्भेदबुद्धिरहितः ब्रह्मवर्चस्वी वेदाभ्यासजतेजोयुक्तः । अयमार्षः । यद्वा । ब्रह्मणि वेदस्याध्ययनादौ वर्चस्वी तेजस्वी इति समासान्तप्राप्त्यभावः । अकल्मषः पापरहितः सन् अग्न्यादिषु सर्वत्र परं परमात्मानमेकं मामेव उपासीत ध्यायेत्॥३२॥ स्त्रीणामिति ॥ अगृहस्थः ब्रह्मचारी वानप्रस्थो यतिश्च स्त्रीणां निरीक्षणं भावगर्भं क्ष्वेलनं परिहासादि एवमादि संत्यजेत् प्राणिनः पशुपक्ष्यादीनपि मिथुनीभूतानग्रतस्त्यजेत् न पश्येत्॥३३॥ शौचमिति युग्मम् ॥ हे कुलनन्दन शौचा-

एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः ॥ विद्या समाप्यते यावद्बिभ्रद्व्रतमखण्डितम् ॥ ३० ॥ यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् ॥ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥ अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ॥ अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३२ ॥ स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनो मिथुनीभूता न गृहस्थोऽग्रतस्त्यजेत् ॥३३ ॥ शौचमाचमनं स्नानं संध्योपासनमार्जवम् ॥ तीर्थसेवा जपोऽस्पृश्याऽभक्ष्याऽसंभाष्यवर्जनम् ॥३४॥ सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ॥ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥ एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ॥ मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥ अथानन्तरमावेक्ष्यन्यथा जिज्ञासितागमः ॥ गुरवे दक्षिणां दत्त्वा स्नायाद् गुर्वनुमोदितः ॥ ३७ ॥ गृहं वनं वोपविशेत् प्रव्रजेद्वा द्विजोत्तमः ॥ आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३८ ॥

दिकं स्पष्टम् । जपो गायत्र्यादिमन्त्रजपः अस्पृश्याभक्ष्यासंभाष्याणां स्पर्शभक्षणसंभाषणवर्जनम् अयं । शौचादिरूपः सर्वत्र मद्भावः मनोवाक्कायादीनामुत्पथप्रवृत्तितः संयमश्च सर्वाश्रमप्रयुक्तो नियमो धर्मः ॥३४॥३५॥ एवमिति ॥ बृहद्व्रतधरो नैष्ठिकः ब्राह्मणः अधिगतवेदतदर्थः तीव्रेण अविच्छिन्नेन तपसा दग्धः कर्माशयः कर्मवासना यस्य सः अत एवाग्निरिव ज्वलन् मद्भक्तः अमलः विशुद्धो जीवन्मुक्तो भवतीत्यर्थः । यद्वा । ईदृशः सन् मद्भक्तो भवति ॥ ३६ ॥ अथेति ॥ यथा जिज्ञासितागमः यथावदवगतवेदार्थोऽथानन्तरं द्वितीयाश्रमं गार्हस्थ्यमावेक्ष्यन् प्रवेष्टुमिच्छन् गुरवे दक्षिणां दत्त्वा गुरुणा अनुमोदितः अनुज्ञातः स्नायात् । समावर्तनाख्यं स्नानं कुर्यादित्यर्थः ॥३७॥ गृहमिति ॥ सकामश्चेद्गृहमुपविशेत् । अन्तःकरणशुद्ध्यादिकामश्चेद्वनं प्रविशेत् । शुद्धान्तःकरणो द्विजोत्तमो ब्राह्मणश्चेत्प्रव्रजेत् । क्षत्रियवैश्ययोः प्रव्रज्यायामधिकाराभावात् । अथवा गृहस्थाद्याश्रमात् क्रमेणैवाश्रमान्तरं गच्छेत् । अमत्परः मद्भक्तिहीनः अन्यथा अनाश्रमिनां प्रतिलोमं च नाचरेदित्यर्थः । भक्तस्याश्रमनियमाभावस्य वक्ष्यमाणत्वात् ॥३८॥

गृहार्थीति ॥ गृहार्थी सदृशीमनुरूपामजुगुप्सितां कुलतो लक्षणतश्चानिन्दितां सवर्णां भार्यामुद्वहेत् । यामन्यां कामत उद्वहेत् तामपि तत्रापि प्रथमम्यूढायाः सवर्णाया अनन्तरमेव तत्रापि वर्णक्रमादेवोद्वहेत् । "तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् । ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥" इति स्मृतेः ॥ ३९ ॥ इज्येति ॥ इज्याध्ययनदानानि सर्वेषां द्विजन्मनां त्रैवर्णिकानामावश्यका धर्माः प्रतिग्रहोऽध्यापनं याजनं च वृत्तिः सा च ब्राह्मणस्यैव नान्यस्य ॥ ४० ॥ प्रतिग्रहमिति ॥ यदि प्रतिग्रहं तपस्तेजोयशसां नुदं विघातकं मन्यमानः स्यात्तदा अन्याभ्यां याजनाध्यापनाभ्यामेव जीवेत । तत्रार्थः । यदि तयोरपि कार्पण्यादिदोषदृक् भवेत्तदा शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैरेव जीवेत् ॥ ४१ ॥ ब्राह्मणस्येति ॥ हि यस्मात् अयं ब्राह्मणस्य देहः क्षुद्रकामाय तुच्छविषयभोगाय नेष्यते योग्यो न भवति । किं त्विह जीवद्दशायां कृच्छ्राय वृत्तिसंकोचादिकष्टाय तपसे तत्त्वालोचनाय च प्रेत्य मृत्वा तु अनन्तं यन्मोक्षसुखं तदर्थं च योग्यो भवति ॥ ४२ ॥ शिलोञ्छेति ॥ उञ्छवृत्तिर्नाम विपण्यादि-

गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥ ३९ ॥ इज्याध्ययनदानादि सर्वेषां च द्विजन्मनाम् ॥
प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥४०॥ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोः ॥४१॥
ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ॥ कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ ४२ ॥ शिलोञ्छवृत्त्या परितुष्टचेता धर्मं महान्तं
विरजं जुषाणः ॥ मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शान्तिम् ॥ ४३ ॥ समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् ॥ तानुद्धरिष्ये
नचिरादापद्भ्यो नौरिवार्णवात् ॥ ४४ ॥ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ॥ आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥ ४५ ॥
एवंविधो नरपतिर्विमानेनार्कवर्चसा ॥ विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥ ४६ ॥

पतितकणोपादानं तां कणिशाद्यर्जनरूपशिलवृत्त्यैकीकृत्य तया वृत्त्या परितुष्टचित्तः विरजं निष्कामं महान्तमातिथ्यादिलक्षणं धर्मं जुषाणः सेवमानः । मुगभाव आर्षः । मय्यर्पितात्मा निरन्तरं मच्चिन्तनपरः गृहपुत्रकलत्रादिषु नातिप्रसक्तः पुरुषो गृह एव तिष्ठन् सम्यक् वनवासादिक्लेशं विना सुखेनैव शान्तिं मुक्तिमुपैति ॥ ४३ ॥ समुद्धरन्तीति ॥ विप्रं मत्परायणमन्यमपि सीदन्तं वृत्तिसंकोचात् क्लिश्यन्तं ये धनिनो वृत्तिसंपादनेन समुद्धरन्ति जीवयन्ति तानहं नौरिवार्णवात् नचिराच्छीघ्रमेव सर्वापद्भ्यः उद्धरिष्ये ॥४४॥ सर्वा इति ॥ राजा पिता इव सर्वाः प्रजाः व्यसनात्समुद्धरेत् । तथा धीरः सन् आत्मानम् आत्मना समुद्धरेत् । यथा गजपतिर्महागजः गर्तपतितान् अन्यान् गजान् समुद्धरति तथेति ॥ ४५ ॥ एवंविध इति ॥ एवंविधो नरपती राजा इह जन्मन्येव कृत्स्नमशुभं प्रतिबन्धकं पापम् एवं प्रजारक्षणपुण्येन विधूय निरस्य अर्कस्येव वर्चस्तेजः प्रकाशो यस्य तेन विमानेन स्वर्गं गत्वा इन्द्रेण सह मोदते सुखमनुभवति ॥ ४६ ॥

आपद्वृत्तीराह—सीदन्निति ॥ शिलोञ्छप्रतिग्रहादिभ्यो निर्वाहाभावेन क्लिश्यन् विप्रो वणिग्वृत्त्या तत्रापि पण्यैः क्रयविक्रयादिव्यवहारैरेव न तु सुरालवणादिनिषिद्धैः आपदं तरेत् तत्राप्यापदाक्रान्तश्चेत् खड्गेन क्षत्रियवृत्त्या वाऽऽपदं तरेत् । श्ववृत्त्या नीचसेवया तु कथंचनापि न जीवेत् । यद्यपि गौतमोऽनन्तरां पापीयसीं वृत्तिमातिष्ठेदिति स्मरन् खड्गधारणं पण्यविक्रयाच्छ्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्तिरेव श्रेष्ठेति भगवतो मतम् ॥ ४७ ॥ वैश्येति ॥ राजन्यः क्षत्रियः आपदि वैश्यवृत्त्या जीवेत् । तत्राप्यापदि मृगयया विचरेत् विप्ररूपेण अध्यापनादिना वा चरेत् । श्ववृत्त्या तु कथंचन न चरेत् ॥ ४८ ॥ शूद्रेति ॥ वैश्यः आपदि शूद्रवृत्तिं भजेत् । शूद्रस्त्वापदि कारवः प्रतिलोमजविशेषा बुरुडादयः तेषां वृत्तिं कटनिर्माणादिरूपां क्रियां भजेत् । एवमापदं निस्तीर्य ब्राह्मणादिः कृच्छ्रात् आपदो विमुक्तस्तु गर्ह्येण नीचवर्णं प्रति विहितत्वेन निन्दितेन कर्मणा वृत्तिं न लिप्सेत न संपादयेत् ॥४९॥ वेदेति ॥ वेदाध्यायाद्यैर्यथोदयं मद्रूपाणि देवर्ष्यादीनि अन्वहं यजेत् । तत्र वेदाध्यायो ब्रह्मयज्ञः तेन मद्रूपान् ऋषीन् यथोदयं

सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् ॥ खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथंचन ॥ ४७ ॥ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि ॥ चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन ॥४८॥ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम् ॥ कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ॥ धनेनाऽपीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥ ५१ ॥ कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥ पुत्रदाराप्तबन्धूनां संगमः पान्थसंगमः ॥ अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥ ५३ ॥ इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन् ॥ न गृहैरनुबध्येत निर्ममो निरहंकृतः ॥ ५४ ॥

स्वविभवानुसारेण अन्वहं यजेत् । एवमग्रेऽपि स्वधाशब्दोपलक्षितेन तर्पणश्राद्धादिना पितॄन् स्वाहाकारेण होमेन देवान् बलिहरणेन भूतानि अन्नाद्यैः अन्नोदकादिभिर्मनुष्यान् मद्रूपाणीति तेष्वीश्वरदृष्टिं विधत्ते ॥५०॥ यदृच्छयेति ॥ यदृच्छया उद्यमं विना उपपन्नेन प्राप्तेन उपार्जितेन स्ववृत्त्या लब्धेन वा अत एव शुक्लेन शुद्धेन धनेन भृत्यान् पोष्यान् अपीडयन् तेषां वृत्तिं संपाद्य तत उर्वरितेन न्यायेन यथोक्तविधिना क्रतून् यज्ञानाहरेत् अनुतिष्ठेत् ॥५१॥ गृहस्थस्यापि निवृत्तिनिष्ठामाह—कुटुम्बेष्विति ॥ विपश्चित् विवेकी कुटुम्ब्यपि कुटुम्बेषु न सज्जेत न प्रमाद्येत् मन्निष्ठायां प्रमत्तो न भवेत् किंतु अदृष्टमपि स्वर्गादिसुखं दृष्टवन्नश्वरं पश्येत् ॥ ५२ ॥ पुत्रेति ॥ पुत्रादीनामेकत्र सङ्गमः पान्थानां प्रपायां सङ्गम इवानित्यः यत एते पुत्रादयः अनुदेहं प्रतिदेहं वियन्ति वियुक्ता भवन्ति । यथा निद्रानुगो निद्रानुवर्ती स्वप्नदृष्टपदार्थो निद्रापगमे वियुज्यते तथेति ॥ ५३ ॥ इत्थमिति ॥ इत्थं दृष्टादृष्टयोरनित्यतां परिमृशन् देहादिषु सर्वत्र निर्ममो निरहंकृतश्च सन् गृहेष्वतिथिवदुदासीनो निवसन् गृहैर्गृहकर्मभिर्न बध्येत किंतु स जीवन्मुक्त एव

सर्वस्वमृत्विजे दत्त्वा स्वप्राणे आत्मनि अग्नीनावेश्य परिव्रजेत् ॥ १३ ॥ विप्रस्येति ॥ दारादिरूपिणो दारादिद्वारा देवाः संन्यसतो विप्रस्य विघ्नान्कुर्वन्ति । अयं संन्यासी हि निश्चितमस्मानाक्रम्य उल्लङ्घ्य परं पदं समियात् गमिष्यतीतीर्ष्यया विघ्नान् कुर्वन्तीत्यर्थः । विघ्नानविगणय्य संन्यसेदेवेत्याशयः ॥ १४ ॥ प्रव्रजितस्य धर्मानाह—बिभृयाच्चेदिति ॥ परं कौपीनादन्यद्वासो यदि बिभृयात् धारयेत् तदा कौपीनमाच्छाद्यते यावता तावन्मात्रं धारयेत् । प्रैषोच्चारात्पूर्वं यत्सर्वं त्यक्तं तत्र दण्डपात्राभ्यामन्यत् किमपि अनापदि न बिभृयात् । अनापदीत्युक्त्यापत्सु देहनिर्वाहार्थं यत् किंचिदावश्यकं वस्त्रादि तद्बिभृयादिति सूचितम् ॥ १५ ॥ दृष्टीति ॥ दृष्टिपूतं दृष्ट्या सम्यङ् निरीक्ष्य विशुद्धे देशे पादं न्यसेत् । वस्त्रेण पूतं शोधितं जन्तुमलादिरहितं जलं पिबेत् । सत्येन पूतां वाचं वदेत् मनःपूतं मनसा सम्यग्विचार्य यच्छुद्धं तत्समाचरेत् ॥१६॥ मौनेति ॥ अङ्ग हे उद्धव मौनादयो वागादीनां दण्डाः मौनं वाचो दण्डः अनीहा काम्यकर्मत्यागो देहस्य अनिलायामः प्राणायामश्चेतसः । एते अन्तः त्रयो दण्डा यस्य न सन्ति स केवलं

**विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ॥ विघ्नान्कुर्वन्त्यय ह्यस्मानाक्रम्य समियात्परम् ॥१४॥ बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ॥**
**त्यक्तं न दण्डपात्राभ्यामन्यत्किंचिदनापदि ॥ १५ ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥ सत्यपूतां वदेद्वाचं मनः पूतं समाचरेत् ॥ १६ ॥**
**मौनाऽनीहानिलायामा दण्डा वाग्देहचेतसाम् ॥ न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद्यतिः ॥ १७ ॥ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्वर्जयंश्चरेत् ॥**
**सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥१८॥ बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ॥ विभज्य पावितं शेषं भुञ्जीताऽशेषमाहृतम्॥१९॥**
**एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ॥ आत्मक्रीड आत्मरत आत्मवान्समदर्शनः ॥ २० ॥**

धृतैर्वेणुभिर्यतिः संन्यासी न भवेत् संन्यासफलं नैव प्राप्नुयात् ॥ १७ ॥ भिक्षामिति ॥ चतुर्षु प्रतिग्रहाध्यापनयाजनशिलोञ्छलक्षणवृत्त्या चतुर्विधेषु वर्णेषु ब्राह्मणेष्वेव तत्रापि विगर्ह्यान् अभिशस्तपतितान् वर्जयेत् । तत्रापि असंक्लृप्तान् । अत्रायं लाभो भविष्यतीति पूर्वमनुद्दिष्टान् गृहान्प्रति भिक्षां चरेत्तावतैव लब्धेनान्नेन तुष्येच्च । मुख्या ब्राह्मणेष्वेव भिक्षा तदलाभे प्राणरक्षार्थं पूर्वपूर्ववर्णालाभे उत्तरोत्तरवर्णा ज्ञेयाः ॥ १८ ॥ बहिरिति ॥ ग्रामाद्बहिर्जलाशयं गत्वा तत्रोपस्पृश्य आचम्य वाग्यतः मौनी पावितं प्रोक्षणादिभिः शोधितं विभज्य विष्णुब्रह्मार्कभूतेभ्यः विभागं कृत्वा । याचितमिति तु पाठान्तरम् । तदानीं केनचित् याचितं चेत्तन्मध्ये तस्मै किंचिद्विभज्य दत्त्वा शेषमशेषमाहृतं सर्वं भुञ्जीत । अशेषमित्यधिकाहरणं निरस्तं भोजनपात्रेऽवशिष्टं न रक्षणीयमित्यर्थः ॥ १९ ॥ एक इति ॥ एकः असहायः निःसङ्गः संयतेन्द्रियः आत्मन्येव क्रीडा कौतुकं यस्य सः तस्मिन्नेव रतः सन्तुष्टः आत्मवान् धीरः समदर्शनश्च सन् एतां महीं चरेत् ॥ २० ॥

विविक्तेति ॥ विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः मयि भावेन विमल आशयोऽन्तःकरणं यस्य सः मुनिः मया सहाभेदेनात्मानमेकमेव चिन्तयेत् ॥ २१ ॥ अन्वीक्षेतेति ॥ ज्ञाननिष्ठया तत्वविचारेणात्मनो बन्धकारणं मोक्षकारणं चान्वीक्षेत पर्यालोचेत । तदेवाह । इन्द्रियाणां विक्षेपो विषयासक्तिर्बन्धहेतुः एषामिन्द्रियाणां विषयेभ्यः संयमो मोक्षहेतुरिति ॥ २२ ॥ तस्मादिति ॥ तस्मात् षण्णां समनस्कानां ज्ञानेन्द्रियाणां वर्गं नियम्य वशीकृत्य क्षुल्लकेभ्यः कामेभ्यो विषयेभ्यो विरक्तः सन् मुनिर्मद्भावेन मद्भक्त्यैवात्मनि अन्तःकरणे महत्सुखं लब्ध्वा विचरेत् ॥ २३ ॥ पुरेति ॥ पुराणि हट्टादिमन्ति ग्रामास्तद्रहिताः व्रजा गोष्ठानि तानि सार्थान् यात्रिकजनसमूहान् भिक्षार्थं प्रविशन् पुण्यदेशादिमतीं महीं चरेदिति सम्बन्धः ॥ २४ ॥ वानप्रस्थेति ॥ यतः शिलान्धसा शिलवृत्त्या प्राप्तेन तदीयेनान्नेन शुद्धसत्वः सन्निवृत्तमोह आशु संसिध्यति मुच्यते । अतो वानप्रस्थाश्रमेष्वेवाभीक्ष्णं पुनः पुनः भैक्षमाचरेत् ॥ २५ ॥ ननु मिष्टान्नं विहाय कथं शिलान्ने प्रवृत्तिस्तत्राह—नैतदिति ॥ एतत् परिदृश्यमानं मिष्टान्नादि

विविक्तक्षेमशरणो मद्भावविमलाशयः ॥ आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥ २१ ॥ अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ॥
बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ॥ विरक्तः क्षुल्लकामेभ्यो लब्ध्वात्मनि सुखं महत्
॥२३॥ पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥२४॥ वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्षमाचरेत् ॥
संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा ॥ २५ ॥ नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति ॥ आसक्तचित्तो विरमेदिहामुत्र चिकीर्षितात्
॥ २६ ॥ यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ॥ सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो
वाऽनपेक्षकः ॥ सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥ २८ ॥

गृहापत्यादि वा सर्वं परमार्थवस्तुतया न पश्येत् । यतस्तत्सर्वं विनश्यति अतस्तत्र असक्तचित्तः सन् इह लोकसम्बन्धिनः अमुत्र परलोकसम्बन्धिनः चिकीर्षितात् साधनतया कर्तुमिष्टाद्विरमेत् ॥ २६ ॥ यदेतदिति ॥ एतज्जगत् ममतास्पदं मनोवाक्प्राणैः संहितं सहितमहङ्कारास्पदं शरीरं च सर्वं तज्जन्यं सुखं च आत्मनि मायामात्रं स्वरूपावरणभूतयाऽविद्ययाऽध्यस्तमिति तर्केण स्वमदृष्टान्तेन निश्चित्य स्वस्थ आत्मनिष्ठः संस्तदध्यासं त्यक्त्वा पुनस्तन्न स्मरेत् न चिन्तयेत् ॥ २७ ॥ परिपक्वज्ञानिनो निष्कामभक्तस्य च वर्णाश्रमनियमाभावमाह—ज्ञानेति ॥ इहामुत्र विषयेषु विरक्तः अत एवानपेक्षः मोक्षापेक्षारहितः ज्ञाननिष्ठो वा मद्भक्तो वा यतोऽविधिगोचरः विधिनिषेधाधीनो न भवति शास्त्रस्य विषयासक्तविद्यावदधिकारिकत्वात् तस्मात्सलिङ्गान् त्रिदण्डादिसहितान् आश्रमान् तद्धर्मांश्च त्यक्त्वा तत्राग्रहं त्यक्त्वा यथासुखं विचरेत् । अत्रात्यन्तत्यागो न विवक्षितः । पुनर्द्धर्मविधानात् अक्रियस्योत्तराध्याये वक्ष्यमाणत्वाच्च । अविधिगोचरत्वमेवात्र पूर्वस्माद्विशेषः इति श्रीस्वामिपादाशयः॥ २८ ॥

कथं चरेत्तदाह—बुध इति ॥ बुधो विवेकवानपि बालकवन्मानापमानविवेकशून्यः क्रीडेत् । कुशलो निपुणोऽपि जडवत् फलानुसन्धानशून्यश्चरेत् । विद्वान् पण्डितोऽपि लोकरञ्जनाभावेन उन्मत्तवद्वदेत् । नैगमो वेदार्थज्ञोऽपि गोचर्याम् अनियताचारमिव कुर्यादन्यथा लोकैर्विमुक्तो न स्यादित्याशयः ॥ २९ ॥ वेदेति ॥ वेदे ये वादाः अक्षय्यफलप्रतिपादका अर्थवादास्तेषु रतः आसक्तो न स्यात् । पाखण्डी श्रुतिस्मृतिविरुद्धाचारवान्न स्यात् । हैतुकः केवलतर्कनिष्ठो न स्यात् । शुष्कवादे निष्प्रयोजनगोष्ठ्यां यो विवादस्तस्मिन् कंचिदपि पक्षं न समाश्रयेत् ॥ ३० ॥ नेति ॥ जनात् नोद्विजेत भयं न कुर्यात् । जनं च नोद्वेजयेत् भयं न दद्यात् किंतु धीरः वशीकृतान्तःकरणः सन् अतिवादान् निन्दावचनानि तितिक्षेत सहेत । देहमुद्दिश्य देहाभिमानं कृत्वा पशुवत् केनचिद्वैरं न कुर्यात् ॥ ३१ ॥ अत्र हेतुमाह—एक इति ॥ हि यस्मात्परो देहादिभिन्न एक एवात्मा भूतेषु देवमनुष्यादिदेहेषु तथा आत्मनि स्वस्मिंश्चावस्थितः यथोदकमात्रेष्वेक एव चन्द्रोऽवस्थितो भवति तथेति । अत आत्मदृष्ट्या वैरकारणं नास्ति तथा भूतानि शरीराण्यपि पाञ्चभौतिकत्वेनैकात्मकानि भवन्ति अतो देहदृष्ट्याऽपि वैरकारणं नास्ति तस्माद्वैरं न कुर्यादिति ॥ ३२ ॥ अलब्ध्वेति ॥ धृतिमान् सन् क्वचित् काले काले भोजनकाले अशनं भोजनम् अलब्ध्वा न विषीदेत । तदर्पः । लब्ध्वा च न हृष्येत् यतः उभयं लाभालाभात्मकं दैवतं त्रितं प्रारब्धाधीनम् ॥ ३३ ॥ अलं तर्हि भिक्षणेनापि तत्राह—आहारेति ॥ आहारमात्रार्थं समीहेतैव यतस्तस्य प्राणधारणं युक्तं सम्यक् यतस्तेन प्राणधारणेन तत्त्वं विचार्यते । तत्तत्त्वं विज्ञायैव विमुच्यते ॥ ३४ ॥ यदृच्छयेति ॥ श्रेष्ठमिष्टमुत अथवा अपरं निकृष्टं यदृच्छया प्रारब्धवशात् यदुपपन्नं प्राप्तं तदन्नमद्यात् तथा प्राप्तं प्राप्तं वासः तथा शय्यां च भजेत् ॥ ३५ ॥ शौचमिति ॥ यथाहमीश्वरो लीलयैव लोकशिक्षार्थं शौचादीनि करोमि तथा ज्ञानी ज्ञाननिष्ठोऽपि तदर्थमनासक्तस्तान् कुर्यात् न तु चोदनया विधिकिङ्करत्वेन तस्य ज्ञाननिष्ठाया विरोधित्वात् ॥ ३६ ॥

**बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत् ॥ २९ ॥ वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ॥ शुष्कवादविवादे न कंचित्पक्षं समाश्रयेत ॥ ३० ॥ नोद्विजेत जनाद्धीरो जनं नोद्वेजयेन्न तु ॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केन चित् ॥ ३१ ॥ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥ ३२ ॥ अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ॥ लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥ ३३ ॥ आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ॥ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥ ३४ ॥ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३५ ॥ शौचमाचमनं स्नानं न तु चोदनया चरेत् ॥ अन्यांश्च नियमाञ्ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३६ ॥**

तस्य ज्ञानपरिपाक एवाविधिगोचरत्वे कारणमित्याह—न हीति ॥ हि यस्मात् तस्य विकल्पो भेदस्तस्य आख्या ख्यातिः प्रतीतिर्नास्ति या च सा पूर्वमासीत् सापि मद्वीक्षया मम सर्वात्मत्वज्ञानेन हता आदेहान्तात् मरणपर्यन्तं क्वचित् आवश्यकदेहनिर्वाहकभिक्षाटनादौ या काचित् ख्यातिर्भेदप्रतीतिस्तस्य दृश्यते सा प्रारब्धवशाद्बाधिताऽनुवृत्तिमात्रं नाधिकारसंपादिका । ततो देहपातानन्तरं तु स मया सह संपद्यते एकीभवति मुक्तो भवति । "तस्य तावदेव चिरम्" इति श्रुतेः ॥ ३७॥ सम्यग्विदुषः कृत्यमुक्त्वा विविदिषोः कृत्यमाह—दुःखोदर्केष्विति ॥ दुःखमेवोदर्क उत्तरफलं येषां तेषु कामेषु जातनिर्वेद आत्मवान् बुद्धिमान् अजिज्ञासितो न शिक्षितो मद्धर्मो मत्प्राप्तिसाधनं येन सः तद्विज्ञानार्थं मुनिं मननशीलं गुरुमुपव्रजेत् ॥ ३८ ॥ तावदिति ॥ गुरौ भक्तः तत्र स्नेहवान् तद्वचने श्रद्धावान् अनसूयकः तत्र मनुष्यदृष्ट्या दोषदर्शनरहितः यावत्कालं ब्रह्म विजानीयात् तावन्मामेव मदृष्ट्यैव गुरुं परिचरेत् । जाते तु ज्ञाने एकश्चरेदित्याद्युक्तैर्धर्मैर्वर्तेतेत्याशयः॥ ३९॥ यस्त्विति ॥ यस्तु न संयतो न वशीकृतः षण्णां समनस्कानां ज्ञानेन्द्रियाणां वर्गो

न हि तस्य विकल्पाख्या या च मद्वीक्षया हता ॥ आदेहान्तात्क्वचित् ख्यातिस्ततः संपद्यते मया ॥ ३७ ॥ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ॥ अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ३९ ॥ यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४० ॥ सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥४१॥ भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ॥ गृहिणो भूतरक्षेज्या द्विजस्या-चार्यसेवनम् ॥ ४२ ॥ ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदम् ॥ गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥ ४३ ॥ इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते चिरात् ॥ ४४ ॥

येन सः तथा प्रचण्डो न शान्तः विषयेष्वासक्त इन्द्रियाणामश्वस्थानीयानां सारथिर्बुद्धिर्यस्य सः ज्ञानवैराग्याभ्यां रहितः केवलं त्रिदण्डमुपजीवति त्रिदण्डधारणेन पूज्यत्वं संपाद्य जीविकामेव संपादयति ॥४०॥ सुरानिति ॥ न विपक्वा न निवृत्ताः कषायाः रागादयो यस्य स धर्महा धर्मत्यागी यस्मात् यज्ञादित्यागात्सुरान् लज्जया भोगसंकोचात्स्वात्मानं ज्ञानाभावाचात्मस्थं मां च निह्नुते वञ्चयति तस्मात् अस्मादमुष्मात् परलोकाच्च हीयते उभयलोकफलाद् भ्रष्टो भवति ॥ ४१ ॥ भिक्षोरिति ॥ भिक्षोः संन्यासिनः शम इन्द्रियान्तःकरणनिग्रहः अहिंसा परपीडात्यागश्च मुख्यो धर्मः । वनौकसः वनवासिनः तपः शास्त्रविहितक्लेशसहनम् ईक्षा तत्वविमर्शश्च गृहस्थस्य भूतानां प्राणिनां रक्षा इज्या पञ्च महायज्ञाश्च द्विजस्य उपनीतस्य ब्रह्मचारिणः आचार्यसेवनं धर्मः ॥ ४२ ॥ ब्रह्मचर्यमिति ॥ ऋतौ गन्तुर्गृहस्थस्यापि ब्रह्मचर्यतप आदयश्च धर्मा भवन्ति । ब्रह्मचर्यं तु ऋतौ स्वभार्यागमनादन्यत्रैव मदुपासनं तु सर्वेषामेव प्राणिनां मुख्यो धर्मः ॥ ४३ ॥ इतीति ॥ नान्यस्मै प्रयोजनाय भजतीत्यनन्यभाक् अनन्यप्रयोजनः सन् यः इत्येवमुक्त-

प्रकारेण स्वधर्मेण मां नित्यं भजेत् मत्प्रीत्यर्थं धर्मानाचरेत् स सर्वभूतेषु मद्भावो मद्दर्शनं यस्य तथाभूतः सन्नचिरान्मद्भक्तिं विन्दते ॥ ४४ ॥ भक्त्येति ॥ हे उद्धव अनपा-यिन्या निरन्तरया भक्त्या सः सर्वलोकानां महेश्वरं सर्वस्य जगत उत्पत्तिरप्ययः प्रलयश्च यत्र तत् कारणरूपं ब्रह्मरूपम् । यद्वा । ब्रह्मणो वेदस्य कारणं मामुपयाति ॥४५॥ इतीति ॥ इत्येवं स्वधर्मेण निर्णिक्तं शुद्धं सत्वमन्तःकरणं यस्य सः निरवशेषेण ज्ञाता मद्गतिस्तत्वं येन स ज्ञानं शास्त्रीयं विज्ञानं मत्साक्षात्कारस्ताभ्यां संपन्नोऽचिरान्मां समुपैति प्राप्नोति ॥ ४६ ॥ वर्णेति ॥ य एष वर्णाश्रमवतामाचारलक्षणो धर्मः " कर्मणा पितृलोक " इति श्रुतेः । पितृलोकफलकोऽपि यदि मद्भक्तियुतो मदर्पणेन कृतस्तदा स एव परः सर्वसाधनश्रेष्ठः सन् निःश्रेयसकरः मोक्षफलको भवति ॥ ४७ ॥ एतदिति ॥ हे साधो यच्च मां भवान् पृच्छति स्म तत् यथा स्वधर्मसंयुक्तः पुमान् मद्भक्तः सन् परं परमेश्वरं मां समियात् प्राप्नुयात् एतत्ते तुभ्यं मयाऽभिहितं कथितम् ॥४८॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशाष्टदशेऽस्मिन् व्यधाद्गङ्गासहायकः ॥ १८ ॥ ऊनविंशे

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ४५ ॥ इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञानसंपन्नो न चिरात्समुपैति माम् ॥ ४६ ॥ वर्णाश्रमवतां धर्म एष आचारलक्षणः ॥ स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४७ ॥ एतत्तेऽभिहितं साधो भवान्पृच्छति यच्च माम् ॥ यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम् ॥ ४८ ॥ इति श्रीभागवते महापुराणे एकादश-स्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ श्रीभगवानुवाच ॥ यो विद्याश्रुतसंपन्न आत्मवान्नानुमानिकः ॥ मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्य-सेत् ॥ १ ॥ ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ॥ स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥ ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ॥ ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥

तु महिमा ज्ञानस्याथ यमादयः॥पृष्टा उत्तरिताश्चात्र श्लोकाः सार्द्धाः शरांब्धयः॥पञ्चोर्वोचेति पादाव्या समवेदाः अनुष्टुभः॥१९॥यस्यापरोक्षानुभवेन प्रपञ्चो लीनप्रायस्तस्य न किंचित् कृत्यमस्तीत्याह—य इति ॥ विद्याऽऽत्मानुभवस्तत्पर्यन्तेन श्रुतेन संपन्नः अत एवाऽत्मवान् प्राप्तात्मतत्त्वः नानुमानिकः केवलपरोक्षज्ञानवान् न भवति । आनुमानिक इति नकाररहितपाठे श्रुत्यनुकूलतर्कतो निर्णीतार्थः । य एवंभूतः स इदं द्वैतं तन्निवृत्तिसाधनं ज्ञानं च मायामात्रमिति ज्ञात्वा मयि संन्यसेत् । अयमेव विद्वत्संन्यासो नाम ॥ १ ॥ ज्ञानिन इति ॥ ज्ञानिनस्त्वहमेवेष्टः अपेक्षितः अहमेव स्वार्थः फलभूतः हेतुस्तत्साधनं च संमतः अतो मदृते मां विना तस्य स्वर्गः स्वर्गोपलक्षिताभ्युदयः अपवर्गो मोक्षोऽन्यो वा कश्चिदपि पदार्थो न प्रियः अतस्तस्य प्राप्यं कृत्यं वा न किंचिदस्तीत्यर्थः ॥ २ ॥ ज्ञानेति ॥ ज्ञानविज्ञानाभ्यां संसिद्धाः विशुद्धान्तःकरणा एवं मम श्रेष्ठमुत्तमं पदं स्वरूपं विदुः यतोऽसौ ज्ञानी ज्ञानेन मां बिभर्ति हृदि धारयत्यतोऽसौ मम प्रियतमः ॥ ३ ॥

तप इति ॥ या विशुद्धिर्ज्ञानस्य कलया लेशेनापि कृता भवति तां शुद्धिम् । सिद्धिमिति वा पाठः । तपस्तीर्थं जपो दानम् इतराणि पवित्राणि पावनानि स्नानादीनि च नालं कुर्वन्ति कर्तुं न शक्नुवन्ति ॥ ४ ॥ तस्मादिति ॥ तस्मात् ज्ञानेन सहितं तत्पर्यन्तं यथा भवति तथा स्वात्मानं ज्ञात्वा हे उद्धव ज्ञानविज्ञानसंपन्नो भक्त्या भावितः पूर्णश्च संस्त्वं मामेव भज अन्यत्सर्वं त्यजेत्यर्थः ॥ ५ ॥ ज्ञानेति ॥ ज्ञानविज्ञाने एव यज्ञस्तेनात्मनि स्वान्तःकरण एव मां सर्वयज्ञपतिं परमात्मानमिष्ट्वा ध्यात्वा मुनयो मामेव संसिद्धिं मोक्षरूपामगमन् प्रापुः ॥ ६ ॥ तदेव ज्ञानं सङ्क्षेपत उपदिशति—त्वयीति ॥ हे उद्धव योऽयं त्रिविधो देहेन्द्रियान्तःकरणरूपो विकारः प्रकृतिकार्यभूतस्त्वयि आश्रयति प्रतीयते स मायया अविद्यया स्वरूपावरणेनाध्यस्त एव प्रतीयते नतु परमार्थतोऽस्ति । यत् यस्मात् अन्तरा मध्ये एव पतति रज्जौ सर्पमालादिवत्प्रतीयते नाद्यपवर्गयोः आदावन्ते च स नास्ति । अतो यत् यदास्य देहादेरमी जन्मादयो विकाराः स्युस्तदा तस्य तदधिष्ठानभूतस्य ततोऽभिन्नस्य किं न किंचित् । यथा असतः सर्पादेराद्यन्तयोर्वर्तमानं यद्रज्ज्वाद्यस्ति

तपस्तीर्थं जपो दानं पवित्राणीतराणि च ॥ नाऽलं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥ ४ ॥ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ॥ ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावितः ॥ ५ ॥ ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि ॥ सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥६॥ त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायाऽन्तराऽऽपतति नाद्यपवर्गयोर्यत् ॥ जन्मादयोऽस्य यदमी तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥ उद्धव उवाच ॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम् ॥ आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम् ॥ ८ ॥ तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ॥ पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥ ९ ॥ दष्टं जनं संपतितं बिलेऽस्मिन् कालाहिना क्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनं कृपयाऽऽपवर्ग्यैर्वचोभिरासिञ्च महानुभाव ॥ १० ॥

तदेव मध्येऽपि सद्भवति अतो यथा सर्पादिगता विकारास्तदधिष्ठाने रज्ज्वादौ न भवन्ति तथा देहादिगता विकारास्त्वयि न भवन्तीति भावः । यद्वा । आद्यन्तयोर्यदस्ति तन्मध्येऽप्यस्त्येव न तस्य जन्मादयः सन्ति अतस्तत्त्वं निर्विकारं ब्रूहीति ॥ ७ ॥ ज्ञानादेर्विशेषं जिज्ञासुः पृच्छति—ज्ञानमिति ॥ हे विश्वेश्वर हे विश्वमूर्ते विशुद्धं विशुद्धिकरं वैराग्यविज्ञानाभ्यां युतं पुराणमनादिवेदसिद्धमेतत् ज्ञानं विपुलं विस्तृतं निश्चितं यथा भवति तथा आख्याहि । तथा महद्भिर्ब्रह्मादिभिर्विमृग्यं त्वद्भक्तियोगं चाख्याहि ॥८॥ तापेति ॥ हे ईश आधिदैवादितापत्रयेणाभिहतस्य अत एव घोरे भवाध्वनि संसारमार्गे संतप्यमानस्य जनस्य अमृतं परमानन्दमभिवर्षति तस्मात् तवाङ्घ्रिद्वन्द्वमेवातपत्रं तस्मादन्यच्छरणं न पश्यामि ॥ ९ ॥ दष्टमिति ॥ हे महानुभाव अस्मिन् बिले संसारकूपे पतितं तत्र च कालाहिना दष्टं ग्रस्तं क्षुद्रसुखेष्वेव उरुस्तर्षस्तृष्णा यस्य तमिति एनं जनं कृपया ततः समुद्धर आपवर्ग्यैर्मोक्षसाधनभूतैर्वागमृतैरासिञ्च बोधयेति ॥ १० ॥

इत्थमिति ॥ धर्मभृतां भगवद्धर्मपरायणानां मध्ये वरं श्रेष्ठं भीष्मं राजा अजातशत्रुः युधिष्ठिरो नोऽस्माकं सर्वेषां शृण्वतामेव सनामेनव त्वत्पृष्टमित्यमेव पप्रच्छ ॥ ११ ॥ निवृत्ते इति ॥ स्पष्टम् ॥ १२ ॥ तानिति ॥ देवव्रतस्य भीष्मस्य मुखाच्छ्रुतान् ज्ञानादिभिरुपबृंहितान्सहितान् तान् मोक्षधर्मान् ते तुभ्यमहमभिधास्यामि ॥ १३ ॥ तत्र ज्ञानमाह—नवेति ॥ प्रकृतिपुरुषमहदहङ्कारपञ्चतन्मात्राणि चेति नव पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि एकं मन इत्येकादश पञ्च महाभूतानि त्रयो गुणाश्च एतान् भावान् अष्टाविंशतितत्वानि भूतेषु ब्रह्मादिस्थावरान्तेषु कार्येष्वनुगतानि येन ज्ञानेनेक्षेत । अथ एष्वपि भावेषु एकं परमात्मतत्त्वमनुगतं येनेक्षेत कार्यकारणात्मकं जगत्पश्यन् परमकारणात्मकमेवैतन्न तु ततः पृथगिति येन पश्येत् तदेव ज्ञानमिति मया निश्चितम् ॥ १४ ॥ विज्ञानमाह—एतदेवेति ॥ यत् यदा येनैकेनानुगतानेकात्मकान् भावान् पूर्वमैक्षत तांस्तथा पूर्ववन्नेक्षेत किंतु तदेकं परमकारणं ब्रह्मैवेक्षेत । तदा एतदेव हि निश्चितं विज्ञानमपरोक्षज्ञानमुच्यते । अन्यस्य बाधितत्वात् । एतदुक्तं भवति । "परोक्षज्ञानेनापरोक्षभ्रमस्य

श्रीभगवानुवाच ॥ इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम् ॥ अजातशत्रुः प्रपच्छ सर्वेषां नोऽनुशृण्वताम् ॥ ११ ॥ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ॥ श्रुत्वा धर्मान् बहून् पश्चान्मोक्षधर्मानपृच्छत ॥ १२ ॥ तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥१३॥ नवैकादश पञ्च त्रीन्भावान्भूतेषु येन वै ॥ ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥१४॥ एतदेव हि विज्ञानं न तथैकेन येन यत् ॥ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनाम् ॥१५॥ आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥ श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ॥ १७ ॥

दिङ्मोहादिष्विव निवृत्त्यभावात्तदात्मकं जगत्पश्यन् तथात्मनः पृथक् सदिति मन्यते अपरोक्षज्ञाने तु बाधितमेव जीवन्मुक्तः संस्कारशेषं जगत्पश्यति अतः परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येते ।" उक्तं विज्ञानमेवोपपादयति त्रिगुणात्मनां सावयवानां भावानां देहादीनां स्थित्यादीन् पश्येत् विचारयेत् । भावा उत्पत्त्यादिमन्तः सावयवत्वाद् घटादिवत् इति पश्येदित्यर्थः ॥ १५ ॥ आदाविति ॥ आदौ उत्पत्तौ अन्ते परिणामान्तरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेन सृज्यात्सृज्यं कार्यान्तरं प्रति यद् अन्वियात् अनुगच्छेत् तत्प्रतिसंक्रमे तेषां प्रलये च यदवशिष्यते तदेव सत् परमार्थभूतमिति पश्येदित्यर्थः॥ १६॥ वैराग्यमाह—श्रुतिरिति॥ श्रुतिः शब्दः "नेह नानास्ति किंचन" इत्यादि प्रत्यक्षं पटादिकार्यं तन्त्वादिव्यतिरेकेण न दृश्यते चैतन्यव्यतिरेकेण च न किंचिद्दृश्यत इति प्रत्यक्षम् ऐतिह्यं महाजनप्रसिद्धिः अनुमानं च विमतं मिथ्या दृश्यत्वात् । शुक्तिरजतादिवदित्यादिष्वमाणेषु चतुष्टयं तेष्वनवस्थानात् नश्वरत्वेन निश्चयात् सर्वानुगतं सत्यमात्मतत्वं पश्यन् विकल्पं च मिथ्या जानन् स विवेकी विकल्पात्प्रपञ्चात् विरज्यते ॥ १७ ॥

कर्मणामिति ॥ कर्मणां स्वर्गादिजनकानां यज्ञादीनां परिणामित्वान्नश्वरत्वाद्धेतोः आविरिञ्चात् ब्रह्मलोकपर्यन्तमदृष्टमपि सुख दृष्टवदमङ्गलं दुःखमिश्रं नश्वरं च विवेकी पश्येत् ॥१८॥भक्तीति ॥ सकारणो भक्तियोगः पूर्वमुक्त एव तथापि प्रीयमाणाय तस्मिन् प्रीतिं प्राप्नुवते तुभ्यं मद्भक्तेः परं श्रेष्ठं कारणं पुनरपि कथयिष्यामि । एकवचनं सामान्याभिप्रायकम्॥१९॥ श्रद्धेति ॥ शश्वदिति सर्वत्रानुषज्यते । अमृततुल्यायां मत्कथायां श्रद्धा श्रवणादरः अनुकीर्तनं श्रवणानन्तरं मत्कथाव्याख्यानम् । पूजायां षोडशोपचारैः पूजने परिनिष्ठा आसक्तिः स्तुतिभिर्मम स्तवनम् ॥ २० ॥ आदर इति ॥ परिचर्यायां मन्दिरमार्जनादिक्रियायाम् अतो न पौनरुक्त्यम् । आदरः सर्वाङ्गैर्दण्डवत्पातितैः प्रणामः। स्पष्टमन्यत्॥२१॥ मदर्थेष्विति ॥ मदर्थेषु मदाराधनोपकरणतुलसीपुष्पाद्यर्जनकर्मसु अङ्गचेष्टा कायव्यापारः लौकिकव्यापारे प्रवृत्तेनापि वचसा मद्गुणानामीरणं कथनम् । अतः स्तुतिभिर्न पौनरुक्त्यम् । स्पष्टमन्यत् ॥ २२ ॥ मदिति ॥ मदर्थे मदाराधनार्थे अर्थपरित्यागः वित्तव्ययः । यद्वा । मद्भजनविरोधिनोऽर्थस्य परित्यागः एव तद्विरोधिनो भोगस्य-

कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम् ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ॥ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥ श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ॥ परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २० ॥ आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ॥ मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥२१॥ मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ॥ मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ॥ इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥ २३ ॥ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥२४॥ यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम् ॥ धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २५ ॥ यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति॥रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥

तत्साधनस्य स्रक्चन्दनादेः सुखस्य च परित्यागः इष्टं यागादि वैदिकं कर्म दत्तं दानं हुतं होमः जप्तम् । व्रतमेकादश्युपवासादि । इडभाव आर्षः । व्याकरणान्तरे जपमित्यपि । तपः अन्यदपि शास्त्रीयं कायक्लेशादिकमेतत्सर्वं मत्प्रीत्यर्थं कृतं मद्भक्तेः कारणं भवतीत्यर्थः ॥ २३ ॥ एवमिति ॥ हे उद्धव एवमुक्तविधैः श्रवणादिधर्मैः सहात्मनि वेदिनाम् आत्मा देहेन्द्रियादयस्तदनुबन्धिपुत्रादयश्च तेषां निवेदनं मत्सेवासाधनतया स्थापनम्।तत्कर्तॄणां मनुष्याणां मयि फलभूता परमप्रेमलक्षणा भक्तिः संजायते ततोऽस्य भक्तस्यान्यः कोऽर्थः साधनरूपः फलरूपो वावशिष्यते सर्वोऽपि स्वत एव पूर्णो भवतीत्यर्थः ॥२४॥ यदेति ॥ सत्त्वेनोपबृंहितं युक्तम् अतएव शान्तं चित्तं यदात्मनि मय्यर्पितम् । आसक्तं भवति तदा पुमान् धर्मज्ञानादीन् प्राप्नोत्येव ॥ २५ ॥ यदिति॥यत् यदा तच्चित्तं रजस्वलं रजोगुणव्याप्तमिन्द्रियैर्विकल्पे विषये देहगृहादावर्पितमतः असन्निष्ठं ततस्ततो विषयेषु परिधावति तदा तस्य विपर्ययमधर्मादिकं भवतीति विद्धि ॥ २६ ॥

स्वाभिप्रेतान् धर्मादीन् व्याचष्टे—धर्म इति ॥ यो मद्भक्तिकृत्स धर्मः प्रोक्तः शास्त्रेषु प्रकृष्ट उक्तः। एवं यत् ऐकात्म्यदर्शनं सर्वत्राभेदबुद्धिः तज्ज्ञानम् गुणेषु विषयेष्वसङ्गः अनासक्तिरेव वैराग्यम् अणिमादयश्च ऐश्वर्यम्॥२७॥धर्मादीनां विलक्षणं लक्षणं श्रुत्वा यमादीनामपि स्वरूपतः संख्यातश्च वैलक्षण्यं सम्भाव्य पृच्छति—यम इति॥ स्पष्टम् ॥२८॥ किमिति ॥ इष्टमभ्यर्हितं धनं च किम् । स्फुटमन्यत् ॥ २९ ॥ पुंस इति ॥ हे श्रीमन् हे केशव परेति विद्यादीनां विशेषणम् । श्रीर्मण्डनम् ॥ स्फुटमन्यत् ॥ ३० ॥ क इति॥ स्फुटम् ॥ ३१ ॥ क इति ॥ हे सतांपते प्रश्नान् पृष्टार्थान् विपरीतान् अशमादीन् पृष्टार्थानामेतेषामुक्त्यैव एतद्विपरीता अनुक्ता अपि मया ज्ञास्यन्त इति भावः । स्फुटमन्यत् ॥ ३२ ॥ यमानाह—अहिंसेति ॥ अहिंसा परपीडावर्जनम् । सत्यं हितप्रिययथार्थभाषणम् । अस्तेयं मनसाऽपि परस्वग्रहणसंकल्पराहित्यम् । असङ्गः क्वाप्यासक्तिराहित्यम् ह्रीस्वरूपं स्वयमेव वक्ष्यति । असञ्चयः अपरिग्रहः आस्तिक्यं शास्त्रोक्ते विश्वासः ब्रह्मचर्यं स्त्रीसंबन्धराहित्यम् । मौनं वृथालापराहित्यं स्थैर्यं धर्मे सत्यसंकल्पत्वम् । क्षमाऽपराधेऽपि क्रोधाभावः । अभयं भयराहित्यम् ॥ ३३ ॥ नियमानाह—शौचमिति ॥ शौचं बाह्याभ्यन्तरभेदेन द्वयम् । अतो द्वादश नियमाः । तत्र बाह्यं मृज्जलादिभिर्देहस्य आभ्यन्तरं कर्मस्वसक्तिभगवच्चिन्तनादिभिरन्तःकरणस्य जपो गायत्र्यादेः श्रद्धा सच्छास्त्रोक्ते आदरः आतिथ्यमतिथिसत्कारः । स्फुटमन्यत् ॥ ३४ ॥ एतदिति॥हे तात एते उभयोः श्लोकयोः प्रवृत्तिनिवृत्तिमार्गयोर्वा द्वादश नियमेन सहिता यमाः स्मृताः । अत्र मुमुक्षोर्यमाः मुख्याः सकामस्य नियमा मुख्याः एते उपासिताः अनुष्ठिताः सन्तः पुंसां यथाकामं कामनानुसारेण मोक्षाभ्युदयादिफलं दुहन्ति पूरयन्ति ॥ ३५ ॥

धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ॥ गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः॥२७॥उद्धव उवाच ॥ यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ॥ कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥२८॥किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते ॥ कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा ॥ २९ ॥ पुंसः किंस्विद् बलं श्रीमन् भगो लाभश्च केशव ॥ का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ॥ ३० ॥ कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ॥३१॥ क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ एतान् प्रश्नान् मम ब्रूहि विपरीतांश्च सत्पते ॥ ३२ ॥ श्रीभगवानुवाच ॥ अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः ॥ आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥३३॥ शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ॥ तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३४ ॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः ॥ पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥ ३५ ॥

मुमुक्षोरुपादेयान् शमादीन् हेयांश्च दुःखादीन् प्रसिद्धेभ्यो वैलक्षण्येन लक्षयति—शम इति ॥ शमादिभिरेव तद्विपरीता अशमादयोऽप्युन्नेयाः। बुद्धेर्या मन्निष्ठता सा शमः न तु शान्तिमात्रम्। इन्द्रियाणां संयमः वशीकृत्य विषयेभ्यो निवर्त्तनमेव दमः न चौरादिदमनमात्रम्। विहितदुःखस्य संमर्षः सहनमेव तितिक्षा न भारादेः सहनमात्रम्। जिह्वोपस्थयोर्वेगधारणं धृतिः न त्वनुद्वेगमात्रम् ॥ ३६ ॥ दण्डेति ॥ दण्डो भूतद्रोहस्तस्य न्यासस्त्याग एव परं दानं नतु धनार्पणमात्रम्। कामत्यागो भोगानपेक्षैव तपः न कृच्छ्रादिस्वभावो वासना तस्य विजयः। प्रतिबन्ध एव शौर्यं न तु बाह्यविजयमात्रम्। समं ब्रह्म तस्य दर्शनमालोचनमेव सत्यविषयत्वात्सत्यं न तु यथार्थभाषणमात्रम् ॥ ३७ ॥ ऋतमिति ॥ सत्यस्यैवावान्तरभेद ऋतं तच्च सूनृता वाणी हितप्रिययथार्थविषया वाक् एतेन सत्यभूतनिन्दाया निवृत्तिः तस्याः सूनृतत्वाभावात् कर्मसु लौकिकालौकिकव्यापारेष्वसङ्गः कर्तृत्वाभिमानराहित्यमेव शौचं न तु स्नानादिना मलनिराकरणमात्रम्। पूर्वमपृष्टस्यापि शौचस्य लक्षणम्। "अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः।" इति न्यायात्। एवं "भगो म ऐश्वरो भाव" इत्यत्रापि संन्यासः। इहामुत्र सर्वक्रियाफलत्यागः कलत्रादौ ममतात्यागो वा त्यागः न गृहादित्यागमात्रम् ॥ ३८ ॥ धर्म इति ॥ नृणामिष्टं परमार्थं

शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ॥ तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥ ३६ ॥ दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ॥
स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३७॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ॥ कर्मस्वसङ्गमः शौचं त्यागः संन्यास उच्यते
॥३८॥ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ॥ दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥३९॥ भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः॥
विद्यात्मनि भिदाबाधो जुगुप्साह्रीरकर्मसु ॥ ४० ॥ श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः ॥ दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित्
॥ ४१ ॥ मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः ॥ उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४२ ॥

धनं धर्म एव नतु वित्तपश्वादिमात्रम्। भगवत्तमः पूर्णज्ञानादिमानहमेव यज्ञः मद्बुद्ध्या यज्ञोऽनुष्ठेयो न क्रियाबुद्ध्येत्यर्थः। यज्ञार्थं दानं दक्षिणा सा च ज्ञानोपदेशः न हिरण्यादिदानमात्रम्। यतो ज्ञानोपदेशेन यज्ञरूपं मां प्राप्नोति। दुर्दमदमनं हि बलं प्रसिद्धं तच्च मनोदमनहेतुत्वात् प्राणायाम एव न तु शारीरमात्रम्। दया लोकप्रसिद्धत्वान्नोक्ता ॥ ३९ ॥ भग इति ॥ भगो भाग्यं तच्च मे ऐश्वरो भावो मदीयमैश्वर्यादिषाड्गुण्यं न तु दैवानुकूल्यमात्रम्। उत्तमो लाभस्तु मद्भक्तिरेव नतु पुत्रादिमात्रम्। विद्या चात्मनि प्रतीताया भिदाया भेदस्य बाधो नतु ज्ञानमात्रम्। अकर्मसु निषिद्धकर्मसु जुगुप्सा हेयत्वबुद्धिः ह्रीः न तु तत् कृत्वा लज्जामात्रम् ॥ ४० ॥ श्रीरिति ॥ नैरपेक्ष्याद्याः गुणा एव श्रीर्मण्डनं न तु किरीटादिः। दुःखसुखयोरत्ययः अतिक्रमः अननुसन्धानमेव सुखं नतु भोगः। कामा विषयास्तद्भोगजन्यसुखापेक्षैव दुःखं नाग्निदाहादिमात्रम्। बन्धं मोक्षं च यो वेत्ति स एव पण्डितः न केवलशास्त्राभ्यासी ॥ ४१ ॥ मूर्ख इति ॥ देहगेहादिष्वहंममाभिमानवान् मूर्खः मन्निगमो मां नितरां गमयति प्रापयति यो निवृत्तिमार्गः स एव

पन्थाः सन्मार्गः न तु कण्टकादिशून्यः । चित्तविक्षेपः प्रवृत्तिमार्ग एव उत्पथः कुमार्गो न तु चौराद्याकुलः । सत्वगुणस्योदयः उद्रेक एव स्वर्गः नेन्द्रादिलोकः ॥ ४२॥ नरक इति ॥ तमस उन्नाह उद्रेक एव नरकः न तामिस्रादिः । हे सखे गुरुरेव बन्धुः न भ्रात्रादिः । स चाहमेव मद्बुद्ध्योपास्य इत्यर्थः । स साधनं भोगायतनं हि गृहं तच्च मानुष्यं मानुषरूपं शरीरमेव नतु हर्म्यादि। गुणैर्विवेकधैर्यादिभिराढ्यो युक्त एव आढ्य उच्यते न तु धनादिमात्रयुक्तः ॥ ४३ ॥ दरिद्र इति ॥ यस्तु विषयेष्वसन्तुष्टः स एव दरिद्रो न निःस्वः । यो ह्यजितेन्द्रियः स एव कृपणः शोच्यः न तु दीनः । गुणेषु विषयेषु आसक्तधीरनासक्तबुद्धिरेवेशः स्वतन्त्रः न राजादिः । गुणेषु सङ्गो यस्य स विपर्ययः अनीश इत्यर्थः । एतच्च शमादिविपर्ययो न लक्षणार्थम् ॥४४॥ एत इति ॥ हे उद्धव ते तव एते प्रश्नाः पृष्टा अर्थाः साधु यथा भवति तथा मोक्षोपयोगितया निरूपिताः । एतच्च सर्वं त्वया गुणदोषयोर्विवेकार्थमेव पृष्टम् । तत्र बहुना वर्णितेन किं प्रयोजनम् । गुणदोषयोर्दृशिर्दर्शनमेव दोषः । गुणस्तु तदुभयदर्शनवर्जितः स्वभाव एवेति ॥४५॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्योनविंशे व्यधाद्गङ्गासहायकः ॥१९॥ विंशे तु वर्णिता योगा भक्तिज्ञानक्रियात्मकाः ॥ गुणदोषव्यवस्था च सार्द्धाः श्लोका नगाग्नयः॥ [३७॥]

नरकस्तम उन्नाहो बन्धुर्गुरुरहं सखे ॥ गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥४३॥ दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ॥ गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्ययः ॥ ४४ ॥ एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ किं वर्णितेन बहुना लक्षणं गुणदोषयोः ॥ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥४५॥ इति श्रीभागवत एकादशस्कन्धे भगवदुद्धवसंवाद एकोनविंशोऽध्यायः ॥ १९ ॥ उद्धव उवाच ॥ विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ॥ अवेक्षतेऽरविन्दाक्ष गुणं दोषं च कर्मणाम् ॥ १ ॥ वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥ २ ॥ गुणदोषभिदादृष्टिमन्तरेण वचस्तव ॥ निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥ ३ ॥

उवाचद्वितयं प्रोक्तमष्टत्रिंशदनुष्टुभः॥२०॥ गुणदोषदृशिर्दोष इत्युक्तमाक्षिपति–विधिश्चेति॥ हे अरविन्दाक्ष विधिश्च प्रतिषेधश्चेश्वरस्य तव निगम आज्ञारूपो वेदः स च विधेयानां प्रतिषेध्यानां च कर्मणां गुणं दोषं च पुण्यपापात्मकं फलमवेक्षते प्रतिपादयति ॥ १ ॥ वर्णेति ॥ तत्रोत्तमाधमभावेन तदधिकारिणां वर्णानामाश्रमाणां च विकल्पं भेदं च गुणदोषमवेक्षते । तथा प्रतिलोमानुलोमानुलोमजं च गुणदोषमवेक्षते । तत्र प्रतिलोमजाः उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः । अनुलोमजास्तूत्तमवर्णेभ्यः पुरुषेभ्यो हीनवर्णासु स्त्रीषु जाताः मूर्द्धावसिक्ताम्बष्ठकादयः । तेषां च "असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः।" इति गुणदोषौ । तथा द्रव्यादीन् कर्मार्हतानर्हताभ्यां तथा स्वर्गं नरकं च तत्फलतया गुणदोषरूपमवेक्षते । एतच्चोत्तराध्याये प्रपञ्चयिष्यते ॥ २ ॥ उक्तं प्रकृते योजयति–गुणदोषेति ॥ निषेधश्च विधिश्चेति लक्षणं स्वरूपं यस्य तत्तव वचः वेदरूपं वाक्यं गुणदोषभिदा दृष्टिमन्तरेण अयं विहितत्वाद्गुणः अयं निषिद्धत्वाद्दोषः इति या भिदादृष्टिर्भेददर्शनं तामन्तरेण तां विना नृणां निःश्रेयसं कथं पुरुषार्थ-

साधनं कथं भवेत् ॥३॥ पित्रिति ॥ हे ईश्वर प्रत्यक्षादिभिरनुपलब्धे अनवगतेऽर्थे स्वर्गमोक्षादौ तथा साध्यसाधनयोः इदमस्य साध्यमिदमस्य साधनमित्यत्रापि तव वचरूपो वेद एव पित्रादीनां श्रेयः श्रेष्ठं चक्षुः चक्षुर्वज्ज्ञापकम् । तथा च वेदस्य तदवबोधकत्वे केषामपि तद्बोध एव न स्यादित्याशयः ॥ ४ ॥ गुणेति ॥ पूर्वोक्तप्रकारेण विधिनिषेधकात् ते तव निगमात् वेदरूपवचनादेव गुणदोषभिदादृष्टिः विहिताऽभूत् । न हि स्वतः यस्मादर्थप्राप्तत्वेन निवर्त्तेत पुनस्तव निगमने वचनेनैव तद्भिदाया अपवादश्चेति श्रुत्वाऽऽह । स्फुटं मे भ्रमो भवति तं निवर्त्तयेति शेषः ॥५॥ अधिकारिभेदेनाविरोधं वक्तुं प्रथमं योगत्रयमाह—योगा इति ॥ नृणां श्रेयोविधित्सया मोक्षसाधनेच्छया मया ज्ञानादिकाः त्रयो योगा उपायाः ब्रह्मकर्मदेवताकाण्डैः प्रोक्ताः । कर्मात्र निष्कामम् । एभ्योऽन्यः उपायः कुत्रचिदपि शास्त्रे नास्ति । एतेन काम्यकर्मादिकं व्यावर्तयति । तपोऽष्टाङ्गयोगादेर्यथासम्भवं ज्ञानभक्त्योरेवान्तर्भाव इति भावः ॥६॥ निर्विण्णानामिति ॥ इह एषां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत्फलेषु विरक्तानामत एव तत्साधनभूतकर्मन्यासिनां ज्ञानयोगः सिद्धिद इत्युत्तरेणान्वयः । तेषु कर्मस्वनिर्विण्णचित्तानां दुःखबुद्धिशून्यानामत एव कामिनां तत्फलेष्वविरक्तानां तु कर्मयोग एव सिद्धिदः फलदः ॥ ७ ॥

पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥४॥ गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः ॥ निगमेनापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥ श्रीभगवानुवाच ॥ योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ॥ ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ॥ तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥७॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥ न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥ तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥

यदृच्छयेति ॥ यः पुमान् यदृच्छया केनापि भाग्योदयेन मम कथाश्रवणकीर्त्तनादिभक्तिभेदेषु जातश्रद्धः उत्पन्नादरः विषयान्न निर्विण्णो न च तत्रातिसक्तस्तस्यास्य भक्तियोगः पुरुषार्थप्रदः । अत्र निर्विण्णत्वे ज्ञानेऽधिकारः अत्यासक्तत्वे कर्मण्यधिकारः अत्यासक्तिराहित्ये भक्तावधिकार इति विवेकः । तत्र निर्वेदस्य कारणं निष्कामकर्महेतुकान्तःकरणशुद्धिरेव अत्यासक्तेः कारणमनाद्यविद्या अत्यासक्तिराहित्यस्य कारणं यादृच्छिकसत्सङ्ग एवेति । तत्र काम्यकर्मसु प्रवर्त्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति । निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति स च ज्ञानभक्तियोगाधिकारात्प्रागेव तदधिकृतयोस्तु स्वल्पः तत्सिद्धानां तु न किंचित् ॥ ८ ॥ कर्मयोगावधिमाह—तावदिति ॥ यावता यावत् न निर्विद्येत विरक्तो न भवेत् ज्ञानयोगयोग्यो न भवेत् अथवा यावत् मत्कथाश्रवणादौ श्रद्धा न जायते यावदधिकारी भक्तिमार्गे प्रवृत्तो न भवेत् तावत् कर्माणि नित्यनैमित्तिकानि कुर्वीत ॥ ९ ॥

कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह—स्वेति ॥ हे उद्धव अनाशीः कामः फलकामनारहितः स्वधर्मस्थो यज्ञैर्यजन्मामाराधयन् यद्यन्यत् निषिद्धं न समाचरेत् तदा स्वर्गनरकौ न याति । नरकयानं हि द्वेधा भवति । विहितातिक्रमाद्वा निषिद्धाचरणाद्वा । तत्र स्वधर्मसत्वान्निषिद्धवर्जनाच्च नरकं न याति निष्कामत्वात्स्वर्गमपि न यातीत्यर्थः ॥ १० ॥ अस्मिन्निति ॥ किं त्वस्मिँल्लोकेऽस्मिन् देहे एव वर्तमानः अनघः निषिद्धत्यागी अत एव शुचिः निवृत्तरागादिमलः पुमान् यदृच्छया अनायासेनैव विशुद्धमात्मसाक्षात्कारात्मकं ज्ञानं मद्भक्तिं वा प्राप्नोति । यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति ॥ ११ ॥ स्वर्गिणोऽपीति ॥ निरयिण इति दृष्टान्तार्थम् । तथा च यथा निरयिणो नारका एतं लोकं मनुष्यदेहमिच्छन्ति तथा स्वर्गिणोऽप्येतमिच्छन्ति । यत इदं शरीरं ज्ञानभक्तिभ्यां मुक्तिसाधकम् । यद्वा । तृतीया षष्ठ्यर्थे । ज्ञानभक्त्योः साधकम् । तदुभयं स्वर्गिनारकिशरीरं तयोर्ज्ञानभक्त्योरसाधकमिति ॥ १२ ॥ नेति ॥ अतो विचक्षणो विवेकी नरः । वा इति इवार्थे । नारकीमिव । यथा नारकीं न काङ्क्षति तथा स्वर्गतिं न

स्वधर्मस्थो यजन् यज्ञैरनाशीः काम उद्धव ॥ न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥१०॥ अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः॥
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥ स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ॥ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम्
॥ १२ ॥ न नरः स्वर्गतिं काङ्क्षेन्नारकीं वा विचक्षणः ॥ नेमं लोकं च काङ्क्षेत देहाऽऽवेशात्प्रमाद्यति ॥ १३ ॥ एतद् विद्वान् पुरा मृत्योरभवाय
घटेत सः ॥ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ॥ खगः स्वकेतमुत्सृज्य क्षेमं याति
ह्यलम्पटः ॥ १५ ॥ अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ॥ मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥ नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम् ॥ मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा ॥ १७ ॥

काङ्क्षेत् । यद्वा । उभयसाधकानि काम्यानि निषिद्धानि वा कर्माणि न कुर्यादित्यर्थः । अतिश्रेष्ठत्वात्पुनरपि मनुष्यो भवेयमिति इमं मनुष्यलोकमपि न काङ्क्षेत् । यतो देहावेशात् देहादावहंममाध्यासात् प्रमाद्यति स्वरूपानुसन्धानरहितो भवति ॥ १३ ॥ एतदिति ॥ अपि तु एतच्छरीरसम्बन्धस्यानर्थहेतुत्वं विद्वान् जानन् स विवेकी इदं प्राप्तं शरीरमर्थसिद्धिदं पुरुषार्थप्राप्तिसाधनमपि मर्त्यं मरणशीलं ज्ञात्वा मृत्योः पुरा समर्थावस्थायामेव अप्रमत्तः सावधानः सन्नभवाय मोक्षाय घटेत यत्नं कुर्यात् ॥ १४ ॥ छिद्यमानमिति ॥ यथा कृतं नीडं यस्मिंस्तं स्वकेतं स्वाश्रयं वनस्पतिं यमैर्यमवन्निर्दयैरेतैः पुरुषैः छिद्यमानं दृष्ट्वा तत्रालम्पटः अनासक्तः खगस्तमुत्सृज्य क्षेमं सुखं याति ॥१५॥ अहोरात्रैरिति ॥ तथा अहोरात्रैः कालांशैः छिद्यमानम् आयुर्बुद्ध्वा भयेन वेपथुः कम्पो यस्य सः मुक्तसङ्गः अनासक्तः सन् परं परमात्मानं बुद्ध्वा निरीहः सन्नुपशाम्यति ॥ १६ ॥ नृदेहमिति ॥ आद्यं सर्वफलमूलं तदुपार्जितसाधनैरेव सर्वफलप्राप्तेः सुदुर्लभमुपायकोटिभिरपि प्राप्तुमशक्यं तथापि सुलभमकस्माल्लब्धत्वात् सुकल्पं सर्वसाधनक्षमं गुरुः साश्रि-

तमात्र एव कर्णधारो यस्य तम् । मया स्मृतमात्रेणेश्वरेणानुकूलमारुतेन प्रेरितं प्रापितं नृदेहं प्लवं नावं लब्ध्वेति शेषः । यो भवाब्धिं संसारसागरं न तरेत् स आत्महा आत्मानमेव दुःखसागरे न्यमज्जयदिति ॥ १७ ॥ एवमविरक्तस्य कर्मयोगमुक्त्वा विरक्तस्य ज्ञानयोगं वदन् ज्ञानप्राप्तेः पूर्वं किंचित्कृत्यं वर्जनीयं चाह—यदेति ॥ यदा त्वारम्भेषु कर्मसु निर्विण्णः दुःखदर्शनेनोद्विग्नस्तत्फलेषु विरक्तश्च तदायं योगी संयतेन्द्रियः सन् प्राणायामाद्यभ्यासेनात्मनः स्वस्य मनः । यद्वा । आत्मनोऽभ्यासेन आत्मविषयवृत्तिसन्तत्या अचलं यथा तथा धारयेन्मयीति शेषः ॥ १८ ॥ धार्यमाणमिति ॥ मयि धार्यमाणमपि मनो यर्हि पूर्वमेवात्यन्तधारणासंभवात् आश्वेव भ्राम्यत् विषयान्तरं प्रति गच्छत् अनवस्थितं स्यात्तदा अतन्द्रितः अनलसः प्रयत्नवान् सन् अनुरोधेन मार्गेण किंचित्तदपेक्षापूरणद्वारेण शनैरात्मनो वशं नयेत् ॥ १९ ॥ ननु तर्हि यथापूर्वमेव स्यात्तत्राह—मन इति ॥ सर्वथा मनोगतिं नैव विसृजेत् नोपेक्षेत किंतु जितप्राणो जितेन्द्रियश्च सन् सत्वगुणसंपन्नया बुद्ध्या मन आत्मवशं नयेत् । मयि धारयेदित्यर्थः ॥ २० ॥ अनुरोधमार्गं सदृष्टान्तं स्तौति—एष इति ॥ एषः अनुवृत्तिमार्गेण मनसः सङ्ग्रह एव परमो योगः स्मृतः योगसाधनत्वात् उपचारेण स्तुतिः । तत्र दृष्टान्तः । यथा अश्वचारकः

यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ॥ अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥ धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ॥ अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥ मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ॥ सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥ एष वै परमो योगो मनसः संग्रहः स्मृतः ॥ हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥ २१ ॥ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ॥ मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ॥ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥

अदान्तस्य दम्यस्य दमनीयस्यार्वतोऽश्वस्य हृदयज्ञत्वं स्वमनोऽभिप्रायानुसारगतिमान्विच्छन् अपेक्षमाणः शनैः शनैः पुनः पुनस्तमनुसरन्नेव शिक्षयति कदाचित्तं धावन्तं च रश्मिना धृत्वैव गच्छति न तु सर्वथोपेक्षते तथा किंचित्तदनुरोधं कुर्वन्नेव मनो वशं नयेदित्यर्थः ॥ २१ ॥ एवमीषद्वशीकृतस्य मनसोऽत्यन्तनैश्चल्योपायमाह—साङ्ख्येनेति ॥ यावन्मनः प्रसीदति निश्चलं भवति तावदनु निरन्तरं साङ्ख्येन तत्वविवेकेन सर्वभावानां महदादिदेहान्तानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं च ध्यायेत् ॥ २२ ॥ निर्विण्णस्येति ॥ नानाविधव्यापारेणोद्विग्नस्य तत्फलेषु विरक्तस्य च उक्तवेदिनः गुरूपदिष्टार्थालोचकस्य पुरुषस्य तस्यैव गुरूपदिष्टार्थस्य चिन्तितस्य तत्त्वस्यानुचिन्तया मनोदौरात्म्यं विषयासक्तिं त्यजतीत्यन्वयः ॥ २३ ॥ यमेति ॥ यमादिभिर्यमनियमासनादिभिर्योगमार्गैः आन्वीक्षिक्या तत्वविमर्शात्मिकया विद्यया च ममार्चायाः श्रीमूर्तेः उपासनाभिर्ध्यानादिभिर्वा उपायैर्मनोध्यानयोग्यं मां परमात्मानं स्मरेत् । नान्यैरुपायैः अतोऽन्यमुपायं न कुर्यादित्यर्थः । वाशब्देनास्य पक्षस्य स्वातन्त्र्यं

दर्शयति ॥ २४ ॥ यदिति ॥ यद्यपि योगिनः पापाचरणं नैव संभवति तथापि कदाचित् यदि प्रमादेन योगी विगर्हितं निषिद्धं कर्म कुर्यात्तदा तदंहः पापं योगेन ज्ञानाभ्यासेनैव मद्ध्यानेनैव वा दहेत् । अतस्तत्र पापसंभावनायामन्यत्कृच्छ्रादि प्रायश्चित्तं कदाचनापि न कुर्यादित्यर्थः । योगेनेति नामसंकीर्तनज्ञानादेरप्युपलक्षणम् ॥ २५ ॥ ननु कृच्छ्रादिभिः पापनिवर्त्तने को दोष इति चेत्तत्राह—स्वे स्वे इति सार्द्धम् ॥ तत्र स्वे स्वेऽधिकारे भक्तस्य भक्तौ योगिनो योगे चेत्यादिर्या निष्ठा स्थितिः स एव गुणः न त्वितरः एतेन स्वस्वाधिकारविरुद्धा निष्ठा दोषः इत्यर्थादुक्तम् । कर्मणां स्वाभाविकप्रवृत्तिरूपाणां जात्या उत्पत्त्यैवाशुद्धानामनर्थमूलानामनेन गुणदोषविधानेन नियमः सङ्कोचः कृतः । स च सङ्गानां विषयासक्तीनां त्याजनेच्छया । अयं भावः । पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्यास्ति स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् । न च सहसा सर्वतो निवृत्तिः कर्तुं शक्यते । अत इदं न कर्त्तव्यमिदमेव कर्त्तव्यमित्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते । वेदस्य निवृत्तिपरत्वम् उत्तराध्याये " उत्पत्त्यैव हि कामेषु " इत्यादिना वक्ष्यते । अतो योगिनः स्वाभाविकप्रवृत्त्यभावान्न प्रायश्चित्तादिविधिगोचरता । किंच ज्ञानिनो ज्ञानेन भक्तस्य भक्त्या च यदि पापं न नश्येत्तदा तेन तेन पापनाशार्थं

यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥ योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ॥ कर्मणां जात्यशुद्धानामनेन नियमः कृतः ॥ गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥ २६ ॥ जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ॥ वेद दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः ॥ २७ ॥ ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥ प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ॥ कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥ २९ ॥

प्रायश्चित्तमनुष्ठीयेत । ज्ञानभक्त्योः सर्वपापनाशकत्वं सर्वशास्त्रसिद्धमतः पराधिकारगतकृच्छ्रादि तेन तेन कुतोऽनुष्ठेयम् । कृच्छ्राद्यनुष्ठाने च स्वधर्मनिष्ठापरित्यागः परधर्मप्रसक्तिश्च स्यात् । वस्तुतो ज्ञानिभक्तयोः पापे प्रवृत्तिरेव न स्यात् । यदि दैवात्स्यात्तदपि ज्ञानभक्तियोगयोर्जात्यैव परमशोधकत्वात्ताभ्यामेव स्वत एव पापक्षय इत्यतो गुणदोषमयविधिप्रतिषेधाधिकारमध्यपातित्वं ज्ञानिभक्तयोः प्रायेण नोक्तम् ॥ २६ ॥ भक्त्यधिकारिणो भक्तियोगमाह—जातश्रद्ध इति युग्मम् ॥ यस्तु मत्कथासु जातश्रद्धोऽत एव सर्वकर्मसु लौकिकवैदिकेषु दुःखबुद्ध्या उद्विग्नः न तु तत्फलेषु यतः कामान् विषयान् दुःखात्मकान् दुःखप्रदान् वेद जानन्नपि यस्मात् तत्परित्यागे अनीश्वरः अशक्तः स तु ततः तामवस्थामारभ्यैव दुःखमुदर्कमुत्तरफलं येषां तान् कामान् गर्हयन् निन्दन्नेव जुषमाणः प्रीतः प्रसन्नचित्तः श्रद्धालुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयश्च सन् श्रवणादिभिर्मां भजेत् ॥ २७ ॥ २८ ॥ प्रोक्तेनेति ॥ श्रद्धामृतकथायां मे इत्यादिनोक्तप्रकारेण असकृत् नित्यं मां भजतो मुनेः मयि हृदि स्थिते सति हृदय्याः हृद्गताः कामवासनाः सर्वा अपि नश्यन्ति ॥ २९ ॥

भिद्यत इति ॥ अस्य मद्भक्तस्याखिलानामात्मनि स्वरूपभूते मयीश्वरे दृष्टे साक्षात्कृते तदनन्तरमेव हृदयमेव ग्रन्थिश्चिज्जडग्रथनरूपोऽहङ्कारः ग्रन्थिवत् दुर्मोचनीयो भिद्यते निवर्त्तते। ततः सर्वे संशयाः असम्भावनाद्याः च्छिद्यन्ते। ततः कर्माण्यनारब्धफलानि संसारहेतुभूतानि क्षीयन्ते । सर्वत्र कर्मकर्त्तरि लट् । शेषं प्रथमस्कन्धे ज्ञेयम् ॥ ३०॥ तदेवं व्यवस्थयाऽधिकारत्रयमुक्तं तत्रापि भक्तेरन्यनिरपेक्षत्वात् अन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति—तस्मादिति ॥ तस्मात् भक्तियोगस्य मुख्यसाधनत्वात् इह कर्मादिसाधनत्रयमध्ये मद्भक्तियुक्तस्य मय्येवात्मा चित्तं यस्य तस्य योगिनो न ज्ञानं प्रकृतिविविक्तात्मज्ञानं न च वैराग्यं विषयवैतृष्ण्यरूपं श्रेयो भवेत् श्रेयःसाधनतया नापेक्षितं भवेदित्यर्थः ॥ ३१ ॥ तत्र हेतुः—यदिति युग्मम् ॥ यत्फलं कर्मभिः यज्ञादिभिः तपसा शास्त्रीयकायक्लेशेन इत्यादिभिः तथा इतरैः श्रेयःसाधनैः तीर्थव्रतादिभिरवाप्यते तत्सर्वं स्वर्गमपवर्गं मोक्षं मद्धाम वैकुण्ठं मद्भक्तः कथंचित् साधनावस्थायां यदि वाञ्छति तदापि अञ्जसा मद्भक्तियोगेन लभते । यदि वाञ्छतीत्यनेन

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः॥क्षीयन्ते चाऽस्य कर्माणि मयि दृष्टेऽखिलात्मनि॥३०॥ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः॥
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि॥ ३२॥ सर्वं
मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ॥ स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥ ३३ ॥ न किंचित्साधवो धीरा भक्ता ह्येकान्तिनो मम ॥
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥३४॥ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ॥ तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत्॥ ३५॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ॥ साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥ एवमेतान्मयादिष्टाननुतिष्ठन्ति मे पथः ॥ क्षेमं
विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ३७ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे विंशतितमोऽध्यायः ॥ २० ॥

वाञ्छा तु तस्य नास्तीत्युक्तम् ॥ ३२ ॥ ३३ ॥ नेति ॥ वस्तुतस्तु साधवः सदाचाराः धीराः धीमन्तः एकान्तिनो मदेकनिष्ठाः मम भक्ताः मया दत्तमपि अपुनर्भवमात्यन्तिकमपि कैवल्यं न गृह्णन्ति । किं पुनर्वक्तव्यं न वाञ्छन्तीति ॥ ३४ ॥ तदुपपादयति—नैरपेक्ष्यमिति ॥ यस्मात् निरपेक्षस्य सर्वापेक्षारहितस्य पूर्णकामस्य मम भक्तिर्निराशिषो निष्कामस्यैव पुरुषस्य भवेत् तस्मान्नैरपेक्ष्यमेव परं सर्वत उत्कृष्टमनल्पकं महत् निःश्रेयसं पुरुषार्थसाधनं वृद्धाः प्राहुः । यद्वा । निरपेक्षस्येति पुरुषस्येति पुरुषस्यैव विशेषणं निराशीस्त्वदार्ढ्याय ॥ ३५ ॥ एवं भक्तिज्ञानसिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति—नेति ॥ मय्येकान्तभक्तानां तथा साधूनां निरस्तरागादीनां समचित्तानां बुद्धेः परमीश्वरमुपेयुषां प्राप्तवतां ज्ञानिनां च गुणदोषोद्भवा गुणाः पुण्यपापात्मका न भवन्ति ॥ ३६ ॥ एवमिति ॥ उक्तप्रकारान्मयोपदिष्टानेतान् त्रिविधान् मे पथः मत्प्राप्त्युपायान् ये अनुतिष्ठन्ति ते क्षेमं कालकर्मादिभयरहितं मम लोकं विन्दन्ति च यत्सर्वशास्त्रतात्पर्यगोचरं परमं ब्रह्म तच्च विदुः ॥ ३७ ॥ इति श्रीकृष्णसेवार्थम-

न्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमादिंश एकादशस्य च ॥२०॥ एकविंशे तु भक्त्यादिहीनानां कामिनां नृणाम् ॥ द्रव्यादिगुणदोषाश्च श्लोकाः सार्द्धास्त्रिसिन्धवः ॥ उवाचेत्यत्रैकमेव श्लोकतुल्या अनुष्टुभः ॥ २१ ॥ य इति ॥ ये एतान् मदुक्तान् भक्त्यादिरूपान् मत्पथो मत्प्राप्तिमार्गान् । समासान्ताभाव आर्षः । हित्वा चलैः विषयेषु धावनस्वभावैः प्राणैरिन्द्रियैः क्षुद्रान् नश्वरत्वेन तुच्छान् कामान् विषयान् जुषन्तः सेवमाना भवन्ति । शता आर्षः । ते संसरन्ति निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवन्तीत्यर्थः ॥ १ ॥ ननु तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यम् । न ह्यग्निना केचित्तप्यन्ते केचिन्नेति संभवति तत्राह—स्वे स्व इति ॥ पूर्वार्द्धं स्पष्टम् । विपर्ययः पराधिकारे स्थितिरूपस्तु दोषः स्यात् उभयोर्गुणदोषयोरेष निश्चयः स्वरूपनिर्णयः अतोऽधिकारभेदेन कल्पितौ गुणदोषौ न तु वस्तुनिष्ठाविति भावः ॥ २ ॥ शुद्ध्यशुद्धी इति ॥ समानेष्वपि वस्तुषु उत्तरश्लोके वक्ष्यमाणेषु भूम्यादिषु द्रव्येषु तस्य द्रव्यादेर्विचिकित्सार्थं योग्यमयोग्यं वेति सन्देहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थं " मशकार्थो धूम " इतिवत् शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे विधीयेते । यथा शाकादिष्वपि वास्तूकशाकः योग्यः कलम्बीशाकस्त्वयोग्यः इति । तथा गुणदोषौ तन्निमित्तोपादेयत्वानुपा-

॥ श्रीभगवानुवाच ॥ य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥ शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ॥ द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥ धर्मार्थं व्यवहारार्थं यात्रार्थमिति चाऽनघ ॥ दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥ भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ॥ आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥ वेदेन नामरूपाणि विषमाणि समेष्वपि ॥ धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥

देयत्वे शुभाशुभौ तन्निमित्तार्थानर्थौ च विधीयेते विभज्य ज्ञाप्येते ॥ ३ ॥ धर्मार्थमिति ॥ हे अनघ तत्र शुद्ध्यशुद्धी धर्मार्थं विधीयेते शुद्धे न धर्मः अशुद्धेन अधर्मः इति गुणदोषौ व्यवहारार्थं विधीयेते । अशुद्धावपि राजादिभिः व्यवहारदर्शनादिकमुपादेयं नान्यदिति शुभाशुभौ यात्रार्थं निर्वाहार्थं विधीयेते । असत्प्रतिग्रहादेर्दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रोपादाने शुभमेव अधिकोपादानं त्वशुभं पापमेवेति । अयं चाचारो धर्मरूपां धुरं भारमुद्वहतां कर्मजडानामित्यर्थः । नृणामर्थे मन्वादिरूपेण मया दर्शितः ॥ ४ ॥ शुद्ध्यशुद्धी प्रपञ्चयिष्यन् वेदोक्तत्वेन तत्राभिनिवेशो मा भूदिति समानेष्ववस्तुष्विति यदुक्तं तत्प्रपञ्चयति—भूमीति ॥ आब्रह्मस्थावरादीनां भूतानां प्राणिना भूम्यादयः पञ्चैव शारीराः शरीरारम्भकाः इति देहतः साम्यमुक्तम् । आत्मना जीवेन संयुताः इति जीवतः साम्यम् । धातवः धारयन्तीति धातवः कारणानि । अतः समानकारणकत्वात्सर्वाणि वस्तूनि समान्येव ॥ ५ ॥ वेदेनेति ॥ हे उद्धव एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिषु पुरुषार्थसिद्धये समेष्वपि धातुषु धात्वारब्धदेहेषु विषमाणि ब्राह्मणोऽयं

क्षत्रियोऽयमित्यादिनामरूपाणि वाच्यवाचकानि वेदेन कल्प्यन्ते ॥ ६ ॥ देशेति ॥ हे सत्तम न केवलं देहेष्वेव किंतु देशकालादिभावानामपि । आदिशब्देन अनुपादेयानां फलनिमित्ताधिकारिणां ग्रहणम् । वस्तूनां द्रव्यादीनामपि कर्मणां स्वाभाविकप्रवृत्तीनां नियमार्थं संकोचार्थमेव मम मया वेदरूपेण गुणदोषौ विधीयेते ॥ ७ ॥ एवं गुणदोषविषयं परिशोध्य तयोः शुद्ध्यशुद्धिमूलत्वात् शुद्ध्यशुद्धी प्रपञ्चयति—अकृष्णेति ॥ देशानां मध्ये अकृष्णसारः कृष्णमृगप्रचाररहितो देशः अशुचिर्भवेत् तत्राप्यब्रह्मण्यः ब्राह्मणभक्तिरहितोऽत्यन्तमशुचिः कृष्णेन मृगेण सारः श्रेष्ठः कृष्णमृगसंचारवानपि च असौवीरः सुवीराः सत्पुरुषास्तद्वान्सौवीरस्तद्व्यतिरिक्तः असौवीरः कीकटादिरप्यशुचिः । कीकटदेशो मगधाङ्गवङ्गकलिङ्गादिः । "अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ॥ " इति स्मृतेः । असंस्कृतः म्लेच्छादियुक्तः संमार्जनादिरहितो वा ईरिणमूषरं च । द्वन्द्व एकवद्भावः । एतद्व्यतिरिक्तः कृष्णमृगसत्पुरुषादियुक्तस्तु कीकटादिरपि शुचिरित्यर्थादुक्तं ज्ञेयम् । " स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते । " इति वचनात् ॥८॥ कर्मण्य इति ॥ द्रव्यतो द्रव्यसंपत्त्या स्वतो वा पूर्वाह्णादिर्यः कर्मण्यः कर्मार्हः स कालस्तस्मिन् कर्मणि गुणवान्

देशकालादिभावानां वस्तूनां मम सत्तम ॥ गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥ अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ॥ कृष्णसारोऽप्यसौवीरः कीकटासंस्कृतेरिणम् ॥८॥ कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा ॥ यतो निवर्तते कर्म सदोषोऽकर्मकः स्मृतः ॥९॥ द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ॥ संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथवा ॥१०॥ शक्त्याऽशक्त्याऽथवा बुद्ध्या समृद्ध्या च यदात्मने ॥ अघं कुर्वन्ति हि यथा देशावस्थानुसारतः ॥ ११ ॥

यतो यस्मिन् द्रव्यालाभेन वा राष्ट्रविप्लवादिना सूतकादिसंचारेण वाऽरब्धमपि कर्म निवर्तते न समाप्यते सः कालोऽकर्मकः कर्मानर्हः अत एव दोषः अशुद्धः स्मृतः ॥ ९ ॥ द्रव्यस्येति युग्मम् ॥ द्रव्यस्य वस्त्रादेर्द्रव्येण तोयादिना शुद्धिः असृङ्मूत्रादिना त्वशुद्धिः । वचनेनेति । शुद्धमशुद्धं वेति सन्देहे शुद्धमित्येवंरूपेण ब्राह्मणवचनेन शुद्धिः । अशुद्धमिति विपरीतवचनेनाशुद्धिः । संस्कारेण प्रोक्षणादिना पुष्पादेः शुद्धिः अवघ्राणादिना त्वशुद्धिः । " कालेन काले मेवोदकं ग्राह्यं वर्ज्यं तु त्र्यहमेव हि । अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयते॥" इति दशाहादिना नवोदकादेः शुद्धिर्विपरीतेनाशुद्धिः पर्युषितान्नादेरशुद्धिः अन्त्यजाद्युपहतानां तटाकानां महत्त्वाच्छुद्धिः अल्पत्वात्त्वशुद्धिः । शक्त्याशक्त्येति । यथा शक्तस्य स्नानादिनैव शुद्धिः ज्वरादिना अशक्तस्य तु स्नानादिविनापि शुद्धिः । बुद्ध्या पुत्रजन्मादौ दशाहाद्बहिर्ज्ञानेन शुद्धिः अन्तर्ज्ञाने त्वशुद्धिः । समृद्ध्येति । सूतकान्नादेः समृद्धं प्रत्यशुद्धिः दरिद्रं प्रति तु शुद्धिः । तत्रापि विशेषमाह । यदिति । एते हि द्रव्यवचनादयो द्रव्याशुद्धिद्वारा आत्मने यदघं कुर्वन्ति तद्देशावस्थानुसारत एव । यथा यथावत्कुर्वन्ति न सर्वतः । तथा हि निर्भय एव देशे स्नानादिना शुद्धिं कुर्वन्ति चोरव्याघ्रादिभयाकुले देशे तु स्नानादिविनापि शुद्धिरेव । तथा रोगादि-

व्यतिरिक्तयुवाद्यवस्थायामेव ते स्नानादिना शुद्धिं कुर्वन्ति । बाल्यरोगाद्यवस्थायां तु तद्विनापि नाशुद्धिः । हिशब्देनात्र शास्त्रप्रसिद्धिं सूचयति । तथाच स्मृतिः । " देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥ " इति ॥ १० ॥ ११ ॥ द्रव्यादिभिर्द्रव्यस्य शुद्धिरित्युक्तं तत्र वचनादिशुद्धिरेकरूपैव । द्रव्यतस्तु शुद्धिर्बहुधेति तां प्रपञ्चयति—धान्येति ॥ धान्यादीनां रसादीनां पार्थिवानां युतायुतैः कालवाय्वादिभिः शुद्धिरित्यन्वयः । तत्र धान्यस्य वाय्वातपादिना शुद्धिः । दारूणां काष्ठानां लौकिकानां वैदिकानां ग्रहचमसादीनां च मृत्तोयाभ्यामत्यन्तामेध्योपहतानां तु तक्षणेन शुद्धिः।अस्थ्नां गजदन्तादीनां वाय्वातपादिना शुद्धिः । तन्तुरचितवस्त्राणां तोयेन शुद्धिः । रसस्य क्षीरघृतमध्वादेः केशादिशोधनेन तापादिना च । तैजसानां सुवर्णादीनां क्षालनदाहादिना । चर्मणां तैलेन । अन्येषामपि पार्थिवानां रथ्याकर्दमघटेष्टकादीनां यथायथं कालादिभिः शुद्धिः । तत्रापि काकान्त्यजाद्युपघाततारतम्येन देशकालाद्यनुसारेणैव । एतैरन्यैश्च युतायुतैः मृत्तोयादिभिर्मिलितैः केवलैश्च शुद्धिः । यथा तैजसानां मृत्तोयाग्निभिः । ऊर्णायाः केवलेन वायुनेति ॥ १२ ॥ अमेध्येति ॥ अमेध्येन लिप्तं यत् पीठपात्रवस्त्रादि तत् येन तत्क्षणक्षाराम्लोदकादिना गन्धं च लेपं च

धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ॥ कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥१२॥ अमेध्यलिप्तं यद्येन गन्धलेपं व्यपोहति ॥
भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥ १३ ॥ स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ॥ मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद् द्विजः ॥ १४ ॥ मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ॥ धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः ॥ १५ ॥ क्वचिद् गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ॥ गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥

व्यपोहति त्यजति स्वगतं मलं त्यक्त्वा च प्रकृतिं स्वमेव रूपं भजते तस्य तच्छौचं शोधकम् । यावता च तक्षणादिना मलं व्यपोहति तावत्प्रमाणं स्वरूपत आवृत्तितो वा तत्कर्तव्यमिष्यते ॥ १३ ॥ कर्तृशुद्धिमाह—स्नानेति ॥ आत्मनः साहङ्कारस्य कर्तुरेतैः स्नानादिभिर्यथायथं तत्तत्कर्मानुसारि शौचं शुद्धिर्भवति । इयं च शुद्धिर्न व्यवहारार्थं किंतु विहितकर्मानुष्ठानार्थेत्याह।शुद्ध इति । एतैः शुद्धः सन्नेव द्विजः उपलक्षणतया शूद्रादिरपि कर्माचरेत् । अवस्था कर्मयोग्या वीर्यं शक्तिः संस्कार उपनयनादिः कर्मसन्ध्योपासनदीक्षादि ॥ १४ ॥ मन्त्रस्येति ॥ सद्गुरुमुखाद्यथावत् साङ्गोपाङ्गविनियोगसहितं परिज्ञानं मन्त्रस्य शुद्धिः।मय्यमीश्वरायार्पणं कर्मणः शुद्धिः । एवम् अकृष्णसार इत्यारभ्य कथितैः देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते । एतेषां यो विपर्ययः अशुद्धिः सोऽधर्मः अधर्महेतुरित्यर्थः ॥ १५ ॥ अयं च गुणदोषविभागो न क्वापि स्थित इत्याह—क्वचिदिति ॥ विधिना विधिबलेन विषयभेदव्यवस्थया क्वचिद्गुणोऽपि दोषः स्यात्क्वचिद्दोषोऽपि गुणः स्यात् । यथा आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः । परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः । अविरक्तस्य गृहस्थकुटुम्बत्यागादिर्दोषोऽपि विरक्तस्य विहितत्वात् गुणः । एवं योऽयं गुणदोषयोरेकस्मिन्नेवार्थे नियमः गुणदो-

षार्थं वा यो नियमः स तयोर्गुणदोषयोर्भिदां भेदमेव बाधते । भेदस्य वास्तवत्वे एवं विपर्ययो न स्यादित्याशयः ॥ १६ ॥ क्वचिद्दोषस्य दोषाभावत्वं गुणत्वं चाह—समानेति ॥ तुल्यस्यापि कर्मणः सुरापानादेराचरणमपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकमधिकारभ्रंशकं न भवति पूर्वमेव पतितत्वात् । अतोऽत्र दोषस्यापि दोषता नास्तीत्यर्थः । तथा स्त्र्यादिसङ्गो यतेर्दोषोऽपि गृहस्थस्यौत्पत्तिकः स्वीकृतो गुण एव । " ऋतौ भार्यामुपेयात् " इति विहितत्वात् । उभयत्र दृष्टान्तमाह । पूर्वमेवाधः शयानो यथा पुनर्न पतति तथेति ॥ १७ ॥ अतः प्रवृत्तिशास्त्रस्यापि निवृत्तावेव तात्पर्यमित्याह—यतो यत इति ॥ यतो यतो विषयात्पुरुषो निवर्त्तेत विश्लिष्येत ततस्तत एव बन्धाद्विमुच्येत । एष विषयासक्तिबन्धनिवृत्तिलक्षणो धर्म एव नृणां क्षेमः परमसुखावहः शोकाद्यनर्थनिवर्तकश्च ॥ १८ ॥ ननु शास्त्रं यथाश्रुतार्थे न प्रवृत्तिपरमेव किन्न स्यादित्याशङ्क्य प्रवृत्तेरनर्थहेतुतां दर्शयति—विषयेष्विति ॥ प्रथमं विषयेषु गुणाध्यासात् रमणीयबुद्धेः ततः तेषु पुंसः सङ्गः आसक्तिर्भवेत् । सङ्गाच्च तत्र तेषु विषयेषु कामो भोगाभिनिवेशो भवेत् । तदा येन स कामः प्रतिहन्यते तेन सह तेषां नृणां कामादेव हेतोः कलिः कलहो विवादो भवति ॥ १९ ॥ कलेरिति ॥ कलेश्च दुर्विषहः तीव्रः

**समानकर्माचरणं पतितानां न पातकम् ॥ औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः ॥ १७ ॥ यतो यतो निवर्त्तेत विमुच्येत ततस्ततः ॥ एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥ विषयेषु गुणाध्यासात्पुंसः सङ्गस्ततो भवेत् ॥ सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥१९॥ कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्त्तते ॥ तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥२०॥ तया विरहितः साधो जन्तुः शून्याय कल्पते ॥ ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च ॥ २१ ॥ विषयाभिनिवेशेन नात्मानं वेद नापरम् ॥ वृक्षजीविकया जीवन् व्यर्थं भस्त्रेव यः श्वसन् ॥ २२ ॥ फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ॥ श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥**

क्रोधो भवति तं क्रोधं तमः संमोहोऽनुवर्त्तते । तमसा च पुंसो व्यापिनी तत्तत्पदार्थेषु प्रसृता चेतना कार्याकार्यविषयिका स्मृतिः द्रुतं शीघ्रं ग्रस्यते लुप्ता भवति ॥ २० ॥ तयेति ॥ हे साधो तया कार्याकार्यविवेकवत्या स्मृत्या रहितो जन्तुः जीवः शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः । ततोऽस्य मूर्छितस्य मृततुल्यस्य च सर्वस्य स्वार्थस्य पुरुषार्थस्य भ्रंशो नाशो भवति ॥ २१ ॥ मृततुल्यत्वमेव स्पष्टयति—विषयेति ॥ विषयाभिनिवेशेन यः आत्मानं न वेद न चापरं परमात्मानं वेद । स वृक्षजीविकया वृक्षवत्पुरुषार्थाननुसन्धानपूर्वकाहारग्रहणमात्रेण जीवन् वर्त्तते स मूर्छिततुल्यः।तथा यः भस्त्रेव परसंतापार्थं श्वसन् व्यर्थमेव जीवन् वर्तते स मृततुल्यः अतः स्वार्थनाशः॥२२॥ ननु विषयाभिनिवेशोऽनर्थकरश्चेद्वेदेन कथं स्वर्गादिविषयः फलतया निरूपित इत्याशङ्क्याह—फलश्रुतिरिति ॥ " स्वर्गकामो यजेत इति " फलश्रुतिरियं नृणां श्रेयः परमफलतया स्वर्गादिकं न बोधयति किं त्वतिबहिर्मुखानां तेषां श्रेयसः परमफलस्य मोक्षस्य विवक्षया परं केवलं रोचनं कर्मसु रुच्युत्पादकं स्वर्गादिफलतया प्रोक्तम् । तत्र दृष्टान्तमाह ।

यथेति। भैषज्यमौषधं तत्र रोचनं लड्डुकादिकं यथा पित्रोच्यते "पिब निम्बं प्रदास्यामि वत्स ते खण्डलड्डुकान्।" इति। तथा "शिखा ते वर्द्धते वत्स गुडूचीं श्रद्धया पिब"॥ इति। दीयते च परं नहि तदौषधपानफलं किं त्वारोग्यं तथेत्यर्थः ॥ २३ ॥ ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कथं मोक्षविवक्षयेत्युच्यते इत्याशङ्क्य यथा-श्रुतार्थस्याघटनान्मोक्ष एव तस्य तात्पर्यमित्याह—उत्पत्त्येति ॥ कामेषु पश्वादिविषयेषु प्राणेषु आयुरिन्द्रियबलवीर्यादिषु स्वजनेषु पुत्रकलत्रादिषु च आत्मनः स्वस्यानर्थहेतुषु परिपाकतो दुःखहेतुष्वपि मर्त्याः प्राणिनः उत्पत्त्यैव शास्त्रोपदेशं विना स्वभावत एव आसक्तमनसो भवन्ति हि नात्र सन्देहः ॥ २४ ॥ नेति ॥ तानेवंभूतान् स्वार्थं परमपुरुषार्थमविदुषः अजानतः अत एव न तान् श्रद्धीभूतान् वेदो यद्बोधयिष्यति तदेव श्रेय इति विश्वसितान् वृजिनाध्वनि दुःखमार्गे सूकरादियोनिषु भ्राम्यतस्ततोऽपि पुनस्तमो वृक्षादियोनिं विशतः "पशुकामो यजेत आयुरिन्द्रियपुत्रादिकामो यजेत" इति कथं पुनस्तेष्वेव कामेषु स्वयं बुधो वेदो युञ्ज्यात् प्रवर्तयेत्। तथा सत्यनाप्तः स्यादित्याशयः ॥ २५ ॥ एवमिति ॥ कुबुद्धयः भ्रान्ताः केचित् कर्ममीमांसकाः एवं व्यवसितं वेदस्याभिप्रायमविज्ञाय कुसुमितामवान्तरफलरोचनार्थां परमफलश्रुतिं

उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ॥ आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥ न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ॥ कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ॥ २५ ॥ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ॥ फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥ २६ ॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥ अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥ २७ ॥ न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ॥ उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥

वदन्ति। तत्र हेतुमाह। हि यस्मात् वेदज्ञा व्यासादयस्तथा न वदन्तीति। यद्वा। न वेदज्ञाः वेदाशयानभिज्ञा इति कुबुद्धीनां विशेषणम्। ततश्चैकमेव वाक्यम् ॥ २६ ॥ कामिन इति ॥ कामिनः विषयाभिलाषिणः अत एव कृपणा दीनाः अत एव लुब्धास्तृष्णाकुलाः अत एव पुष्पेषु पुष्पस्थानीयेषु स्वर्गाद्यवान्तरफलेषु परमफलबुद्धयः अत एवाग्निमुग्धाः अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकाः अत एव धूमतान्ताः धूममार्गोऽन्ते येषां ते स्वलोकम् आत्मतत्त्वं न विदन्ति। तथा च श्रुतिः। "कश्चिद्ध वा अस्माल्लोकात्प्रेत्य आत्मानं वेद अयमहमस्मीति कश्चित्स्वं लोकं न प्रतिजानाति अग्निमुग्धो हैव धूमतान्तः" इति ॥ २७ ॥ नेति ॥ अङ्ग हे उद्धव योऽयम् इदं जगत् मत्तः अभिन्नं यतश्च मत्त इदं जगत् ईदृशमपि हृदिस्थमपि च माम् उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते अत एव केवलमसुतृपः प्राणतर्पणपराः ते न जानन्ति नीहारं तमोधूमिकावातेन व्याप्तानि चक्षूंषि येषां ते यथा संनिहितमपि वस्तु न जानन्ति तद्वदित्यर्थः ॥ २८ ॥

न इति युग्मम् ॥ हिंसायां तत्काले मांसभक्षणे च यदि रागः स्यात् यदि तत्त्यागः कर्तुं न शक्यते तर्हि यज्ञ एवेत्यनुज्ञानमयी परिसङ्ख्या एव न तु तत्रावश्यकत्वेन चोदना-विधिरिति परोक्षमस्फुटं मे मतमविज्ञाय विषयात्मकाः विषयाविष्टचित्ताः हिंसाविहाराः खलास्ते स्वसुखेच्छया आलब्धैः हिंसितैः पशुभिः साधितैर्यज्ञैः देवताः पितृभूतपतींश्च यजन्ते ॥ २९ ॥ ३० ॥ स्वप्नोपममिति ॥ स्वप्नदृष्टपदार्थवद्विनश्वरं श्रवणमात्रेणैव प्रियं वस्तुतः असन्तम् अतिशयादिदर्शनेन दुःखजनकममुं परलोकं तथाऽस्मिन् लोके आशिषो विषयान् स्वहृदि संकल्प्य तत्रापि निश्चयो नास्ति विघ्नबाहुल्यात् । सिद्धानपि धनादिपदार्थान् त्यजन्ति तत्साधनव्यापारेषु विनियोजयन्ति । तत्र दृष्टान्तमाह । यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलङ्घनेन बहुधनार्जनेच्छया सिद्धमपि धनं त्यजन्नुभयतो भ्रष्टो भवति तथेत्यर्थः ॥ ३१ ॥ रज इति ॥ यतस्ते स्वयं रजःसत्वतमोनिष्ठा अतो रजःसत्वतमोजुषः तादृशस्वभावानिन्द्रादीनेवोपासते मां गुणातीतं तु तथा नोपासते । यद्यपि इन्द्रादीनां मदंशत्वान्मदुपासनमेव तत् तथापि यथावन्नोपासते भेददर्शित्वात्

**ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ॥ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ॥ २९ ॥ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ॥ यजन्ते देवता यज्ञैः पितृभूतपतीन् खलाः ॥ ३० ॥ स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम् ॥ आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥ ३१ ॥ रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ॥ उपासत इन्द्रमुख्यान् देवादीन्न तथैव माम् ॥ ३२ ॥ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ॥ तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ॥ मानिनां चातिस्तब्धानां मद्वार्ताऽपि न रोचते ॥ ३४ ॥ वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे ॥ परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥ ३५ ॥**

इत्यर्थः ॥ ३२ ॥ आशिषो हृदि संकल्प्येत्युक्तं संकल्पं दर्शयति—इष्ट्वेति । आद्यार्द्धं स्पष्टम् ॥ तस्य भोगस्यान्ते महाशाला महागृहस्थाः महाकुलभवाश्च भूयास्म भविष्यामः ॥ ३३ ॥ एवमिति ॥ पुष्पितया पुष्पस्थानीयस्वर्गादिपरया वेदवाचा एवं व्याक्षिप्तं मनो येषां तेषां मानिनां देहाद्यहङ्कारवताम् अतिस्तब्धानां गर्वितानां नृणां मद्वार्ताऽपि न रोचते अतस्ते मत्प्रवणत्वाभावात् नित्यं संसारिण एव भवन्तीति भावः ॥ ३४ ॥ वेदानां प्रवृत्तिपरत्वं निराकृत्य निवृत्तिपरत्वं प्रकृतमुपसंहरति—वेदा इति ॥ कर्मकाण्डदेवताकाण्डब्रह्मकाण्डविषया इमे सर्वेऽपि वेदाः ब्रह्मात्मविषयाः ब्रह्मैव सर्वेषामात्मा न संसारीति प्रतिपादनपराः । तत्परत्वाप्रतीतौ च फलश्रुतिरियं नृणामित्यादि-रीत्या कारणमुक्तमेवानुस्मारयति । परोक्षेति । परोक्षमस्फुटमेव स्वाभिप्रायं वदन्तीति तथाभूता एव ऋषयो मन्त्रास्तद्द्रष्टारो वा अतो न तत्तात्पर्यं सर्वेषां स्फुरति परोक्षमेव च मम प्रियम् । अयं भावः । शुद्धान्तःकरणैरेव बोद्धव्यो नान्यैरनधिकारिभिः वृथा कर्मत्यागेन भ्रंशप्रसङ्गात् ॥ ३५ ॥

ननु जैमिन्यादयः किमिति तथा वेदस्य ब्रह्मपरत्वं न वर्णयन्ति इत्याशङ्क्य तत्र मां विना वेदतत्वं कोऽपि न वेदेत्याशयेनाह—शब्देति ॥ शब्दब्रह्म वेदः सुदुर्बोधं तत्र स्वरूपतोऽपि दुर्ज्ञानमित्याह । प्राणेति । प्रथमं प्राणमयं पराख्यं ततो मनोमयं पश्यन्त्याख्यमनाहतचक्रस्थम् । उपलक्षणतया बुद्धिमयं मध्यमाख्यं हृदये मणिपूरकचक्रस्थं तत इन्द्रियमयं वैखर्याख्यं तस्य वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात् । किं च । अनन्तपारं समष्टिप्राणादिमयस्य निर्विशेषस्य च तस्य कालतो देशतश्चापरिच्छेदात् अर्थतोऽपि दुर्ज्ञानमाह । गम्भीरं निगूढार्थम् अत एव समुद्रवद्दुर्विगाह्यं मतिप्रवेशानर्हम् । तथा च श्रुतिः । "चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥" अस्यार्थः । वाचः शब्दब्रह्मणः परिमिता परिमितानि । जसोडादेशश्छान्दसः । पदानि रूपाणि चत्वारि ये मनीषिणो ब्राह्मणास्ते विदुः । गुहायां देहमध्ये त्रीणि निहितानि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति । यतो वाचस्तुरीयं केवलं चतुर्थं भागं वैखर्याख्यं मनुष्याः प्राणिनो वदन्ति । तमपि वदन्त्येव न तु तत्त्वतो जानन्ति ॥ ३६ ॥ तत्र मनीषिभिरेव ज्ञेयं सूक्ष्मं तत्वरूपं दर्शयति—मयेति ॥ भूम्ना अपरिच्छिन्नेन अनन्तशक्तिना नियन्त्रा ब्रह्मणा

**शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ॥ अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥ मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ॥ भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ॥ आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥ ३८ ॥ छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ॥ ओङ्काराद्व्यञ्जितस्पर्शस्वरोष्मान्तःस्थभूषिताम् ॥ ३९ ॥ विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ॥ अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥**

मयाऽन्तर्यामिणोपबृंहितमधिष्ठितं भूतेषु सर्वप्राणिषु घोषरूपेण नादरूपेण मनीषिभिर्लक्ष्यते ज्ञायते । बिसेषु कमलमृणालेषु ऊर्णातन्तुरिव लक्ष्यते ॥ ३७ ॥ यथेति त्रिकम् ॥ ऊर्णनाभिर्लूताकीटः यथा स्वहृदयात् हृदयाकाशात् मुखात् मुखद्वारा ऊर्णातन्तुमुद्वमते बहिः प्रकटयति । तद्वत्पर्षः । तथा प्राणस्तु तदुपाधिहिरण्यगर्भरूपः प्रभुः समर्थो भगवान् छन्दोमयो वेदप्रतिपादितमूर्तिः स्वतस्त्वमृतमयः घोषवान् नादोपादानवान् सन् स्पर्शम् उपलक्षणतया स्पर्शादीन् वर्णान् रूपयति सङ्कल्पयति । स्पर्शरूपी तेन मनसा निमित्तभूतेन हृदयाकाशात् सहस्रपदवीं बहुमार्गाम् ओङ्कारात् उरःकण्ठादियोगेन व्यञ्जितैः स्पर्शादिभिर्भूषिताम् ओङ्कारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतो नत्वकारादिवर्णरूपस्तस्य व्यङ्ग्यकोटिगत्वात् । तत्र स्पर्शाः कादयो मावसानाः पञ्च वर्गाः । स्वराः अकारादयः षोडश । ऊष्माणः शषसहाः । अन्तस्था यरलवाः । विचित्राभिर्वैदिकलौकिकभाषाभिर्विततां विस्तृतां यथोत्तरं चत्वार्यक्षराणि अधिकानि येषां तैश्छन्दोभिरुपलक्षिताम् । एवमनन्तपारां नास्त्यन्तः परिच्छेदः पारोऽवधिर्यस्यास्तां बृहतीं वैखरीं वाचं सृजति । तां स्वयमेवाक्षिपते संहरति च ॥ ३८ ॥ ३९ ॥ ४० ॥

गायत्रीति ॥ तत्र चतुर्विंशत्यक्षरा गायत्री । ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छन्दांसि अत्यष्टिः अतिजगती अतिविराट् चेत्यर्थः । एतैः छन्दोभिरुपलक्षितामिति पूर्वेणैवान्वयः । अतो बृहत्यपि साकल्येन स्वरूपतो दुर्ज्ञेयैवेत्युक्तं भवति ॥ ४१ ॥ अथार्थतोऽपि दुर्ज्ञेयत्वमाह—किमिति ॥ कर्मकाण्डे विधिवाक्यैः किं विधत्ते । देवताकाण्डे च मन्त्रवाक्यैः किमाचष्टे किं प्रकाशयति । ज्ञानकाण्डे च निषेधार्थं किमनूद्य विकल्पयेदित्यस्या वेदवाचो हृदयं तात्पर्यं मत् मत्तोऽन्यः कश्चनापि न वेद न जानाति ॥ ४२ ॥ स्वयं तदभिप्रायमाह—मामिति सार्द्धम् ॥ कर्मकाण्डे मामेव यज्ञरूपं विधत्ते मामेव च तत्तद्देवतारूपमभिधत्ते । न मत्तः पृथक् यच्चाकाशादि प्रपञ्चजातम् । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिना विकल्प्य "नेह नानास्ति किंचन" इत्यादिनापोह्यते निषिध्यते । तदप्यहमेव न मत्तः पृथगस्ति । शब्दो वेदः मां सर्वकारणत्वेन परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य "नेह नानास्ति किंचन" इति तद्भिदां च प्रतिषिध्यान्ते प्रसीदति निवृत्तव्यापारो भवति एतावानेव सर्ववेदस्यार्थः । अयं भावः । यथा ह्यङ्कुरे

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ॥ इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥ ४२ ॥ मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ॥ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥ मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ॥ ४३ ॥ इति श्रीभागवते एकादशस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥ उद्धव उवाच ॥ कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ॥ नवैकादश पञ्च त्रीण्यात्थ त्वमिति शुश्रुम ॥ १ ॥ केचित्षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ॥ सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥ केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ॥ २ ॥ एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ॥ गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥

यो रसः स एव तद्विस्तारभूतनानाकाण्डशाखास्वपि । तथैव प्रणवस्य योऽर्थः परमेश्वरः स एव तद्विस्तारभूतानां सर्ववेदकाण्डशाखानामपि सङ्गच्छते नान्य इति ॥ ४३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्यैकविंशे व्यधाद्गङ्गासहायकः ॥ २१ ॥ द्वाविंशे तत्वसङ्ख्यायामविरोधविधोच्यते ॥ पुंप्रकृत्योर्विवेकोऽत्र श्लोकाः सार्द्धाः ६१ कुषण्मिताः ॥ उवाचसप्तकं साङ्घ्रिः ६३ त्र्यंशःषष्टिरनुष्टुभः ॥ २२ ॥ पूर्वं साङ्ख्येन सर्वभावानामिति तत्वविमर्शस्य मनःप्रसादहेतुत्वमुक्तं तत्र तत्त्वानां न्यूनाधिक्यसन्देहात्पृच्छति—कतीति ॥ हे विश्वेश हे प्रभो ऋषिभिरागमेषु तत्वानि बहुधा सङ्ख्यातानि त्वं तु नवैकादश पञ्च त्रीन् अष्टाविंशति तत्वान्यात्थ । ऊनविंशेऽध्याये तद्वयं शुश्रुम श्रुतवन्तस्तत्र कति मुक्तानीति । अत्र केचित् प्राहुः । प्रकृतिस्थाने त्रयो गुणा एव त्वया गृहीताः न तु गुणसाम्यरूपा प्रकृतिरिति ॥१॥ केचिदिति सार्द्धम् ॥ स्पष्टम् ॥२॥ एतावत्त्वमिति ॥ हे आयुष्मन् नित्यमूर्ते सङ्ख्यानामेतावतीनां भाव एतावत्त्वं नानात्वं यद्विवक्षया यत्प्रयोजनमभिप्रेत्य ऋषयः पृथक् गायन्ति तदिदं प्रयोजनं नोऽस्मभ्यं वक्तुमर्हसि ॥ ३ ॥

युक्तं च सन्तीति ॥ ब्राह्मणा ऋषयो यथा भाषन्ते यथा तत्सर्वं युक्तमेव । यतः सन्ति सर्वत्रान्तर्भूतानि सर्वाणि तत्वानि सन्ति युक्तयः । सन्तीति पाठान्तरन्तु स्पष्टार्थम् । मदीयां मायामुद्गृह्य स्वीकृत्य न्यूनाधिकादि वदतां किं नु दुर्घटं सर्वमविरुद्धमेवेत्यर्थः । असत्वेऽपि मायाश्रयत्वाद् घटत एवेत्यर्थः । न हि मरीचिजलपरिमाणादिविचारे किंचिदघटितमिव भवति ॥ ४ ॥ ननु सर्वस्य युक्तत्वे कुतो विवादः मायाया एवालम्बनत्वे कुतो हेतुं प्रति विवादस्तत्राह—नैतदिति ॥ यथा त्वमात्थ वदसि एतत्तत्वं तथा न भवति किंतु यथाऽहं यद्वच्मि तत्तथा यथार्थमेवं विवदमानानां जनानां मदीया दुरतिक्रमाः शक्तयः सत्वाद्या अन्तःकरणवृत्तिविशेषरूपेण परिणता एव विवादहेतुरित्यर्थः ॥ ५ ॥ यासामिति ॥ यासां सत्त्वादिशक्तीनां व्यतिकरात् क्षोभवृत्तिरूपेण परिणामात् वदतां विवदमानानां पदं विषयः विवादकारणं विकल्पः पक्षभेद आसीत् । अन्तःकरणवृत्तिविकल्पो वा तन्मूलभूत आसीत् अत एव शमदमे शमदमयोर्द्वन्द्वैक्यं तस्मिन् मनइन्द्रियनिग्रहे विवादनाशके प्राप्ते सति सर्ववृत्तिलयात् एषां वाक्यानामालम्बनभूतः विकल्पोऽपि अप्येति विलीयते । तं विकल्पस्याप्ययं नाशमनु पश्चाद्विवादोऽपि शाम्यति निवर्तते ॥ ६ ॥ परस्परेति ॥ हे पुरुषर्षभ तत्वानां परस्परानुप्रवेशात् अन्योऽन्य-

श्रीभगवानुवाच ॥ युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ॥ मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ॥ एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥ ५ ॥ यासां व्यतिकरादासीद्विकल्पो वदतां पदम् ॥ प्राप्ते शमदमेऽप्येति वादस्तमनुशाम्यति ॥ ६ ॥ परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ॥ पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥ एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ॥ पूर्वस्मिन् वाऽपरस्मिन्वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥ पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् ॥ यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसंभवात् ॥ ९ ॥ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ॥ स्वतो न संभवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥ १० ॥

स्मिन्नन्तर्भावात् वक्तुर्वादिनो यथा विवक्षितं तथा पौर्वापर्यप्रसङ्ख्यानं पूर्वं कारणमपरं कार्यं कार्यकारणभावेन प्रसङ्ख्यानं गणनं भवति । यद्वा । पूर्वा अल्पसङ्ख्या अपरा अधिकसङ्ख्या तयोर्भावः पौर्वापर्यं तेन प्रसङ्ख्यानमित्यर्थः ॥ ७ ॥ अनुप्रवेशमाह—एकस्मिन्नपीति ॥ एकस्मिन्नपि पूर्वस्मिन् कारणभूते तत्वे इतराणि कार्यरूपाणि सर्वशः सर्वाणि तत्वानि सूक्ष्मरूपेण मृदि घटवत्प्रविष्टानि अन्तर्भूतानि दृश्यन्ते तथा एकस्मिन्नप्यपरस्मिन् कार्यतत्त्वे इतराणि कारणतत्वानि च सर्वाणि घटे मृद्वत्प्रविष्टानि दृश्यन्ते ॥ ८ ॥ पौर्वापर्यमिति ॥ अतः अमीषां तत्त्वानां पौर्वापर्यं कार्यकारणत्वं प्रसङ्ख्यानं च न्यूनाधिकमभीप्सतां वादिनां मध्ये यथा विवक्षया यद्वक्त्रं यस्य मुखं प्रवर्त्तते तत्सर्वं विविक्तं निश्चितं वयं गृह्णीमः । उक्तन्यायेन सर्वत्र युक्तेः संभवात् ॥ ९ ॥ तत्र गुणत्रयं प्रकृतावन्तर्भाव्य पञ्चविंशतिस्तत्वानि कापिलैरुच्यन्ते तत्रेश्वरमतिरिक्तमङ्गीकृत्य षड्विंशतितत्वपक्षं समर्थयते—अनादिरिति ॥ पुरुषस्य जीवस्यात्मज्ञानं स्वतो न संभवति । अन्यतस्तु तत्संभवात् । अन्यस्तत्त्वज्ञो ज्ञानदः परमेश्वरो भवेत् अतस्तयोर्भेदात्

षड्विंशतितत्वपक्षप्रवृत्तिरित्याशयः ॥ १० ॥ पञ्चविंशतिपक्षमाह—पुरुषेति ॥ जीवेश्वरयोरत्र शरीरे अण्वपि वैलक्षण्यं विसदृशत्वं नास्ति द्वयोरपि चिद्रूपत्वाविशेषात् । अतस्तयोरत्यन्तमन्यत्वकल्पना अपार्था व्यर्थैव । एवं पञ्चविंशतिपक्षप्रवृत्तिरित्यर्थः । नन्वेवमीश्वरप्रसादजज्ञानस्य पृथक्त्वात्पक्षद्वयमपि न घटतेऽत आह । ज्ञानं च सत्वगुणवृत्तित्वात्तदन्तर्भूतमेव ॥ ११ ॥ ननु ज्ञानं न प्रकृतेर्गुणः जीवधर्मतया प्रतीतेरित्यत आह—प्रकृतिरिति ॥ हि यस्मात् गुणत्रयसाम्यमेव प्रकृतिः अतः स्थित्यादिहेतवः सत्वादयः प्रकृतेरेव गुणा आत्मनो गुणास्ते न भवन्ति अकर्तृत्वात् तस्य स्थित्यादिहेतुभूतगुणाश्रयानुपपत्तेः ॥ १२ ॥ सत्त्वमिति ॥ अतः सत्त्वं सत्त्ववृत्तिरूपं ज्ञानं प्रकृतावन्तर्भूतमित्यनुषङ्गः । रजसो वृत्तिरेव कर्म । तमोऽज्ञानमिति तमसो वृत्तिरेवाज्ञानमित्यर्थः । अतः कर्माज्ञानयोरपि रजस्तमोद्वारा प्रकृतावेवान्तर्भाव इत्याशयः । तथापि कालस्वभावयोस्तत्वान्तरता स्यात्तत्राह । गुणानां व्यतिकरः साम्यावस्थात्यागेन मुख्यगुणभावो यस्मात्स ईश्वर एव कालो न ततः पृथगित्यर्थः । स्वभावो नाम सूत्रं महत्तत्वमेव तस्य सर्वशक्तिमत्वात् । एवं च ज्ञानादीनां यथायथमेष्वेवान्तर्भावान्न पक्षद्वयेऽपि तत्ववृद्धिः । एतच्च पक्षान्तरेष्वपि ज्ञेयम् ॥ १३ ॥ अत्र स्वमतवर्णने भगवता नवैकादश पञ्च त्रीनि-

पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ॥ तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः॥११॥ प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥ सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥ पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ॥ ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥ श्रोत्रं त्वग् दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ॥ वाक्पाण्युपस्थपाय्वङ्घ्रिकर्माण्यङ्गोभयं मनः ॥ १५॥ शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ॥ गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥ सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ॥ सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते ॥ १७ ॥

त्युक्तम् । तत्र त्रीन् इति पदस्य सत्वं रजस्तम इति व्याख्या । मतान्तरे कालः सूत्रं पुरुष इति स्वमते तु गुणानामागमापायित्वात्प्रकृतेर्भेदो विवक्षितः । अतस्त्रयो गुणास्त्रीणि तत्वानि अपराणि पञ्चविंशतिः तत्वानि पूर्वोक्तपक्षद्वयसाधारणानि अवशिष्टानि नवैकादशादितत्वान्याह—पुरुष इति॥पुरुषपदेन जीवेश्वरैक्यं विवक्षितम् । प्रकृतिः व्यक्तं महत्तत्वं नभ आदीनि पञ्च तन्मात्राणि महाभूतानि वा इत्येवं नव तत्त्वानि मे मयोक्तानि ॥ १४ ॥ श्रोत्रमिति ॥ दर्शनं चक्षुः इत्येवं श्रोत्रादीनि पञ्च ज्ञानशक्तयः ज्ञानेन्द्रियाणि तथा अङ्ग हे उद्धव वागादिपाय्वन्तानि द्वन्द्वैक्येनोक्तानि चत्वारि अङ्घ्रिश्चेति पञ्च कर्मेन्द्रियाणि उभयं उभयनायकं मनश्चेत्येकादश ॥ १५ ॥ शब्द इति ॥ शब्दस्पर्शौ रसो गन्धो रूपं च इत्येते पञ्चार्थजातयः श्रोत्रादीन्द्रियाणां विषया इत्यर्थः । गतिश्च उक्तिश्च उत्सर्गौ मलमूत्रत्यागौ च शिल्पं च तानि कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः फलानि न तु तत्त्वान्तराणीत्यर्थः ॥ १६ ॥ एवं मतत्रये तत्वसङ्ख्याभेदं निरूप्य पृथङ्मतानां तात्पर्यमाह—सर्गादाविति ॥ कार्याणि नभआदिमनःपर्यन्तानि षोडश । कारणानि महदादीनि

सप्त । तद्रूपिणी सती प्रकृतिः । अस्य विश्वस्य सर्गादौ गुणैः सृज्यत्वावस्थां धत्ते उपादानकारणत्वात् पुरुषस्त्वव्यक्तः अपरिणामी निमित्तभूतः केवलमीक्षते । अतः परिणा-
मिन्याः प्रकृतेः पुरुषो भिन्न इति सिद्धम् ॥ १७ ॥ तत्त्वैरारब्धकार्यस्य तदन्तर्भावमभिप्रेत्याह—व्यक्तादय इति ॥ प्रकृतेरुत्पन्ना व्यक्तादयो महदादयो ये धातवो जगत उपादा-
नभूतास्ते पुरुषस्येक्षया लब्धवीर्याः संहताः परस्परं मिलिताश्च विकुर्वाणाः परिणामान्तरं प्राप्नुवन्तः प्रकृतेर्बलात् तामाश्रित्य तदा पूरसाहाय्येन ब्रह्माण्डं कार्यं सृजन्तीत्यन्वयः
॥ १८ ॥ सप्तैवेति ॥ सप्तैव धातवः पदार्थाः तत्त्वानि इति पक्षश्चेत्तत्र पक्षे खादयः आकाशादीनि पञ्च महाभूतानि ज्ञानं जानातीति द्रष्टा जीवः उभयोर्द्रष्टृदृश्ययोराधार आत्मा
परमेश्वरश्चेति सप्त । अस्मिन् पक्षे प्रकृत्यादीनां कारणत्वेनाकाशादिष्वन्तर्भावः । तेभ्यः सप्तभ्य एव देहेन्द्रियासवः कार्याणि जायन्त इत्यर्थः । तेषां तत्रान्तर्भाव इत्यर्थः
॥ १९ ॥ षडिति ॥ षडेव तत्वानि इत्यत्रापि पक्षे पञ्च महाभूतानि षष्ठश्च परः पुमानीश्वरः स च पुरुषः आत्मनः संभूतैः उत्पन्नैस्तैराकाशादिभिर्युक्तः इदं ब्रह्माण्डं सृष्ट्वान्त-

**व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ॥ लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥ सप्तैव धातव इति तत्रार्थाः पञ्च खादयः ॥**
**ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥ १९ ॥ षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ॥ तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत्**
**॥ २० ॥ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ॥ जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥ संख्याने सप्तदशके भूतमात्रेन्द्रिया-**
**णि च ॥ पञ्च पञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥२२॥ तद्वत्षोडशसंख्याने आत्मैव मन उच्यते ॥ भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयो-**
**दश ॥ २३ ॥ एकादशत्वमात्माऽसौ महाभूतेन्द्रियाणि च ॥ अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥ २४ ॥**

र्यामितया समुपाविशत् । अस्मिन्नपि पक्षे भौतिकानां भूतान्तर्भावः जीवस्य च परमात्मान्तर्भावो बोध्यः ॥२०॥ चत्वारीति ॥ चत्वार्येव तत्वानीति तत्रापि पक्षे तेजः आपो-
ऽन्नं पृथ्वीति त्रीणि आत्मनः जातानीत्यात्मा चतुर्थः इति चत्वारि तत्वानि प्रकृत्यादीनां तु कारणतयैष्वन्तर्भावः आकाशवाय्वोरेतेष्वेवान्तर्भावोऽनङ्गीकारो वा तैरेव चतुर्भि-
रवयविनो विश्वस्येदं जन्म जातमभूत् ॥२१॥ सङ्ख्यान इति ॥ सप्तदशके सङ्ख्याने गणने आकाशादिपञ्च भूतानि शब्दादीनि पञ्च तन्मात्राणि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि
एकेन मनसा सह षोडश आत्मा तु सप्तदश स्मृतः जीवेश्वरयोरभेद एव ॥ २२ ॥ तद्वदिति ॥ तद्वत् षोडशसङ्ख्याने आत्मैव संकल्पयन्मन उच्यते । त्रयोदशपक्षे महाभूतानि
तन्मात्रैः सहैकीकृतानि पञ्चैव ज्ञानेन्द्रियाणि च तत्प्रकाशकानि पञ्चैव मनश्चैकमिन्द्रियाधिष्ठातृ आत्मा च द्विविधः एवं त्रयोदश ॥ २३ ॥ एकेति ॥ एकादशत्वपक्षे पञ्च
महाभूतानि पञ्च ज्ञानेन्द्रियाणि जीवमनसोरात्मान्तर्भावेनैतान्येवैकादश । नव पक्षे पञ्च भूतानि मनोबुद्ध्यहङ्काराः अष्ट प्रकृतयः पुरुषश्चेति नव विकाराणां तदन्तर्भावः॥२४॥

इतीति ॥ इत्येवं मुनिभिः तत्वानां नानाविधं प्रसङ्ख्यानं कृतं तच्च युक्तिमत्वात् सर्वमपि न्याय्यं यतो विदुषां किमशोभनम् ॥ २५ ॥ प्रकृतिरिति सार्द्धम् ॥ यद्यपि प्रकृतिः पुरुषश्चेत्युभौ आत्मना जडाजडस्वभावेन विलक्षणौ तथाऽप्यन्योन्यापाश्रयात् परस्परपरिहारेणाप्रतीतेस्तयोर्भिदा न दृश्यते । अन्योन्यापाश्रयत्वमाह । प्रकृतौ तत्कार्ये देहे हि एवात्मा लक्ष्यते तथाऽऽत्मन्येव प्रकृतिश्च लक्ष्यते तेन विना तस्या अप्रतीतेः । अहमित्यभेदेनैव प्रतीतेर्देहात्मनोर्भेदो नैव कदापि लक्ष्यत इत्यर्थः ॥ २६ ॥ एवमिति ॥ हे पुण्डरीकाक्ष हे सर्वज्ञ एवं मे हृदि वर्त्तमानं महान्तं संशयं नयेन युक्त्या नैपुणं प्रावीण्यं येषां तैर्वचोभिश्छेत्तुं त्वमेवार्हसि । प्रकृतेः सकाशात्पृथगात्मानं प्रदर्शयेति भावः ॥ २७ ॥ त्वत्त इति ॥ हि यस्मात् अत्र संसारे जीवानां यथार्थज्ञानं त्वत्तः त्वत्प्रसादादेव भवति । ज्ञानप्रमोषो ज्ञानभ्रंशश्च तव शक्तितः अविद्यातो भवति । हि अतः आत्ममायाया गतिं मार्गं विस्तारं त्वमेव वेत्थ जानासि । अपरश्च न वेद ॥२८॥ प्रकृतिपुरुषयोर्विकारित्वाविकारित्वाभ्यां सापेक्षत्वनिरपेक्षत्वाभ्यां प्रकाश्यत्वप्रकाशकत्वाभ्यां

इति नानाप्रसंख्यानं तत्त्वानामृषिभिः कृतम् ॥ सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥२५॥ उद्धव उवाच ॥ प्रकृतिः पुरुषश्चोभौ यद्य-प्यात्मविलक्षणौ ॥ अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ॥ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ॥ २६ ॥ एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि ॥ छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ॥ २७ ॥ त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः ॥ त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २८ ॥ श्रीभगवानुवाच ॥ प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ॥ एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २९ ॥ ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥ दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिद्ध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः ॥ ३१ ॥

भेदं वक्तुमाह—प्रकृतिरिति ॥ हे पुरुषर्षभ या महदादिरूपेण परिणामिनी सा प्रकृतिरिति । यस्तु अपरिणामी स पुरुषश्चेति विकल्पस्तयोरत्यन्तभेद एव यतो गुणानां व्यतिकरो मेलनं क्षोभः स आत्मा यस्य तत्कृत इत्यर्थः । एष सर्गः सृज्यत इति सर्गो देहेन्द्रियान्तःकरणादिसङ्घातो वैकारिकः जन्मादिनानाविकारवान् ॥२९॥ नानात्वमाह—ममेति ॥ अङ्ग हे उद्धव गुणमयी मम मायाप्रकृतिरनेकधा विकल्पं भेदं तद्बुद्धीश्च गुणैर्विधत्ते वैकारिकः अनेकविकारवानपि स्थूलेन मार्गेण तावत्त्रिविधः । तत्र एकं रूपम् अध्यात्मम् । अथ द्वितीयमधिदैवम् । अन्यत् तृतीयम् अधिभूतम् ॥३०॥ तानि विवृणोति—दृगिति ॥ दृक् चक्षुः अध्यात्मं रूपमधिभूतम् । अत्र रन्ध्रे चक्षुर्गोलके प्रविष्टम् आर्कं वपुः सूर्यांशोऽधिदैवमिति । तत्र चक्षुषा रूपं ज्ञायते तदन्यथानुपपत्त्या चक्षुः सिद्ध्यति । तत्प्रवृत्त्यन्यथानुपपत्त्या तदधिष्ठात्री देवता सिद्ध्यति । ततश्चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमि-त्येवमेतत् त्रयं परस्परं सिद्ध्यति । अत्र रन्ध्रे इत्युक्तविशेषणव्यावर्त्यमाह । दृष्टान्तोपयोगितया यस्तु खे आकाशे मण्डलात्मार्कः स तु चक्षुर्विषयोऽपि स्वतः प्रतियोग्यपेक्षां

विनैव सिद्ध्यति यत् । यस्मात् यः आत्मा स एषाम् अध्यात्मादीनाम् आद्यः कारणभूतः अतः एकरूपोऽभिन्नश्च तस्मादेतेभ्यः अपरो भिन्नः स च स्वयानुभूत्या स्वतः सिद्धप्रकाशेन अखिलानां सिद्धानां परस्परं प्रकाशकानामध्यात्मादीनामपि सिद्धिः प्रकाशो यस्मात्स प्रकाशकः सर्वेषामपि सामान्यतश्चित्प्रकाशविषयत्वात् ॥ ३१ ॥ चक्षुषि दर्शितं त्रैविध्यमिन्द्रियान्तरेष्वप्यतिदिशति—एवमिति अर्द्धम् ॥ यथा चक्षुः एवं त्वगादि त्वक् स्पर्शो वायुरिति । श्रवणादि । श्रवणं शब्दो दिश इति । जिह्वादि जिह्वा रसो वरुण इति । नासादि नासा गन्धोऽश्विनाविति । चित्तेन युक्तं चित्तादि । चित्तं चेतयितव्यं वासुदेव इति । उपलक्षणमिदम् । मनो मन्तव्यं चन्द्र इति । बुद्धिर्बोद्धव्यं ब्रह्मेति । अहङ्कारोऽहङ्कर्तव्यं रुद्र इति । एवं त्रिविधमित्यर्थः ॥ ३२ ॥ नच पुनरपि वैलक्षण्यमेवोक्तम् । त्रिविधप्रपञ्चव्यतिरिक्तात्मप्राप्तिस्त्वहङ्कारनिवृत्त्या सापि त्रिविधविकल्पनि-वृत्त्यैवेत्याशयेनाह—योऽसाविति ॥ गुणानां क्षोभं साम्यत्यागं करोतीति गुणक्षोभकृत् कालः परमेश्वरो वा तस्मान्निमित्तात् प्रधानं मूलमुपादानं यस्य तस्मान्महतः प्रसूतः वैकारिकः सात्विकः तामसः ऐन्द्रियो राजसश्चेति त्रिवृत् त्रिविधो योऽसौ विकारः अहं अहङ्कारः स एव मोहेन स्वरूपाज्ञानेन यो विकल्पो देहोऽहं मनुष्योऽहमित्यादिर्भे-

एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३२ ॥ योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ॥ अहं त्रिवृन्मो-हविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥ ३३ ॥ आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ॥ व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३४ ॥ उद्धव उवाच ॥ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ॥ उच्चावचान्यथा देहान्गृह्णन्ति विसृजन्ति च ॥ ३५ ॥ तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ॥ न ह्येतत् प्रायशो लोके विद्वांसः सन्ति वञ्चिताः ॥ ३६ ॥

दस्तस्य हेतुरित्यर्थः ॥ ३३ ॥ तन्निवृत्तिस्त्वात्मज्ञानेनेत्याशयेनाह—आत्मेति ॥ भिदार्थनिष्ठः भिदया भेदेनावस्थितो योऽर्थः परमार्थभूत आत्मा तन्निष्ठस्तद्विषयो देहव्यतिरिक्त आत्मास्तीति नास्तीति च यः पुंसां विवादः स हि यस्मात् आत्मनो यत् अपरिज्ञानं तन्मयः ततो जातः । यद्वा । स सर्वोऽपि विवादः भिदाऽर्थनिष्ठ एव नतु वस्तुमात्र-निष्ठः । अत आत्मापरिज्ञानमयः मोहमयः । अतो व्यर्थोऽपि आत्मसाक्षात्कारेण बाधयोग्यत्वान्मिथ्याभूतोऽपि स्वलोकात् स्वरूपभूतान्मत्तः परावृत्ता विमुखा धीर्येषां तेषां नैवोपरमेत नैव निवर्तते । तद्भावः । अत आत्मसाक्षात्कारादेव तन्निवृत्तिर्नान्यथेत्युत्तरमुक्तं ज्ञेयम् ॥ ३४ ॥ त्वत्त इति ॥ हे प्रभो हे गोविन्द त्वत्तः परावृत्तधियो जना यथा स्वकृतैः कर्मभिः उच्चावचान् उत्कृष्टान् अपकृष्टांश्च देहान् गृह्णन्ति विसृजन्ति त्यजन्ति च ॥ ३५ ॥ तदिति ॥ तत् अनात्मभिः अल्पबुद्धिभिः दुर्विभाव्यम् अवितर्क्यम् । अतस्त्वमेव ममाख्याहि । हि यस्मात् एतद्विद्वांसः प्रायशो लोके न सन्ति यतस्ते वञ्चिताः परं मायया मोहिता इत्यर्थः । यद्वा । एतद्विद्वांसो वञ्चिता न सन्ति । अविद्वांसस्तु वञ्चिता एव । अत्र व्यापकस्यात्मनो देहाद्देहान्तरगमनम् अकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमित्याशय उत्तरवलादुन्नीयते ॥ ३६ ॥

लिङ्गशरीराध्यासेन सर्वं घटत इत्युत्तरमाह—मन इति ॥ इन्द्रियैः पञ्चभिरिति प्रधानत्वेन ज्ञानेन्द्रियाणां निर्देशस्तेनैव पञ्च भूतसूक्ष्माणि पञ्च कर्मेन्द्रियाण्यपि ज्ञेयानि । तैः पञ्चदशभिर्युक्तं नृणां जीवानां मनो मनः प्रधानं कर्ममयं कर्माधीनं लिङ्गशरीरं लोकाल्लोकं देहाद्देहान्तरं प्रति याति । आत्मा जीवस्तु ततोऽन्योऽपि तन्मनोऽनुवर्तते तद्भेदाभिमानेनानुगच्छतीत्यर्थः ॥ ३७ ॥ ननु मनसोऽपि पूर्वदेहवियोगो देहान्तरप्राप्तिश्च कथमित्याशङ्क्य स्मृतियोगवियोगाभ्यामिति वक्तुं तयोः कारणमाह—ध्यायेदिति ॥ कर्मतन्त्रं देवादिशरीरप्रापकफलोन्मुखकर्माधीनं मनः कर्मोपस्थापितान् दृष्टान् वा अनुश्रुतान् वेदोक्तान् वा विषयान् मरणसमये ध्यायत् भवति । अथानन्तरं ध्यायमानेषु विषयेषु उद्यत् आविर्भवत् पूर्वविषयेषु च सीदत् लीयमानं भवति तदनु तदनन्तरं तस्य पुरुषस्य स्मृतिः पूर्वापरानुसन्धानं नश्यति ॥ ३८ ॥ विषयेति ॥ एवं कस्यचित् कर्मविशेषस्य हेतोः प्रारब्धकर्मसमाप्तेर्हेतोरित्यर्थः । विषयेषु देवादिशरीरेष्वाभिनिवेशेन यत्पुराऽऽत्मानं पूर्वदेहं मनो न स्मरेत् यातनादेहाभिनिवेशेन भयशोकादेः देवादिदेहाभिनिवेशेन हर्षतर्षादेर्वा हेतोः पूर्वदेहस्यात्यन्तविस्मृतिरेव जन्तोस्तदभिमानिनो जीवस्य मृत्युरुच्यते नतु देहवत् विनाश इत्यर्थः ॥ ३९ ॥ जन्मेति ॥ हे भूरिद पुंसो जीवस्य जन्म तु विषयस्य

श्रीभगवानुवाच ॥ मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ॥ लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥ ३७ ॥ ध्यायेन्मनोऽनुविषयान् दृष्टान् वाऽनुश्रुतानथ ॥ उद्यत्सीदत् कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ॥ ३८ ॥ विषयाभिनिवेशेन नात्मानं यत्स्मरेत् पुनः ॥ जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३९ ॥ जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ ४० ॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥ तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥ ४१ ॥ इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि ॥ बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद् यथा ॥ ४२ ॥

देहादेरात्मतया स्वीकृतिमभिमानं प्राहुः । नतु देहवदुत्पत्तिं न च पुत्रादिदेहवत्प्रीत्यतिशयमात्रेणात्मत्वं किंतु सर्वभावेन अभेदेनाभिमानमात्रेण । यथा स्वप्नश्च मनोरथश्चेति तथेत्यर्थः । " सर्वो द्वन्द्वो विभाषयैकवद्भवति " इति एकवचनम् ॥ ४० ॥ दृष्टान्तौ विवृणोति—स्वप्नमिति ॥ वर्तमानदेहस्थो जीवो यथा प्राक्तनं स्थूलदेहं न स्मरति एवं वर्तमानस्वप्नस्थो मनोरथस्थो वा जीवः प्राक्तनं स्वप्नं मनोरथं वा न स्मरति । अपूर्वं च पूर्वमिवानुपश्यति । यद्वा । पूर्वं च पूर्वसिद्धमप्यात्मानम् अपूर्वमिव अद्य जातमिवानुपश्यति । तथा अहं षाड्वर्षिक इत्यादि अपूर्वमिव पश्यति ॥ ४१ ॥ इन्द्रियेति ॥ इन्द्रियाणामयनमाश्रयं शरीरं तस्य सृष्ट्या उत्पत्त्या । यद्वा । इन्द्रियायनं मनः तस्य देहान्तराभिनिवेशेन या सृष्टिस्तया वस्तुनि परमार्थभूते आत्मनि तदभिमानेनेदमुत्तममध्यमनीचरूपं विश्वतैजसप्राज्ञरूपं देहेन्द्रियान्तःकरणरूपं वा त्रैविध्यमसदपि भाति । तदभिमानेनैवात्मा बहिरन्तर्भिदाहेतुर्भवति । बाह्यान् शब्दादीन् विषयान् आन्तरान् सुखादींश्च पश्यतीत्यर्थः । यथा जनो जीवः स्वप्ने बहून् असतो जनान् देहान्

कुर्वन् बहुरूपो भाति । तत्राहंममाभिमानेन बाह्याभ्यन्तरविषयाननुभवति च तथेत्यर्थः । यद्वा । असज्जनकृत् दुष्टपुत्रोत्पादकः जनः पिता स्वयं समोऽपि पुत्राभिमाननस्तद्-रिमित्रादिषु यथा भेदहेतुर्भवति तद्वत् ॥ ४२ ॥ प्रसिद्धौ जन्ममृत्यू निरूप्य सूक्ष्मावपृष्टावपि तौ वैराग्याय निरूपयति—नित्यदेति ॥ अङ्ग हे उद्धव नित्यदा प्रतिक्षणम्। दा आर्षः । भूतानि शरीराणि भवन्ति उत्पद्यन्ते न भवन्ति नश्यन्ति च । तथापि कालस्यातिसूक्ष्मत्वाचद्वेगकृतं तत् भवनाभवनं चाविवेकिभिर्न दृश्यते । एवं प्रतिक्षणोत्पत्ति-विनाशानङ्गीकारे देहारम्भकपरमाण्वाद्यवयवसंयोगविभागासंभवे वृद्धिह्रासाद्यवस्थानुपपत्तेः ॥ ४३ ॥ सूक्ष्मयोर्जन्ममरणयोः सत्त्वं साधयति—यथेति ॥ यथार्चिषां ज्वालानां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिः अवस्थाविशेषाः कालेन कृताः तथैव सर्वभूतानां देहानां वयोवस्थादयः कालकृताः । आदिशब्देन तेजोबलकामकौ-शलादीनां ग्रहणम् । तथा चानुमानम् । "विमतं देहादि प्रतिक्षणोत्पत्तिविनाशवत् । अवस्थाभेदवत्त्वात् दीपज्वालादिवत्" इति ॥ ४४ ॥ ननु स एवायमिति प्रत्यभिज्ञा कथं तत्राह—सोऽयमिति ॥ सादृश्यादेवार्चिषां क्षणमात्र एवोद्भूयोद्भूय लीनानां पुञ्ज एव यथा सोऽयं दीप इति प्रत्यभिज्ञा यथा च स्रोतसां प्रवाहवतां जलानां क्षणमात्रे दू-

नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ॥ कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ ४३ ॥ यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ॥ तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ॥ ४४ ॥ सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ॥ सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥४५॥ मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ॥ म्रियते वाऽमरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः॥४६॥ निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ॥ वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४७ ॥

रंगतानामागमापायिनामेव तदिदं जलमिति धीर्गीश्च मृषा । तथैव मृषा व्यर्थमेवायुर्येषां तेषामविवेकिनामेव सोऽयं पुमानिति नृणां बहूनां शरीरिणां विषयैर्धीर्गीश्च मृषैव । विवे-किनां त्वेवं बुद्धिर्न भवति ॥ ४५ ॥ ननु देहाध्यासवतः कर्मजन्ममरणानि सन्ति नान्यस्येति व्यवस्था कथं घटते । यथा घटस्य पुरुषभेदेन सत्वमसत्वं च न घटते इत्याशङ्क्य अज्ञस्यापि वस्तुतस्तदभावादित्याह—मेति ॥ स्वस्य आत्मनः कर्मणा बीजभूतेन सोऽप्ययं पुमान् अज्ञोऽपि जीवो वस्तुतो मा जायते मा च म्रियते वा । तथापि भ्रान्त्या देहाद्यध्यासात् अजन्माऽपि जायत इव अमरोऽपि म्रियत इव । यथा महाभूततेजोरूपोऽग्निराकल्पान्तमवस्थितोऽपि दारुसंयोगवियोगाभ्यां जन्मनाशौ प्राप्त इव भ्रान्त्या प्रतीयते तद्वदित्यर्थः ॥ ४६ ॥ निषेकेति ॥ निषेको जठरे प्रवेशः गर्भस्तन्मध्ये वृद्धिर्जन्मप्रसवः । बाल्यमापञ्चमाब्दात् । कौमारमाषोडशाद्वर्षात् । ततो यौवनमाप-ञ्चचत्वारिंशतः । ततो वयोमध्यमाषष्टिवर्षात् । तत उपरि यावज्जीवं जरा तत उपरि मृत्युः । एवं तनोः शरीरस्य नवावस्थाः ॥ ४७ ॥

एता इति ॥ एता मनोरथमयीः मनोविकारप्राप्ता उच्चावचा अन्यस्य देहस्य तनूः अवस्थाः गुणसङ्गात् देहाद्यध्यासात् जीवः कश्चिदुपादत्ते गृह्णाति। पुनः कचित् परमेश्वरानुग्रहतः कचित्कथंचित् जहाति च ॥ ४८ ॥ आत्मन इति ॥ पितृदेहस्यौर्ध्वदेहिकं कुर्वतोऽप्ययदर्शनात् । पुत्रदेहस्य च जातकर्माणि जन्मदर्शनादात्मनः स्वदेहस्याऽपि भवाप्ययावनुमेयौ। भवशब्देन निषेकगर्भजन्मानि ज्ञेयानि। एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयं भवाप्ययरूपं लक्षणं यस्य तादृशः द्वयलक्षणो न भवति किन्तु भवाप्ययरहितो भवतीत्यर्थः ॥ ४९ ॥ तरोरिति ॥ यः बीजविपाकाभ्यां तरोः व्रीह्यादेः फलपाकान्तस्य जन्मसंयमौ विद्वान् भवति। बीजात्तरोर्जन्म विपाकात् शोषात्तस्य संयमं विनाशं च यो जानाति स द्रष्टा तरोर्विलक्षणो भिन्नश्च यथा भवति। एवं तनोर्द्रष्टा जीवोऽपि ततः पृथक् अतस्तत्र वर्तमानोऽपि यो विद्वान् स भवाप्ययाभ्यां न सम्बध्यत इत्याशयः ॥ ५० ॥ प्रकृतेरिति ॥ यः पुमान् अबुधः स्वरूपानभिज्ञः स एवमुक्तप्रकारेण प्रकृतेः सकाशादात्मानमविविच्य देहादिलक्षणतया अज्ञात्वा तत्वेन परमार्थदृष्ट्या स्पर्शेषु विषयेषु संमूढः आसक्तः सन् संसारं प्रतिपद्यते ॥ ५१ ॥ सत्वेति ॥ सत्वसङ्गः सत्वकार्यशमदमाद्यभिनिवेशस्तस्मात् कर्मभिस्तदनु-

**एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसङ्गादुपादत्ते क्वचित्कश्चिज्जहाति च ॥ ४८ ॥ आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥ ४९ ॥ तरोर्बीजविपाकाभ्यां यो विद्वान् जन्मसंयमौ ॥ तयोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥५०॥ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ॥ तत्त्वेन स्पर्शसंमूढः संसारं प्रतिपद्यते ॥५१॥ सत्त्वसङ्गादृषीन् देवान् रजसाऽसुरमानुपान् ॥ तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५२ ॥ नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ॥ एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥५३॥ यथाऽम्भसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५४ ॥**

रूपकर्मभिर्भ्रामितश्चालितः। मित्त्वे ह्रस्वाभाव आर्षः। पुमान् ऋषीन् देवान् पुमान् देवत्वमृषित्वं वा याति। तथा रजसा कामाद्यभिनिवेशेन प्रवृत्तैः कर्मभिर्भ्रामितः असुरमानवान् असुरत्वं मानुषत्वं वा प्राप्नोति। तमसा शोकमोहाद्यभिनिवेशेन प्रवृत्तैः कर्मभिर्भ्रामितः भूतत्वं पिशाचत्वं तिर्यक्त्वम् उपलक्षणतया स्थावरतां वा याति ॥ ५२ ॥ नृत्यत इति ॥ यथा नृत्यतो गायतश्च जनान् पश्यन् पुमान्ताननुकरोति तद्गतस्वरतालादिगतिं शृङ्गारकरुणादिरसं च स्वमनस्यनुवर्त्तयति तथा अहो निष्क्रियोऽप्यात्मा बुद्धिगुणान् बुद्ध्युपस्थापितानि देहचेष्टादिरूपाणि कर्माणि पश्यन् स्वगतेनाध्यवस्यन् बलाद्गुणैरनुकार्यते। अनेन दृष्टान्तेन दृश्यधर्मो द्रष्टरि स्फुरतीति दर्शितम् ॥५३॥ उपाधिधर्माश्चोपहिते भासन्ते इत्याह—यथेति॥यथा नौकारूढैर्जनैरम्भसा प्रचलता निमित्तेन तटस्थास्तरवोऽपि चला धावन्त इव दृश्यन्ते।यद्वा। तीरस्थैर्जनैः जले प्रतिबिम्बितास्तरवोऽपि चला इव दृश्यन्ते तथा देहादिगतकर्तृत्वादयो धर्मा आत्मनि प्रतीयन्त इत्यर्थः। विषयग्राहकेण मनसा कल्पिता विषयेषु लावण्यादयो गुणाः असन्तोऽपि भासन्तेऽतो मनोनि-

बन्धन एव संसारः इत्यभिप्रेत्य ग्राहकगुणाश्च ग्राह्येऽवभासन्ते इत्यत्र दृष्टान्तमाह । यथा चक्षुषा भ्राम्यमाणेन भूर्भ्रमतीव दृश्यते तथा ॥ ५४ ॥ यथेति ॥ हे दाशार्ह यथा एताः प्रसिद्धाः मनोरथधियः यथा च स्वप्नदृष्टा धियो मृषा तथा आत्मनो विषयानुभवः संसारो देहाद्यात्माध्यासात्मकश्च मृषा ॥ ५५ ॥ अर्थे इति ॥ देहान्तःकरणादिनिष्ठत्वादर्थे सुखदुःखादिरूपे आत्मन्यविद्यमानेऽपि तदात्मनिष्ठतया ध्यायतः अस्य पुरुषस्य संसृतिर्जन्ममरणादिपूर्वकं दुःखानुभवो न निवर्तते । यथा स्वप्ने अनर्थागमः सर्पदंशशिरश्छेदादिर्वस्तुतः असन्नपि देहाद्यध्यासेनात्मन्यापतति । न च जाग्रत्प्रयत्नं विना तन्निवर्त्तते तथेति ॥ ५६ ॥ तस्मादिति ॥ तस्माद्विषयाभिनिवेशस्य संसारहेतुत्वात्तन्निवृत्तिप्रयत्नस्यावश्यकत्वाच्च । हे उद्धव असद्भिः दुष्पतोर्नैर्नरकपातहेतुभिरिन्द्रियैः शब्दादीन्विषयान्मा भुङ्क्ष्व । आत्मनः अधिष्ठानभूतस्याऽग्रहणाज्ज्ञानेनैव तत्र निर्भातं वस्तुतस्त्वन्तःकरणनिष्ठमेवेत्यर्थः । वैकल्पिकं सुखदुःखादिकं वस्तुभ्रमं भ्रमसिद्धं पश्य ॥ ५७ ॥ क्षिप्त इति युग्मम् ॥ असद्भिर्दुर्जनैः क्षिप्त आक्षिप्तो बहिर्निःसारितोऽवमानितो वाचा

यथा मनोरथधियो विषयानुभवो मृषा ॥ स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥ ५५ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ५६ ॥ तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः ॥ आत्माऽग्रहणनिर्भातं पश्य वैकल्पितं भ्रमम् ॥५७॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथ वा ॥ ताडितः सन्निबद्धो वा वृत्त्या वा परिहापितः ॥ ५८ ॥ निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ॥ श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥ ५९॥ उद्धव उवाच ॥ यथैवमनुबुध्येयं वद नो वदतांवर ॥ सुदुःसहमिमं मन्ये आत्मन्यसदतिक्रमम् ॥ ६० ॥ विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी ॥ ऋते त्वद्धर्मनिरताञ्छान्तांस्ते चरणालयान् ॥ ६१ ॥ इति श्रीभागवते एकादशस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

तिरस्कृतः प्रलब्धः उपहसितः असूयितः गुणवत्त्वेऽपि दोषवत्तया दृष्टः वृत्त्या जीविकया परिहापितः त्याजितः निष्ठितो निष्ठीवनक्षेपपात्रीकृतः विष्ठाक्षेपपात्रीकृतो वा मूत्रितः मूत्रेणार्द्रीकृतः । एवमज्ञैर्बहु यथा भवति तथा प्रकम्पितः आत्मनिष्ठातश्चालितः कृच्छ्रगतः कष्टं प्राप्तोऽपि श्रेयस्कामो धैर्य्यमवलम्ब्यात्मना बुद्ध्यात्मानमुद्धरेत् ॥५८॥५९॥ यथेति ॥ हे वदतां वर इमम् असद्भिः कृतमतिक्रममाक्षेपाद्यपराधं विदुषामपीत्युत्तरश्लोकादपकृष्यते । शेषे षष्ठी । आत्मनि मनसि सुदुःसहमहं मन्ये अतस्तत्सहनोपायं यथैवानुबुध्येयम् । तङभाव आर्षः । तत्सहनेन विवेकं प्राप्नुयां वा एवं तथैव नोऽस्मान् सर्वान् श्रेयस्कामान् प्रति वद ॥ ६० ॥ विदुषामिति ॥ हे विश्वात्मन् त्वद्धर्मेषु श्रवणादिषु निरतान् तव चरणमेवालय आश्रयो येषां तान् अत एव शान्तान् रागलोभसुखापेक्षादिदोषरहितान् ऋते विदुषामपि सहनोपायं जानतामपि प्रकृतिः स्वभावाख्या त्वच्छक्तिः बलीयसी । यद्वा । युग्ममेकान्वयम् ॥ ६१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । एकादशस्य द्वाविंशे व्यधाद्गङ्गासहायकः ॥ २२ ॥

त्रयोविंशे भिक्षुगीतप्रकारेण तिरस्कृतेः ॥ सहनोपायकथनं तत्र श्लोका द्विषष्टिर्मताः ॥ पञ्चोवाचेति पादोना नवषष्टिरनुष्टुभः ॥ २३ ॥ स इति ॥ श्रवणीयं वीर्यं यस्य सः मुकुन्दो भगवान् दाशार्हाणां यादवानाम् ऋषभेण भागवतेषु मुख्येन उद्धवेनाशंसितः पृष्टः तस्य भृत्यस्योद्धवस्य वचः सभाजयन् सत्कुर्वन् तं प्रति आबभाषे ॥ १ ॥ बार्हस्पत्येति ॥ हे बार्हस्पत्य बृहस्पतेः शिष्य दुर्जनैरीरितैरुक्तैर्दुर्वचनैर्भिन्नं क्षुभितमात्मानं मनः समाधातुं य ईश्वरः समर्थः स्यात्स तथाभूतः साधुरत्र लोके नास्त्येवेति त्वया सत्यमेवोक्तमिति शेषः ॥ २ ॥ नेति ॥ यथा मर्मस्था अन्तःकरणाख्यमर्मण्येव नित्यं स्थिताः परुषोक्तिरूपा इषवस्तुदन्ति व्यथयन्ति । तथा प्रसिद्धा बाणा मर्मगता न तुदन्ति । अतो यथा वाग्बाणैर्विद्धस्तप्यते तथेतरबाणैर्न तप्यत इत्यर्थः ॥ ३ ॥ तथापि मत्प्रोक्तैरुपायैः सर्वं सह्यमित्याशयेनेतिहासमाह—कथयन्तीति युग्मम् ॥ हे उद्धव इह विषये निजकर्मणां विपाकं फलं स्मरता दुर्जनैः परिभूतेन केनचिद्भिक्षुणा गीतं महापुण्यजनकमितिहासं वृद्धाः कथयन्ति । तमहं तव प्रश्नोत्तरतया वर्णयिष्यामि । त्वं समाहितः संस्तं निबोध

बादरायणिरुवाच ॥ स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ॥ सभाजयन् भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥ श्रीभगवानुवाच ॥ बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥ न तथा तप्यते विद्धः पुमान् बाणैः सुमर्मगैः ॥ यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ३ ॥ कथयन्ति महत्पुण्यमितिहासमिहोद्धव ॥ तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥ केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ॥ स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥ ५ ॥ अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ॥ वार्त्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥ ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः ॥ शून्यावसथ आत्मापि काले कामैरनर्चितः ॥ ७ ॥ दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः ॥ दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ॥ ८ ॥ तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ॥ धर्मकामविहीनस्य चुक्रुधुः पञ्च भागिनः ॥ ९ ॥

अवधारय ॥४॥५॥ अवन्तिष्विति ॥ अवन्तिषु मालवेषु देशेषु श्रिया धनादिसम्पदा आढ्यतमः महाधनी वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः कदर्यश्च स तु स्मृतावुक्तः । "आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् । देवताऽतिथिभृत्यांश्च स कदर्य इति स्मृतः" यतः कामी लुब्धोऽतिकोपन इति एवंभूतः कश्चिद्द्विजः आसीत् ॥ ६ ॥ ज्ञातय इति ॥ अतस्तस्य संबन्धिनो ज्ञातयो बान्धवा अतिथयोऽध्वनीनाश्च तेन वाङ्मात्रेणापि नार्चिताः शून्यावसथे धर्मकर्महीने गृहे देहे वा स्थित आत्मापि काले भोगावसरे कामैस्तेन नार्चितः न सन्तोषितः ॥७॥ दुःशीलस्येति ॥ दुःशीलस्य कदर्यस्येति शेषे षष्ठी । तस्य पुत्राद्या भृत्यान्ताः विषण्णाः प्रियं नाचरन् प्रत्युत तं द्रुह्यन्ते स्म । तद्भार्षः ॥ ८ ॥ तस्येति ॥ यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य तस्येति उभयलोकतश्च्युतस्य धर्मकामविहीनस्य तस्येति शेषे षष्ठी । पञ्च भागिनः देवपितृभूतमनु-

प्यब्रह्मर्षयः पञ्च महायज्ञदेवताः चुक्रुधुः । अर्जितस्य हि वित्तस्य पञ्चमहायज्ञैस्तद्देवताराधनमेव प्रयोजनं तदभावाच्चे चुक्रुधुः ॥ ९ ॥ तदिति ॥ हे भूरिद तेषां पञ्चयज्ञभागिनामवध्यानमनादरस्तेन विस्रस्तो नष्टः पुण्यस्कन्धः अर्थलाभमात्रहेतुः पुण्यलेशो यस्य तस्य बह्वायासैः कृष्यादिभिः केवलं परिश्रमो यस्मिन् स एवंभूतोऽर्थोऽपि निधनं गतो नाशं प्राप्तः ॥ १० ॥ ज्ञातय इति ॥ हे उद्धव तस्य धनं किं चिज्ज्ञातयो जगृहुः । किञ्चिद्दस्यवो जगृहुः । तथा दैवतो गृहदाहादिना कालतः निखातं धान्यादि नृपः पार्थिवेभ्यश्चेति द्वन्द्वैक्यं तस्मात् च ब्रह्मबन्धोरर्थो निधनमगच्छदिति पूर्वेणान्वयः ॥११॥ स इति ॥ स चैवं द्रविणे नष्टे सति धर्मकामविवर्जितः स्वजनैः उपेक्षितश्च सः दुरत्ययां चिन्तामाप ॥१२॥ तस्येति ॥ नष्टरायः नष्टो रा अर्थो यस्य तस्य अत एव तपस्विनः सन्तप्तस्य अत एव खिद्यतः खेदं प्राप्तस्य । शता आर्षः । अत एव बाष्पमश्रु कण्ठे यस्य तस्य एवं नष्टं धनादिकं ध्यायतस्तस्य सुमहान्निर्वेदः वैराग्यपूर्वको विवेकः समभूत् ॥ १३ ॥ स इति ॥ स च जातनिर्वेदो विप्र इदमाह । अहो अत्युत्कटं मम कष्टं

**तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ॥ अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥१०॥ ज्ञातयो जगृहुः किंचित्किंचिद्दस्यव उद्धव ॥ दैवतः कालतः किंचिद् ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥ स एवं द्रविणे नष्टे धर्मकामविवर्जितः ॥ उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥ तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः ॥ खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥ स चाहेदमहो कष्टं वृथात्मा मेऽनुतापितः ॥ न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥ प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ॥ इह चात्मोपतापाय मृतस्य नरकाय च ॥१५॥ यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ॥ लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥ अर्थस्य साधने सिद्धे उत्कर्षे रक्षणे व्यये ॥ नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥**

जातम् । यतो मे मया आत्मा देहोऽयं वृथैवानुतापितः । यस्य ममार्थार्जनायास ईदृशोऽत्युत्कटस्तस्य ममार्थो न धर्माय न वा कामायाभूत् । वृथैव नष्ट इति शेषः ॥ १४ ॥ प्रायेणेति ॥ प्रायेण कदर्याणाम् अर्थाः कदाचन सुखाय न भवन्ति । नरकाय सत्यप्यर्थे नित्यनैमित्तिककर्माननुष्ठानात् । स्पष्टमन्यत् ॥ १५ ॥ यश इति ॥ यत् यशस्विनां शुद्धं यशः तथा ये गुणिनां श्लाघ्या गुणाः तान् तानि च स्वल्पः अपि लोभः हन्ति । यथा श्वित्रः श्वेतकुष्ठम् ईप्सितं रूपं हन्ति तथेत्यर्थः ॥ १६ ॥ अर्थस्येति ॥ अर्थस्य साधनादौ यथासंभवं नृणामायासादयो भवन्ति इत्यन्वयः । तत्र साधने उत्पादने सिद्धेऽप्यर्थे तस्योत्कर्षे संवर्द्धने रक्षणे चायासादयः सर्वे व्यये विनियोगे नाशे उपभोगे चेति द्वन्द्वैक्यम् । तेषु चिन्ताशोकमात्रम् । आयासः कायक्लेशः त्रासो यस्मात्कस्माद्भयं भ्रमोऽधर्मे धर्मबुद्धिः उपकारिण्यनुपकारिबुद्धिरित्याद्यूह्यम् ॥ १७ ॥

न केवलमायासादयो दुःखहेतव एव भवन्ति किन्तु स्तेयादयः पापहेतवोऽपीत्याह—स्तेयमिति युग्मम् ॥ अर्थप्राप्त्यर्थाः स्तेयादयः षडनर्थाः प्राप्तेऽप्यर्थे स्मयादयो व्यसनैः सह नवानर्थाः । हि यस्मात् अर्थ एव मूलं कारणं येषां ते । एते पञ्चदशानर्थाः नरकादिदुःखहेतवो नृणां भवन्ति । तस्मात् अर्थ इत्याख्या नाममात्रं यस्य । वस्तुतस्तु नरकादिदुःखानर्थहेतुत्वादनर्थ एव तं श्रेयोऽर्थी मोक्षार्थी दूरतस्त्यजेदिति स्तेयं चौर्यं हिंसा परपीडा अनृतं मिथ्यावचनं दम्भः परवञ्चनानुरूपवेशधारणं कामः परकीयवित्तापहारेच्छा क्रोधस्तत्प्रतिघातकेऽभिज्वलनात्मकश्चित्तविकारः स्मयो गर्वः स्वास्मिन् महत्त्वबुद्धिः मदो विहिताविहितविवेकशून्यता भेदः स्वपरभेददर्शनं वैरमविश्वासः संस्पर्द्धा परोत्कर्षासहनं व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि । केचित्तु अर्थस्य साधनादौ आयासादयः व्यसनान्ता भवन्ति । तत्रायासादयो दुःखमात्रहेतवः स्तेयादयः पञ्चदश पापहेतवोऽपीति श्लोकत्रयमेकान्वयतया व्याचक्षते ॥ १८ ॥ १९ ॥ भेदवैरस्पर्द्धाः प्रपञ्चयति—भिद्यन्त इति ॥ एकास्निग्धाः एके एकप्राणाश्च ते आस्निग्धाः अतिप्रियाश्च एवंभूता अपि एते भ्रात्रादयः सुहृदन्ताः सर्वे काकिणिना । पुंस्त्वमार्षम् । विंशतिवराटिका काकिणी। तया तावन्मात्रेण अर्थेन हेतुना सद्य एव भिद्यन्ते भेदबुद्धयो भवन्ति तथा

स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ॥ भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥ एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् ॥ तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥१९॥ भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ॥ एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥ २० ॥ अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ॥ त्यजन्त्याशुस्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥ लब्ध्वा जन्माऽमरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ॥ तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥ स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ॥ द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥ देवर्षिपितृभूतानि ज्ञातीन् बन्धूंश्च भागिनः ॥ असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥

अरयः शत्रवः कृता भवन्ति ॥ २० ॥ अर्थेनेति ॥ हि यतः अल्पीयसाऽप्यर्थेन एते संरब्धाः क्षुभितचित्ता दीप्तमन्यवः स्पृधः स्पर्द्धमानाश्च भवन्ति । स्पृध इत्यार्षम् । अतः सहसा सौहृदमुत्सृज्य आशु शीघ्रमेव त्यजन्ति गृहान्निःसारयन्ति घ्नन्ति च ॥ २१ ॥ लब्ध्वेति ॥ अमरैरपि प्रार्थ्यं मानुष्यं जन्म तत्रापि द्विजाग्र्यतां श्रेष्ठमधिकारिकुलं ब्राह्मण्यं लब्ध्वाऽपि तदनादृत्य ये स्वार्थं घ्नन्ति आत्महितं मोक्षं न साधयन्ति ते पूर्वोक्तानर्थपरा अशुभां गतिं नरकादिकमेव यान्ति ॥ २२ ॥ स्वर्गेति ॥ स्वर्गापवर्गयोर्द्वारं साधनभूतमिमं लोकं मनुष्यदेहं प्राप्य को वा मर्त्यः अनर्थस्य धामनि आश्रये द्रविणे धनेऽनुसज्जेत आसक्तिं कुर्यात् ॥ २३ ॥ देवेति ॥ ऋषयो मनुष्ययज्ञब्रह्मयज्ञयोर्देवताः देवपितृभूतानीतरयज्ञत्रयदेवताः ज्ञातयः सगोत्राः बन्धवो विवाहादिना सम्बद्धास्तान् अन्यांश्च भागिनो भागार्हान् आत्मानं चासंविभज्य अन्नादिविभागेनासंतर्प्य यः केवलं यक्षवित्तवद्रक्षणीयं वित्तं यस्य सः अधो नरके पतति ॥ २४ ॥

व्यर्थयेति ॥ व्यर्थया अर्थेहया धनार्जनव्यापारेण प्रमत्तस्य मम वित्तं वयो बलं च सर्वं गतमिति शेषः । येन वित्तादिना कुशलाः धर्मादयः फलानि सिध्यन्ति । यद्वा । कुशला विवेकिनः सिद्धयन्ति विमुच्यन्ते । इदानीं त्वहं जरठो वृद्धः अतः सामर्थ्याभावात्किं नु फलं साधये ॥ २५ ॥ स्वगतं पृच्छत्युत्तरयति च—कस्मादिति ॥ एवमनर्थं विद्वानपि कस्मात्कारणात् असकृत् निरन्तरं व्यर्थयाऽर्थेहया धनार्जनव्यापारेण संक्लिश्यते नूनं निश्चितमेतत् । अयं लोकः सर्वोऽपि जनः कस्यचिन्मायया सुविमोहितः इति ॥ २६ ॥ किमिति ॥ मृत्युना ग्रस्यमानस्य जनस्य धनादिभिः चतुर्भिः उत पुनरपि जन्महेतुभिः कर्मभिर्वा किं प्रयोजनम् । तद्विनाशे स्वमरणे वा तद्वियोगस्यावश्यकत्वात् ॥ २७ ॥ तदानीमेवोत्पन्नविवेको हृष्यन्नाह—नूनमिति॥ नूनं मे मह्यं सर्वदेवमयो हरिर्भगवान् तुष्टः । येन हरिणा एतां वित्तनाशादिरूपां दशामहं नीतः। तथा येन तुष्टेन हेतुना आत्मनो मम प्लवः संसारतरणसाधनं निर्वेदो विरागश्च जातः ॥ २८ ॥ सोऽहमिति ॥ सोऽहं जातनिर्वेदो यदि आयुःकालावशेषः स्यात्तदा तेन कालावशेषेण आत्मनि मनसि

व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम् ॥ कुशला येन सिद्धयन्ति जरठः किं नु साधये ॥ २५ ॥ कस्मात्संक्लिश्यते विद्वान् व्यर्थयाऽर्थेहयाऽसकृत् ॥ कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ॥ मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥ २७ ॥ नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ॥ येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८ ॥ सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ॥ अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि ॥२९॥ तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥ श्रीभगवानुवाच ॥ इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ॥ उन्मुच्य हृदयग्रन्थीञ्छान्तो भिक्षुरभून्मुनिः ॥ ३१ ॥ स चचार महीमेतां संयतात्मेन्द्रियानिलः ॥ भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥ ३२ ॥ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः ॥ ३३ ॥

संसिद्धः सन्तुष्टः सन् आत्मनोऽखिले स्वार्थे धर्मादिसाधने अप्रमत्तः सावधानः सन् तपसाऽङ्गं शोषयिष्ये । यद्वा । विद्यया लयं नेष्यामि ॥ २९ ॥ तत्रेति ॥ तत्र स्थितौ त्रिभुवनेश्वराः देवा मामनुमोदेरन् अनुगृह्णन्तु विघ्नं मा कुर्वन्तु । ननु तथाऽपि जरठोऽल्पेन कालेन किं करिष्यसि तत्राह । यतः खट्वाङ्गो मुहूर्तेन ब्रह्मलोकं वैकुण्ठं समसाधयत् ॥ ३० ॥ इतीति ॥ इत्येवमभिप्रेत्य निश्चित्य आवन्त्यः अवन्तिदेशभवः स द्विजसत्तमः हृदयग्रन्थीन् अहङ्कारममकारानुन्मुच्य शान्तो भिक्षुर्मुनिरभूत् ॥ ३१ ॥ स इति ॥ संयता आत्मा मन इत्यादयो येन सः एतां महीं विचचार । तत्र च असङ्गः आसक्तिशून्यः अलक्षितः स्वश्रेष्ठ्यमद्योतयन् भिक्षार्थं नगरग्रामान् अविशत् ॥३२॥ तमिति ॥ हे भद्र उद्धव तं ब्राह्मणं प्रवयसं वृद्धं भिक्षुम् अवधूतं मलिनं दृष्ट्वा असज्जनाः बह्वीभिः परिभूतिभिः तिरस्कारसाधनैः पर्यभवन् अवमेनिरे ॥ ३३ ॥

केचिदिति सार्द्धम् ॥ भो भिक्षो गृहाणेति दर्शितानि सन्ति तस्मै प्रदाय च पुनस्तानि दण्डादीनि ततो मुनेराददुः आच्छिद्य जगृहुः । तङ्भाव आर्षः । स्पष्टं शेषम् ॥ ३४ ॥ अन्नमिति ॥ पापिष्ठाः भैक्षेण सम्पन्नमन्नं सरित्तटे भुञ्जानस्य अस्य मूर्द्धनि मूत्रयन्ति ष्ठीवन्ति च ॥ ३५ ॥ यतवाचमिति सार्द्धम् ॥ केचित् यतवाचं गृहीतमौनं तं बलाद्वाचयन्ति न चेद्वक्ति तदा ताडयन्ति । स्तेनश्चौरोऽयमिति वादिनः अपरे वाग्भिस्तर्जयन्ति भर्त्सयन्ति ॥३६॥ क्षिपन्तीति ॥ एष धर्मध्वजः बहिरेव ध्वजवत्पूज्यत्वसूचकदण्डधरः अन्तस्तु शठः धनाद्युपार्जने दत्तचित्तो वञ्चकः क्षीणवित्ततया स्वजनैरुज्झितः त्यक्तः सन्निमां भिक्षावृत्तिमग्रहीत् न विरक्ततया संन्यासीत्येवम् एकेऽवजानन्तस्तिरस्कुर्वन्तस्तं क्षिपन्ति निन्दन्ति ॥ ३७ ॥ अहो इति सार्द्धम् ॥ अहो एष महासारः महाबलः गिरिराडिव धृतिमान् स्थिरात्मा दृढनिश्चयश्च अतो बकवन्मौनेनार्थं साधयति इत्येवमेके एनं विहसन्ति । एके तु दुर्वातयन्ति तदुपर्यधोवायुं मुञ्चन्ति ॥ ३८ ॥ तमिति अर्द्धम् ॥ यथा क्रीडनकं क्रीडासाधनं द्विजं शुकादिपक्षिणं बध्नन्ति निरुन्धन्ति च

केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् ॥ पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ॥३४॥ अन्नं च भैक्षसंपन्नं भुञ्जानस्य सरित्तटे ॥ मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि ॥ ३५ ॥ यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत् ॥ तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ॥ बध्नन्ति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति ॥ ३६ ॥ क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः ॥ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ॥३७॥ अहो एष महासारो धृतिमान् गिरिराडिव ॥ मौनेन साधयत्यर्थं बकवद् दृढनिश्चयः ॥ इत्येके विहसन्त्येनमेके दुर्वातयन्ति च ॥३८॥ तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥ ३९ ॥ एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ॥ भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥ ४० ॥ परिभूत इमां गाथामगायत नराधमैः ॥ पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम् ॥४१॥ द्विज उवाच ॥ नायं जनो मे सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः ॥ मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् ॥४२॥

तथा तं द्विजं शृङ्खलैः बबन्धुः कारागृहादिषु निरुरुधुः ॥ ३९ ॥ एवमिति ॥ एवं भौतिकं दुर्जनादिकृतं दैहिकं ज्वरादिनिमित्तं दैविकं शीतोष्णादिप्रभवं च प्राप्तं प्राप्तं यत् दुःखं तदात्मनो दिष्टं स्वस्य प्रारब्धमवश्यं भोक्तव्यमेवेति सोऽबुध्यत निश्चितवान्न तु तेन व्याकुलो जातः ॥ ४० ॥ परीति ॥ स्वधर्मात्पातयद्भिः नराधमैर्दुर्जनैः परिभूतोऽपि सात्त्विकीं धृतिमास्थाय स्वधर्म एव स्थित इमां वक्ष्यमाणां गाथामगायत । तङार्षः । सात्त्विक्या धृतेर्लक्षणं च । "धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी" ॥ इति गीतायाम् ॥४१॥ अहो मे एतावद्दुःखं कः खलु दुःखदः न तावदयं जन इत्याह—नायमिति ॥ मे मम सुखदुःखयोः हेतुः अयं जनो न भवति । ननु किं प्रत्यक्षमपलपसि स्वातन्त्र्येणायं जनो दुःखद इति चेत् केषांचित्प्रेरणया ददातीत्युक्त्वाऽन्तःप्रेरकान्निषेधति। नापि देवता नाप्यात्मा न च ग्रहकर्म-

कालास्तद्धेतवो भवन्ति । तत्र हेतुमाह । यतः "मनसा ह्येव पश्यति मनसा शृणोति" इत्याद्याः श्रुतयः पर केवलं मन एव तयोः कारणमामनन्ति वर्णयन्ति । यत् यस्मान्मनस एव ससारचक्रं परिवर्तते । परिवर्तयेदिति पाठे मनः कर्तृ ॥ ४२ ॥ परिवर्त्तनमाह—मन इति ॥ बलीयः अतिबल मनः गुणान् विषयेषु रागद्वेषादिवृत्तिविशेषान् सृजति ततस्तेभ्यो गुणेभ्यः शुक्लानि सात्विकानि पुण्यानि कृष्णानि तामसानि पापानि लोहितानि राजसानि पुण्यपापमिश्राणि परस्पर विलक्षणानि कर्माणि भवन्ति । तेभ्यश्च कर्मभ्य॰ सवर्णाः कर्मानुरूपाः सृतयो योनयो भवन्ति । पुण्याद्देवताजन्मपापात् पश्वादिजन्मामिश्रात् मनुष्यजन्मेति विवेक॰ । तासु च पुनर्मनसो गुणसृष्टिस्तत॰ कर्माणि तत॰ सृतय एव ससारचक्रं परिवर्त्तते ॥ ४३ ॥ अनीह इति ॥ समीहता संकल्पविकल्पौ कुर्वता । शता आर्षः । मनसा सह नियन्तृत्वेन वर्तमानोऽपि मत्सख॰ मम जीवस्य सखा हितकर्त्ता आत्मा परमेश्वरः यतः अनीहः अहममाभिमानरहितः । तत्र हेतु॰ । हिरण्मयः प्रकाशबहुलो ज्ञानमयः अत उद्विचष्टे उच्चैः अतिरोहितज्ञानेन केवल पश्यति न दु - खसुखभाग्भवति । असौ जीवस्तु स्वलिङ्गं स्वस्मिन्नात्मनि लिङ्गयति द्योतयति संसारमिति तथा तन्मनः परिगृह्य आत्मत्वेन स्वीकृत्य तस्य मनसो गुणै कर्मभि॰ संगत

मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ॥ शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ॥ ४३ ॥ अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे ॥ मनः स्वलिङ्गं परिगृह्य कामान् जुषन्निबद्धो गुणसङ्गतोऽसौ ॥ ४४ ॥ दानं स्वधर्मो नियमो यमश्च श्रुतानि कर्माणि च सद्व्रतानि ॥ सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥४५ ॥ समाहितं यस्य मन॰ प्रशान्त दानादिभिः किं वद तस्य कृत्यम् ॥ असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ॥ ४६ ॥ मनोवशेऽन्ये ह्यभवन् स्म देवा मनश्च नान्यस्य वशं समेति ॥ भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद्वशे तं स हि देवदेवः ॥ ४७ ॥

संवद्धः गुणसङ्गात् कामान् विषयान् जुषन् सेवमानो निबद्धो भवति । आर्षः शता ॥ ४४ ॥ तस्मात्सर्वानर्थहेतुर्मन एव निग्राह्यमित्याशयेनाह—दानमिति ॥ दानादयः सद्व्रतान्ताः सर्व उपाया मनोनिग्रहलक्षण॰ अन्तो निष्ठाफल येषां ते तथाभूताः सन्ति । मनसः समाधिर्निग्रह एव परो योगो ज्ञानमिति तन्निरोध विना ज्ञानासम्भवात् ॥ ४५ ॥ समाहितमिति ॥ यस्य मनः समाहितं वशीकृतं शान्तं तस्य दानादिभि॰ किं कृत्य प्रयोजनमस्ति तद्वदेति परं प्रत्युपदिशन्निव स्वयमाह । मनोनिग्रहस्य फलस्य सिद्धत्वादिति भावः । यदि तु दानादिभिरपि यस्य मनः असंयतं वशीकृत न भवति किंतु विक्षिप्तं भवेत् । यद्वा । आलस्यादिना लीयमान भवेत् तर्हि एभिर्दानादिभिस्तस्यापर प्रयोजन किं स्यान्न किंचित् । मुख्यस्य फलस्यैवाजातत्वात्तेषां निष्फलतुल्यत्वमेवेत्यर्थः ॥ ४६ ॥ मन इति ॥ देवा इन्द्रियाणि तदधिष्ठातारो ब्रह्मादयो वाऽपि मनसो वशे अभवन् ब्रह्मरुद्रेन्द्रादिमोहस्य तत्र तत्राख्याने प्रसिद्धत्वात् । मनश्चान्यस्य देवादेरपि वशं शीघ्रं नैव समेति न गच्छति । हि यस्मात्स मनोलक्षणो देव॰ भीष्मः नानाविधससारदु॰खहे-

तुतया भयङ्करः सहसः सहीयान् बलवतोऽपि बलीयान् अतो यः पुमांस्तं भयङ्करं देवं स्ववशे युञ्ज्यात्कुर्यात् स तु देवानामपि देवः पूजनयोग्यो भगवत्तुल्य इत्यर्थः । तथा च श्रुतिः । " मनोवशे सर्वमिदं बभूव न चान्यस्य मनोवशमन्वियाय । भीष्मो हि देवः सहसः सहीयान् " इति ॥४७॥ तमिति ॥ केचित् जनाः असह्या रागादयो वेगा यस्य अरुन्तुदं मर्मव्यथकं तं मनोरूपं दुर्जयं भगवत्प्रसादेतरोपायैर्जेतुमशक्यं शत्रुं न विजित्य तत् ततः मर्त्येषु मित्राणि उपकारिणः उदासीनान् रिपूंश्च कुर्वन्ति । केचिच्च तैर्मर्त्यैः सहासन्तं नरकादिहेतुं विग्रहं कुर्वन्ति ते मूढाः मूर्खाः ॥ ४८ ॥ देहमिति ॥ अन्धा लुप्तविवेका धीर्येषां ते मनुष्याः मनोमात्रं मनोभ्रमेणैव इदं स्वदेहमहमिति पुत्रादिदेहं ममेति स्वीकृत्य एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि घोराज्ञानपूर्णे संसारे भ्रमन्ति ॥ ४९ ॥ एवं मनसः सुखादिहेतुत्वं प्रतिपाद्य नायं जनो मे इत्यत्रोक्तं जनादीनां सुखदुःखहेतुत्वाभावं प्रतिपादयति—जनस्त्विति ॥ चेत् यदि जनः सुखदुःखयोर्हेतुस्तदात्र अस्मिन्नपि पक्षे आत्मनः किं सुखदुःखयोः कर्मत्वं कर्तृत्वं वा । किमपि नास्तीत्यर्थः । यतः तत्कर्तृत्वं कर्मत्वं चोभयमपि भौमयोः भूमिविकारयोर्वध्यघातकत्वेनाभिमतयोर्देहयोरेव नत्वात्मनः । अमूर्तस्याक्रियस्य च तस्य हननादिषु कर्मत्वकर्तृत्वानुपपत्तेः । कश्चिज्जनः

तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ॥ कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून् विमूढाः ॥ ४८ ॥ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ॥ एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥ ४९ ॥ जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत् ॥ जिह्वां क्वचित् संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥५०॥ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् ॥ यदङ्गमङ्गेन निहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५१ ॥ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ॥ न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात् क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ५२ ॥

जिह्वां स्वदद्भिः संदशति तदा तस्यां वेदनायां पीडायां कतमाय कुप्येत् । दद्भ्यः कोपे ताडने वा स्वस्यैव पीडान्तरं स्यात् । एवं स्वशरीरे परशरीरे चात्मन एकत्वात्तत्रापि कोपेन पीडोत्पादनमनुचितमेव । अविवेकिनां लोके तत्र प्रवृत्तिस्तु देहाद्यध्यासेन मनोनिबन्धनाऽतो मनस एव सुखादिहेतुत्वमित्याशयः । एवमग्रेऽपि ॥ ५० ॥ दुःखस्येति ॥ सुखस्याप्युपलक्षणम् । यदीन्द्रियाधिष्ठात्री काचिद्देवता दुःखादिहेतुस्तदा तथास्तु । तत्रापि पक्षे आत्मनः किं कर्तृत्वं कर्मत्वं वा न संभवतीत्यर्थः । यतस्तदुभयं विकारयोर्विक्रियमाणयोर्देवयोरेव हस्तेन मुखेऽभिहते मुखेन च भिन्नमस्तु इति शते तदभिमानिनोर्वह्नीन्द्रयोरेव तत् दुःखं सम्भवतु न त्वमूर्तस्याऽविक्रियस्यात्मनः देवनानां च सर्वदेहेष्वभेदान्न कोऽपि कोपविषयोऽस्तीति स्वदेहदृष्टान्तेनाह । यत् यदा क्वचित्स्वशरीरे एव केनचिदङ्गेन देवताधिष्ठानेन हस्तमुखादिना किंचिदङ्गं देवताधिष्ठानं मुखहस्तादि हन्यते तदा पुरुषः कस्मै क्रुद्ध्येत । तङ्गार्थः । अत एव पूर्वं देवतानधिष्ठानभूतभूविकारदन्तजिह्वोदाहरणम् । अन्यत्पूर्ववत् ॥ ५१ ॥ आत्मेति ॥ आत्मन एव सुखदुःखाद्याकारः परिणामः

अतः स एव यदि सुखादिहेतुः स्यात्तत्र तस्मिन्नपि पक्षे अन्यतः। किं दूषणं यतोऽन्यस्मै कुप्येदित्यर्थः। यतः सुखदुःखादिनिजस्वभावसिद्धमेव नन्वात्मपरिणामोऽन्यनिमित्ततो भवत्यतोऽस्ति कोपविषय इति चेत् आत्मनोऽन्यत्किंचिद्वस्तु नास्त्येव तस्यैव सर्वात्मकत्वात् "सर्वं खल्विदं ब्रह्म" इति श्रुतेश्च । यदि तद्व्यतिरिक्तं वस्तु स्यात्तर्हि तन्मृषा भ्रान्त्यैव प्रतीतं स्यात् उपादानव्यतिरेके कार्यस्यासंभवात् । किंच । यतः आत्मव्यतिरिक्तं निमित्तं सुखं दुःखं च नास्ति अतः कस्माद्धेतोः क्रुद्ध्येत । तद्भावः ॥ ५२ ॥ ग्रहा इति ॥ चेत् यदि आदित्यादयो ग्रहा एव सुखदुःखयोर्निमित्तं तदाप्यजस्यात्मनः किं यतः जन्यत इति जनो देहस्तस्यैव जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्थास्ते ग्रहाः सुखदुःखयोर्निमित्तं भवन्ति । किंच अन्तरिक्षस्थैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादार्द्धादिदृष्ट्यादिभेदैः पीडां वदन्ति दैवज्ञाः न तु गृहकोणादिषु स्थितस्य तद्दृष्ट्यगोचरस्य पुरुषस्य ग्रहगतैव तु पीडा तल्लग्नोत्पन्ने देहे तस्याभिमानादेव भवतीति मन एव तत्र कारणम् । विवेकी पुरुषस्तु ततो ग्रहाद्देहाच्चान्य एव कस्मै क्रुद्ध्येत । तद्भावः ॥ ५३ ॥ कर्मेति ॥ सुखदुःखहेतुः कर्मैवेति चेत्तथास्तु । तत्राप्यात्मनः किं हि यस्मात् तत् कर्म तज्जनितं सुखादिकं च सर्वमेकस्य जडाजडत्वे जडचैतन्यात्मकत्वे सत्येव स्यात् ।

ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ॥ ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५३ ॥ कर्मास्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद्धि जडाजडत्वे ॥ देहस्त्वचित् पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ॥ ५४ ॥ कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ॥ नाग्नेर्हि तापो न हिमस्य तत्स्यात् क्रुद्ध्येत कस्मै न परस्य द्वन्द्वम् ॥ ५५ ॥

जडत्वाद्विकारित्वोपपत्तिः चेतनत्वाच्च हिताहितानुसन्धानं प्रवृत्त्यादिकं च संभवति । तत्र देहस्त्वचित् जड एव तस्य तदनुसंधानादि न संभवति । पुरुषः आत्मा तु सुपर्णः शुद्धज्ञानस्वरूप एव ततो विकारित्वासंभवात्सुखदुःखादिमूलं कर्मैव नास्ति । अतो विवेकी केन निमित्तेन कस्मै क्रुद्ध्येत । तद्भावः । तथा चाध्यासहेतुर्मन एव कारणमित्याशयः ॥ ५४ ॥ काल इति ॥ यदि सुखदुःखयोर्हेतुः काल एव तत्रापि पक्षे आत्मनः किं यतोऽसौ तदात्मकः ब्रह्मांशत्वात् कालब्रह्मणोरैक्यात् अंशिनः सकाशादंशस्य पीडा नास्तीत्यत्र दृष्टान्तः । यथा अग्नेर्हेतोस्तदंशस्य ज्वालादेस्तापो दाहतो नाशो नास्ति । यथा च हिमस्य तच्छैत्यं तदंशस्य तुषारकणस्य नाशकं न स्यात् । अतः परस्य स्वरूपतोऽपि मायातीतस्य जीवस्य द्वन्द्वं सुखादिकं नास्ति । यद्वा । यतोऽसौ कालस्तदात्मकः आत्मांशभूत एव यथा स्वांशभूताद्विस्फुलिङ्गादग्नेस्तापो न भवति यथा च स्वांशाद्धिमकणात् हिमस्य तत् शैत्यं न भवति तथा परस्य कारणभूतस्यात्मनः स्वांशभूतात्कालात् द्वन्द्वं सुखदुःखादिकं न संभवति । अतो विवेकी केन निमित्तेन कस्मै क्रुद्ध्येत । तद्भावः । अतो मन एवान्यथाकल्पकमित्याशयः ॥ ५५ ॥

एवं षडेते हेतवः प्रतिषिद्धाः मनोविना अन्योऽपि हेतुर्नास्तीत्याह—नेति ॥ केनचिदपि कर्त्रा करणेन च क्वापि देशे काले च कथञ्चन केनापि प्रकारेण परतः प्रकृतितः परस्य असङ्गस्य अस्यात्मनो द्वन्द्वोपरागः दुःखसुखादिसंबन्धो नैव भवति । ननु तर्ह्यपरोक्षदुःखानुभवस्य को हेतुरित्याशङ्क्य मनोध्यास एवेत्याह । आत्मन्यविद्यमानामपि संसृतिं रूपयति प्रकाशयति यस्तस्याहमः अहङ्कारस्य यथा स भवति तथात्मनो न भवतीत्यहङ्काराध्यासादेवात्मनि प्रतीयते न वास्तवोऽस्तीत्यर्थः । अत एव य एवं प्रबुद्धः स विद्वान् भूतैः हेतुभिर्न बिभेति । अत्रायं प्रकरणार्थः । आत्मा हि स्वरूपतः शुद्ध एव न तस्य कालकर्मादयो दुःखहेतवः किन्त्वविद्यया कृतोऽध्यास एव । स च मनःप्रधानत्वान्मन एव तदेव दुःखहेतुरिति अध्यासे सत्यध्यासानुगाः षडपि हेतवो यथायोगमुद्भवन्तीति ॥ ५६ ॥ एतामिति ॥ सोऽहं पूर्वतमैर्महर्षिभिरध्यासितां स्वीकृतामेतां देहादिसङ्घातात्परस्मिन्नात्मनि निष्ठां निरन्तरानुसन्धानमास्थायाङ्गीकृत्य मुकुन्दस्य अङ्घ्रिनिषेवयैव साधनेन दुरन्तपारमपि तमः अविद्याकार्यं संसारं तरिष्यामि ॥ ५७ ॥ निर्विद्येति ॥ नष्टं

न केनचित्क्वापि कथंचनास्य द्वन्द्वोपरागः परतः परस्य ॥ यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५६ ॥ एतां समास्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ॥ अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५७ ॥ श्रीभगवानुवाच ॥ निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ॥ निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं मुनिराह गाथाम् ॥ ५८ ॥ सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥ ५९ ॥ तस्मात् सर्वात्मना तात निगृहाण मनो धिया ॥ मय्यावेशितया युक्त एतावान् योगसंग्रहः ॥ ६० ॥ य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ॥ धारयञ्छ्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६१ ॥ इति श्रीभागवते एकादशस्कन्धे भगवदुद्धवसंवादे भिक्षुगीता नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

द्रविणं यस्य तथापि गतक्लमः खेदरहितः निर्विद्य विषयभोगात् विरज्य गृहात् प्रव्रज्य गां पृथिवीं पर्यटमानः । शानजार्षः । इत्थमुक्तप्रकारेणासद्भिर्दुर्जनैः निराकृतः तिरस्कृतोऽपि स्वधर्माद्भगवदनुसन्धानात् अकम्पितः अप्रचलितो मुनिः गृहीतमौनो ब्राह्मणः अमूं पूर्वोक्तां गाथामाह स्म ॥ ५८ ॥ सुखेति ॥ पुरुषस्य सुखदुःखप्रदोऽन्यो नास्त्येव । यच्च सुखादिकमात्मनि अन्यत्र च तत्र च तत्प्रदत्वं प्रतीयते तत्सर्वमात्मनो मनसो भ्रमजन्यमेवेति । तथा मित्रोदासीनरिपवोऽपि भ्रमेणैव कल्पिता इति शेषः । एवं पुरुषस्य जन्ममरणादिः सर्वोऽपि संसारः तमस आत्माज्ञानत एव कृतः ॥ ५९ ॥ तस्मादिति ॥ तस्मात् संसारदुःखस्य मनोभ्रमकल्पितत्वात् मय्यावेशितया धिया युक्तः सर्वात्मना सकलप्रयत्नेन मनो निगृहाण विषयान्तरेभ्यो निगृह्य मयि समाहितं कुरु । एतावानेव योगस्य संग्रहः परम उत्कर्षः ॥ ६० ॥ य इति ॥ द्वन्द्वैः क्षुत्पिपासासुखदुःखादिभिर्नाभिभूयते मनोनिग्रहो भवतीत्यर्थः । स्फुटमन्यत् ॥ ६१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशत्रयोविंशे व्यधाद्गङ्गासहासकः ॥ २३ ॥

चतुर्विंशे विरक्त्यर्थमुत्पत्तिप्रलयावपि ॥ कथितौ सर्वभावानां तत्र श्लोकास्तु गोदृशः ॥ उवाचेत्येकमेवात्र श्लोकतुल्या अनुष्टुभः ॥ २४ ॥ अथेति ॥ पूर्वैः कपिलादिभिः यत् साङ्ख्यं साङ्ख्यशास्त्रप्रतिपादितं तत्वं विनिश्चितं निश्चयेन निरूपितं तत्ते तुभ्यमथेदानीमहं प्रवक्ष्यामि यत्तत्वं विज्ञाय वैकल्पिकमेषोऽहमन्योऽयमिति भेदबुद्धिनिमित्तं शत्रुमित्रदुःखसुखादिभ्रमं पुमान् सद्य एव जह्यात् परित्यजेत् ॥ १ ॥ आसीदिति ॥ अथोशब्दः कार्त्स्न्ये । अयं द्रष्टृदृश्यादिरूपः कृत्स्नोऽपि पदार्थः आदौ अयुगे युगेभ्यः पूर्वं प्रलये अविकल्पितं भेदशून्यमेकं ज्ञानं ब्रह्मैवासीत् । तथा कृतयुगे अन्यदा वा यदा विवेकनिपुणा जना भवन्ति तदापि तेषां तथैव स्फुरति ॥ २ ॥ तदिति ॥ तत्केवलम् एकं निर्विकल्पितं भेदशून्यं वाङ्मनसयोरगोचरम् । अत्र समासान्ताभाव आर्षः । सत्यं परमार्थभूतं बृहत् ब्रह्म मायादृश्यं फलं प्रकाशस्तद्रूपेण द्विधा समभवत् । यद्वा । तद्ब्रह्म वाङ्मनसयोर्गोचरं यथा भवति तथा मायाफलरूपेण द्विधा समभवत् ॥ ३ ॥ तयोरिति ॥ तयोर्द्विधाभूतयोरंशयोर्मध्ये एकतरः पदार्थः उभयात्मिका कार्यकारणरूपिणी सा प्रसिद्धा प्रकृतिरभिधीयते । यस्त्वन्यतमो भावो ज्ञानं चैतन्यरूपः स एव पुरुषोऽभिधीयते ॥४॥ तम इति ॥ ततश्च पुरुषानुमतेन तत्प्रेरितेन मया कालरूपेण प्रक्षोभ्यमाणायाः

**श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ॥ यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिकभ्रमम् ॥ १ ॥ आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् ॥ यदा विवेकनिपुणा आदौ कृतयुगे युगे ॥ २ ॥ तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥ वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ३ ॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥४॥ तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ॥ मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥५ ॥ तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः ॥ ततो विकुर्वतो जातोऽहङ्कारो यो विमोहनः ॥ ६ ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥ तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥**

प्रकृतेः सकाशात्तमआदयस्त्रयो गुणा अभवन् । जीवादृष्टप्रयुक्तत्वात्सृष्टेः पुरुषानुमतत्वम् । यद्वा । स्वस्यैव प्रतीक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारेणेत्यर्थः ॥ ५ ॥ तेभ्य इति॥तेभ्यो गुणेभ्यः क्रियाशक्तिमत् सूत्रं समभवत् । तेन सूत्रेण संयुतो ज्ञानशक्तिमान् महान् समभवत् । एकमेव तत्वं क्रियाज्ञानशक्तिभ्यां द्विधोच्यते । न तु तत्वद्वयमित्यर्थः। विकुर्वतस्ततो महतो यो विमोहनो जीवस्य देहाद्यध्यासरूपभ्रमहेतुरहंकारः स जातः ॥ ६ ॥ वैकारिक इति ॥ स चाहङ्कारो वैकारिकः सात्त्विकः तैजसो राजसः तामसश्चेति त्रिवृत् त्रिविधः । तन्मात्रेन्द्रियमनसां कारणं मनःशब्द उपलक्षणं देवानां स च चिदचिन्मयः स्वतो जडोऽपि चिदाभासग्राहकत्वादुभयग्रन्थिरूप इति जीवोपाधित्वं दर्शितम् । यद्यपि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिश्रुतेः । "अन्नमयं हि सोम्य मनः" इत्यादिश्रुतेश्च । प्रथमं भूतानि जायन्ते तेभ्यश्चापञ्चीकृतेभ्यः प्राणादिक्रमेण समष्टिलिङ्गशरीरं पञ्चीकृतेभ्यश्च ब्रह्माण्डम् । एतस्मिन् वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणस्तन्नाभिपद्मे च वैराजस्य भोगविग्रहः चतुराननः ततो-

ऽन्येषां जीवानामाविर्भाव इति प्रक्रिया । तथापि चित्ताभिव्यक्तिपूर्वकोऽहंकारस्ततो भूतेन्द्रियादिव्यवहारः इत्येतावता महदादिक्रमेण सृष्टिरुच्यते । तथा चोक्तम् । "मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । उपायः सोऽवताराय न विभेदः कथंचन ॥" इति ॥ ७ ॥ अर्थ इति ॥ तन्मात्रिकात् शब्दादितन्मात्रकारणात्तामसात् तन्मात्रद्वारा अर्थः पञ्चमहाभूतरूपो जज्ञे बभूव । पृथ्व्यादिमहाभूतानामावरकत्वं तामसत्वादेव कारणस्य कार्यनिवासरूपत्वात् । "तस्य निवासः" इत्यर्थे "वुञ्छणकठज्" इति कुमुदादित्वाट्ठचि तन्मात्रिक इति सिद्धिः । तैजसात् राजसात् दशेन्द्रियाणि अभवन् । अत एव तेषां प्रवृत्तिस्वभावत्वम् । वैकृतात्सात्विकात् देवताः दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाश्चन्द्रश्चेत्येकादश चशब्दात् मनसश्च जाता आसन् । अत एतेषां प्रकाशस्वभावत्वम् ॥ ८ ॥ मयेति ॥ मया संचोदिताः दत्तसामर्थ्या भावा महदादयः संहत्य मिलित्वा कारिणः कार्ये समर्थाः । आवश्यके णिनिः । मम वैराजान्तर्यामिणः आयतनं क्रीडास्थानमण्डमुत्पादयामासुः ॥ ९ ॥ तस्मिन्निति ॥ सलिले गर्भोदरूपे संस्थितिर्यस्य तस्मिन् सलिलसंस्थितावण्डे गर्भोदशायिनारायणाख्यद्वितीयपुरुषरूपेण लीलाविग्रहेण अहं समभवं स्थितः । मम नाभ्या विश्वाख्यं लोककारणभूतं पद्ममभूत् । तत्र पद्मे

**अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ॥ तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥ मया संचोदिता भावाः सर्वे संहत्यकारिणः ॥**
**अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥ तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ ॥ मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः ॥ १० ॥**
**सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ॥ लोकान्सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥ देवानामोक आसीत्स्वर्भूतानां च भुवः**
**पदम् ॥ मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परम् ॥ १२ ॥ अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ॥ त्रिलोक्यां गतयः सर्वाः कर्मणां**
**त्रिगुणात्मनाम् ॥ १३ ॥ योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ॥ महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥**

चात्मभूः चतुराननरूपभोगविग्रहेण पुनर्वैराज एवाविर्भूत इत्यर्थः ॥ १० ॥ स इति ॥ स विश्वात्मा विश्वस्रष्टा ब्रह्मा तपसा युक्तोऽतो मदनुग्रहाद्रजसा गुणेन सपालान् लोकान् असृजत् । तान् दर्शयति । भूः अतलादिसहिता भुवः अन्तरिक्षलोकः । स्वः स्वर्गो देवलोकात्सत्यलोकपर्यन्तः इत्येवं त्रिधा ॥ ११ ॥ देवानामिति ॥ तत्र स्वर्लोको देवानामोकः स्थानमासीत् । भुवर्लोको भूतानां प्रेतपिशाचादीनां पदं स्थानमासीत् । मर्त्यानां मनुष्याणां च भूर्लोकः पदमासीत् । सिद्धानां भृग्वादीनां ब्रह्मर्षीणां त्रितयात् लोकत्रयात् परं महर्जनादिकं पदमासीत् ॥ १२ ॥ अध इति ॥ असुराणां नागानां चौकः भूमेरधस्तादतलादिकं प्रभुर्ब्रह्मा असृजत् । त्रिलोक्यां महर्लोकादधः पातालपर्यन्तायां त्रिगुणात्मनां सत्वादिगुणत्रयप्रयुक्तानां सर्वा गतयः सर्वाणि फलानि भवन्ति ॥ १३ ॥ योगस्येति ॥ योगस्याष्टाङ्गयोगस्य तपसो वानप्रस्थधर्मस्य न्यासस्य यथोक्तसंन्यासाश्रमधर्मस्य च तारतम्यानुसारेण अमलाः रागलोभादिविकाररहिता यथोत्तरं श्रेष्ठा महर्लोकादयो गतयः प्राप्याणि फलानि भवन्ति । भक्तियोगस्य तु मद्गतिः मम लोकवैकुण्ठप्राप्तिरेव

फलमित्यर्थः ॥ १४ ॥ मयेति ॥ कालात्मना कालशक्तिना धात्रा कर्मानुरूपफलप्रदेन मया परमेश्वरेण हेतुना कर्मयुक्तमिदं जगत् प्राणिमात्रं गुणेन प्रवहतीति गुणप्रवाहस्तस्मिन्नेतस्मिन् संसारे उन्मज्जति आसत्यलोकमुत्तमा गतीः प्राप्नोति । पुनर्निमज्जति आस्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥ अद्वितीयात्मप्रतिपत्तिः सृष्टिवर्णनस्य प्रयोजनम् । तदर्थं कारणेन कार्यस्य व्याप्तिमाह–अणुरिति ॥ अणुर्बृहत्कृशः स्थूलो यो यो भावः पदार्थः प्रसिद्ध्यति प्रसिद्धो वर्त्तते स सर्वोऽपि प्रकृत्या पुरुषेण चेत्येवमुभयेन संयुक्तः ॥१६॥ कार्यस्य कारणात्मतामाह–यस्त्विति ॥ यस्य कार्यस्य यस्तु आदिः कारणम् अन्तः लयस्थानं च तस्य मध्यं मध्यावस्थाऽपि स एव अत एव व्यभिचारित्वात्स एव सन्नेतरो विकारः सृष्ट्यादिविकारो व्यवहारार्थ एव । यथा तैजसाः सुवर्णकार्यभूताः कटककुण्डलादयो न ततः पृथक् । यथा च पार्थिवाः घटशरावादयो न पृथ्व्याः पृथक् तथेत्यर्थः ॥ १७ ॥ तर्हि महदादीनामपि स्वकार्यं प्रत्याद्यन्तरूपत्वात्सत्यत्वं स्यात् तत्राह–यदिति ॥ यद्रूपमुपादाय उपादानकारणतया स्वीकृत्य पूर्वः कारणरूपो महदादि र्भावः परमहङ्कारादिकं भावं विकुरुते सृजति । यथा पिण्डो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत्स एव सन्निति पूर्वस्यानुषङ्गः । कथं तर्हि “ मृत्तिकेत्येव सत्यम् ”

**मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ॥ गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥१५॥ अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिद्ध्यति ॥ सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥ १६ ॥ यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् ॥ विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७॥ यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम् ॥ आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥ १८ ॥ प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ १९ ॥ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ॥ महान्गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥**

इत्यादि श्रुतिस्तत्राह । यद्यदा यस्यादिरन्तश्च विवक्ष्यते तत्तदा तत् सत्यमित्यभिधीयते । परमकारणस्य परमात्मनः सत्यत्वविवक्षया तदनन्यत्वं श्रुत्या प्रतिपाद्यत इत्यर्थः ॥ १८ ॥ ननु तथापि प्रकृतिपुरुषकालानामकार्यभूतानां निमित्तत्वात्कथमद्वितीयता तत्राह–प्रकृतिरिति ॥ अस्य सतः कार्यस्योपादानं या प्रकृतिः प्रसिद्धा यश्च तस्या आधारः अधिष्ठाता परः पुरुषः यश्च गुणक्षोभेणाभिव्यञ्जकः कालस्तत् त्रितयं ब्रह्मरूपोऽहमेव । न तु तत् पृथक् प्रकृतेः शक्तित्वात् पुरुषकालयोरवस्थाविशेषरूपत्वात् ॥ १९ ॥ सृष्टिकारणत्वेनादौ ब्रह्मणः सत्यत्वमुक्तं मध्येऽपि तस्यैव सत्वमुपपादितम् । अन्तेऽप्यवधित्वेन सत्वं दर्शयिष्यन् सर्गप्रवाहरूपायाः स्थितेरवधिमाह–सर्ग इति ॥ महान् बहुलः पौर्वापर्येण पितृपुत्रादिरूपेण नित्यशः अविच्छेदेन सर्गस्तावत्प्रवर्त्तते । स च गुणेषु देहेषु विविधतया सृज्यत इति गुणविसर्गो जीवस्तदर्थस्तस्य धर्मादिषु पुरुषार्थ लाभार्थ इत्यर्थः । स च यावत्स्थितेरन्तस्तावत् प्रवर्तते । सोऽपि यावत् ईक्षणम् ईश्वरस्य संकल्पस्तावदित्यर्थः ॥ २० ॥

विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ॥ पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥ अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ॥ धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥ अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ॥ लीयते ज्योतिषि रसो ज्योतीरूपे प्रलीयते ॥ २३ ॥ रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ॥ अम्बरं शब्दतन्मात्रे इन्द्रियाणि स्वयोनिषु ॥ २४ ॥ योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ॥ शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥ स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ॥ तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥ २६ ॥

प्रलयं निरूपयति—विराडिति ॥ लोकानामहरहः कल्पान् सृष्टिप्रलयाख्यान् भेदान् स्वस्मिन् विकल्पयतीति तथाविधोऽपि विराट् ब्रह्माण्डं मया कालात्मना आसाद्यमानः व्याप्यमानः प्रलयमेष्यमाणो वा भुवनैः सह पञ्चत्वाय पञ्चमहाभूतरूपत्वाय विशेषाय विभागाय कल्पते योग्यो भवति। मिलितानां पञ्चमहाभूतानां कार्यरूपो विराट् एषां विभागेन विनश्यतीत्यर्थः ॥ २१ ॥ तत्र क्रमापेक्षया सृष्टिक्रमप्रातिलोम्येन प्रलयमाह—अन्न इति ॥ मर्त्यं शरीरं येनोपचितं तस्मिन्नन्ने शतवर्षायामनावृष्टौ क्षीणे सति तत्रैव प्रलीयते विनश्यतीत्यर्थः। अन्नं धानासु लीयते बीजमात्रावशेषं भवतीत्यर्थः। धाना भूमौ प्रलीयन्ते उप्ता न प्ररोहन्तीत्यर्थः। भूमिश्च गन्धे प्रलीयते। संवर्त्तकादित्यशोषिता सङ्कर्षणमुखाग्निना दग्धा च सती भूतसूक्ष्मरूपगन्धमात्रावशेषा भवतीत्यर्थः ॥ २२ ॥ अप्स्विति ॥ शतवर्षया वृष्ट्या प्लाव्यमानो गन्धः अप्सु प्रलीयते। ज्योतिषा शोष्यमाणा आपश्च स्वगुणे स्वकारणे रसे प्रलीयन्ते रसमात्रावशेषा भवन्ति। रसश्च ज्योतिषि लीयते। ज्योतिश्च वायुनाभिभूयमानं रूपमात्रं सत्तस्मिन् रूपे प्रलीयते ॥ २३॥ रूपमिति॥ रूपं वायौ लीयते। वायुश्च कालप्रेरितेनाम्बरेण ग्रस्तः स्पर्शमात्रः संस्तस्मिन् स्पर्शे लीयते। स स्पर्शश्चाम्बरे लीयते। अम्बरं च भूतादिना अहंकारेण ग्रस्यमानं शब्दतन्मात्रे लीयते। तदेवं तामसाहङ्कारकार्यस्य शब्दपर्यन्तं लयमुक्त्वा राजसाहङ्कार्यस्यापि प्रलयमाह। इन्द्रियाणि स्वयोनिष्विति स्वप्रवर्त्तकदेवतासु लीयन्ते। तेषां प्रवृत्तिस्त्वभावत्वात्। प्रवृत्तेश्च देवताधीनत्वात्तासु लय इति वाचो युक्तिः। वस्तुतस्तु कारणे राजसाहङ्कार एव लयोऽभिप्रेतः ॥ २४ ॥ योनिरिति ॥ हे सौम्य योनिरित्येकत्वमुद्देश्य गतत्वान्न विवक्षितम्। योनयो देवतास्तु ईश्वरे स्वनियन्तरि मनसि लीयन्ते। "मनोवशेऽन्येऽह्यभवन् स्म देवाः" इत्युक्तेः। इन्द्रियलयोक्तोऽभिप्रायोऽत्रापि बोध्यः। मनश्च देवताभिः सह वैकारिकेऽहंकारे लीयत इत्यर्थः। तामसाहंकारकार्यावशेषितस्य शब्दस्य लयमाह शब्द। इति शब्दो। भूतादिं तामसाहङ्कारमप्येति तस्मिन् लीयत इत्यर्थः। भूतादिरित्युपलक्षणम्। प्रभुः सर्वजगन्मोहने समर्थः त्रिविधोऽप्यहंकारो महति लीयते। जडांशं विहाय ज्ञानक्रियाशक्तिमात्ररूपो भवति ॥ २५ ॥ स इति ॥ स महान् स्वकारणेषु गुणेषु लीयते। यतो ज्ञानक्रियाशक्तिमत्त्वात्सगुणवत्तमः अतस्तादृग्भावं विहाय गुणमात्ररूपो भवतीत्यर्थः। ते गुणाः अव्यक्ते प्रकृतौ लीयन्ते। साम्यावस्थां गच्छन्तीत्यर्थः।

तदव्यक्तमव्यये उपरतव्यापारे काले लीयते । कालाधीनत्वात्तेनैकीभूयावतिष्ठते ॥ २६ ॥ काल इति ॥ कालो मायामये मायाप्रवर्तके जीवयतीति जीवो महापुरुषः तस्मिन् जीवे लीयते । अयं भावः । विश्वस्रष्टुर्महापुरुषस्योपकरणरूपः कालः वृत्त्यंशेन सृज्यश्चातस्तदात्मनावतिष्ठते । " कालं चरन्तं सृजतीश आश्रयम् " इति सप्तमे । " योऽयं कालस्तस्य तेऽव्यक्तबन्धोश्चेष्टामाहुः" इति दशमे चोक्तेः । जीवस्तु अजे आत्मनि मयि लीयते । प्रकृतेर्लीनत्वेन प्रतियोग्यभावात्परिपूर्णत्वेन सद्रूपेणावतिष्ठते । आत्मा त्वात्मस्थ एव भवति नान्यत्र लीयते । यतः केवलो निरुपाधिः विकल्पापायाभ्यां विश्वोत्पत्तिप्रलयाभ्यां लक्ष्यते अधिष्ठानत्वेनावधित्वेन च ज्ञायत इति । तथा तस्यापि कारणान्तराश्रवणात् तदङ्गीकारे चानवस्थाप्रसङ्गात् ॥ २७ ॥ एतत्कथनस्य प्रस्तुतोपयोगमाह—एवमिति ॥ एवमात्मतत्वमन्वीक्षमाणस्य पुंसो मनसो वैकल्पिको भेदनिमित्तो भ्रमोऽहंममाध्यासलक्षणः कथं स्यात् जातो वा हृदि कथं तिष्ठेत् । तत्र दृष्टान्तमाह । अर्कस्योदये यथा व्योम्नि तमो न तिष्ठति तथेति ॥ २८ ॥ एष इति ॥ देहात्मभेदाभेदसुखदुःखपरमार्थत्वापरमार्थत्वादिरूपः संशयः एवं ग्रन्थिवत् दुर्मोच्यत्वात् ग्रन्थिस्तस्य भेदनः निवर्तकः एषः साङ्ख्यस्यात्मानात्मविवेकस्य विधिः प्रकारः प्रतिलोमानुलोमाभ्यामुत्प-

कालो मायामये जीवे जीव आत्मनि मय्यजे ॥ आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥ एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ॥ मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥ एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः ॥ प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥ इति श्रीभागवते एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ श्रीभगवानुवाच ॥ गुणानामसमिश्राणां पुमान्येन यथा भवेत् ॥ तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥ शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ॥ तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥२॥

त्युपसंहारक्रमाभ्यां परावरदृशा कार्यकारणयाथात्म्यद्रष्टा मया प्रोक्तः ॥ २९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशचतुर्विंशे व्यधाद्दङ्गासहायकः ॥ २४ ॥ पञ्चविंशेऽखिला भावाः सत्वादिगुणयोगिनः ॥ निर्गुणः परमेशोऽत्र श्लोकाः सार्द्धाः षडब्धयः ॥ उवाचवाणी चैकैव श्लोकतुल्या अनुष्टुभः ॥ २५ ॥ यावद्गुणत्रयवृत्तिजयो न स्यात्तावत्साङ्ख्येनापि देहाध्यासो न निवर्तत इति गुणत्रयवृत्तीर्वक्तुमाह—गुणानामिति ॥ हे पुरुषवर्य सह मिश्रीभूय वर्तमानाः समिश्राः न समिश्राः असमिश्रास्तेषां विभक्तानां गुणानां मध्ये येन गुणेन यथा यादृशः पुमान् भवेत्तदिदं कथयतो मे मत्तो निबोधेत्यर्थः ॥ १ ॥ सत्ववृत्तीराह—शम इति ॥ शमोऽन्तःकरणावधानम् । दमो बाह्येन्द्रियावधानम् । तितिक्षा सुखदुःखादिद्वन्द्वसहिष्णुता । ईक्षा तत्वविवेकः । तपः स्वधर्मवर्त्तित्वम् । सत्यं यथार्थभाषणम् । दया परदुःखप्रहाणेच्छा । स्मृतिः अनुभूतार्थानुसन्धानम् । तुष्टिर्यथालाभसन्तोषः । त्यागो यथायोग्यव्ययशीलत्वम् । अस्पृहा वैराग्यम् । श्रद्धा शास्त्रादरः । ह्रीरनुचितकर्मणि अप्रवृत्तिः । दया दानम् । " दय दाने " इति स्मरणात् । अतो न पौनरुक्त्यम् । आदिपदेन आर्जवविनयादिः । स्वनिर्वृतिः आत्मानुभवजं सुखम् ॥ २ ॥

रजसो वृत्तीराह—कामो विषयभोगाभिलाषः । ईहा व्यापारपरता । मदो दर्पः । तृष्णा लाभे सत्यप्यसन्तोषेण ततोऽधिकजिघृक्षा । स्तम्भः अनम्रता । आशीः धनाद्यर्थं देवादिप्रार्थना । भिदा भेदबुद्धिः । सुखं विषयभोगः । मदोत्साहो गर्वेण युद्धाद्यभिनिवेशः । यशःप्रीतिः स्तुतिप्रियता । हास्यमुपहासः । वीर्यं प्रभावाविष्कारः । बलेनोद्यमः न्यायेनोद्यमस्तु सात्त्विक एव ॥ ३ ॥ तमसो वृत्तीराह—क्रोध इति ॥ क्रोधः असहिष्णुता । लोभो व्ययपराङ्मुखता । अनृतमशास्त्रीयप्रमाणस्वीकारोऽन्यथा भाषणं च । हिंसा परद्रोहचिन्तनम् । याच्ञाऽर्थना । दम्भोऽन्यथैव सद्वेषसदाचारप्रदर्शनम् । क्लमः ग्लानिः । कलिः कलहः । शोकमोहौ अनुशोचनं भ्रमश्च । विषादः दुःखम् । आर्त्तिः दैन्यम् । निद्रा तन्द्रा । आशा इदं मे भविष्यतीत्यन्वीक्षा । भीः भयम् । अनुद्यमो जाड्यम् ॥ ४ ॥ सत्वस्येति ॥ अनुपूर्वशः क्रमेणैव श्लोकत्रयेणैताः सत्वादीनां वृत्तयो मया वर्णितप्रायाः । इतोऽन्या अप्यूह्या इत्याशयेन प्रायग्रहणम् । अथानन्तरं सन्निपातं मिलितानां सत्त्वादीनां कार्यं शृणु ॥ ५ ॥ सन्निपात इति ॥ अहं शान्तः कामी क्रोधीति तथा मम शान्तिर्मम कामः क्रोधश्चेत्यादौ अहंममतानुषक्तसत्त्वादिसर्ववृत्तिसामानाधिकरण्यदर्शनात् सन्निपातजत्वम् । हे उद्धव अहं शान्तः कामी क्रोधीत्यादि तथा मम

**काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम् ॥ मदोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः ॥ ३ ॥ क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः ॥ शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः ॥४॥ सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ॥ वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥ सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ॥ व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः ॥ ६ ॥ धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ॥ गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥ प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे ॥ स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥ पुरुषं सत्वसंयुक्तमनुमायाच्छमादिभिः ॥ कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥ ९ ॥**

शान्तिः कामः क्रोध इत्यादि च या मतिः साऽपि संनिपात एव । तुशब्दोऽवधारणे । तथा मनश्च मात्राणि शब्दादीनि च इन्द्रियाणि च असवः प्राणाश्च तैः मनआदीनां सात्त्विकतामसराजसत्वात्सर्वव्यवहारस्याहन्ताममतापूर्वकत्वाच्च तैर्मिलितैर्यो व्यवहारः स सर्वोऽपि संनिपात एव ॥६॥ धर्म इति ॥ असौ पुरुषो यदा धर्मे चार्थे च कामे च परिनिष्ठितो भवति तदाऽयं त्रिषु निष्ठारूपः गुणानां संनिकर्षः संनिपातकार्यमित्यर्थः । धर्मादीनां सत्वतमोरजःकार्यत्वात् । एवं विषयतः संनिपातजत्वमुक्तम् । फलतश्च तथात्वमाह । श्रद्धेति । श्रद्धारतिधनानि सत्त्वरजस्तमोमयान्यावहतीति तथा ॥ ७ ॥ प्रवृत्तीति ॥ प्रवृत्तिलक्षणे काम्ये धर्मे यदा पुंसो निष्ठा भवति तथा पुमान् यदा गृहाश्रम एवासक्तस्तिष्ठेत् अनु पश्चात्स्वधर्मे च नित्ये नैमित्तिके तिष्ठेत । तदर्थः । सापि गुणानां समितिः संनिपातः हि यस्मात्काम्यधर्मगृहासक्तिस्वधर्माः रजस्तमःसत्वमया इत्यर्थः ॥ ८ ॥ मिश्रामिश्रा गुणवृत्तीर्निरूप्य येन गुणेन यथा भवेदित्युक्तं दर्शयति—पुरुषमिति ॥ शमदमादिभिः पुरुषं सत्वसंयुक्तम् अनुमायात् अनुमिनुयात् । एवमग्रेऽपि ॥ ९ ॥

यदेति ॥ यदा यः फलनिरपेक्षः भक्त्या स्वकर्मभिः भजति तं पुरुषं स्त्रियमेव वा सत्वप्रकृतिं सत्त्ववृत्तियुक्तं विद्यात् ॥ १० ॥ यदेति ॥ यदा यः आशिषो विषयान् आशास्य अपेक्ष्य स्वकर्मभिर्मामाराधयेत्तं राजसं विद्यात् । हिंसां शत्रुमारणादिकमाशास्य यो यथा मां भजेत्तं तामसं विद्यात् । एतैर्गुणैरेवंभूतो भवतीति तात्पर्यार्थः ॥ ११ ॥ ननु त्वमपि सृष्ट्यादि कुर्वन् गुणमय एव कस्तव जीवाद्विशेषो येन मां भजेतेति मुहुर्ब्रूषे तत्राह—सत्वमिति ॥ सत्वादयो गुणा जीवस्यैव बन्धका भवन्ति मम बन्धका न भवन्ति । यतश्चित्तजाः जीवस्यैव चित्ते जायन्ते अभिव्यज्यन्ते इति तथा यैस्तु गुणैः स जीवो भूतानां भूतजानां देहेन्द्रियान्तःकरणविषयाणां मध्ये सज्जमानः आसक्तिं कुर्वन्निबध्यते। मम तु गुणनियन्तृत्वेन तत्पारवश्याभावान्न क्वाप्यासक्तिर्न च बन्धः ॥ १२ ॥ तदेवं मिश्रगुणकार्याणि प्रदर्श्येदानीमेकैकगुणोद्रेककार्याणि दर्शयति—यदेति ॥ यदा भास्वरं प्रकाशकं विशदं स्वच्छं शिवं शान्तं सत्वं गुणः इतरौ रजस्तमोगुणौ जयेत् अभिभवेत् । तदा पुमान् सुखेन धर्मज्ञानादिभिश्च युज्येत । शिवत्वाविशदत्वभास्वरत्वानां यथाक्रमं

यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ॥ तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव च॥१०॥यदा आशिष आशास्य मां भजेत स्वकर्मभिः॥
तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥११॥ सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे॥चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते॥१२॥
यदेतरौ जयेत् सत्त्वं भास्वरं विशदं शिवम् ॥ तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥ यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा
चलम् ॥ तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥ यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम् ॥ युज्येत शोकमोहाभ्यां निद्रया
हिंसयाऽऽशया ॥ १५ ॥ यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ॥ देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम् ॥ १६ ॥

सुखधर्मज्ञानहेतुत्वात् । आदिशब्दाच्छमदमादिभिश्च युज्यते ॥ १३ ॥ यदेति ॥ यदा सङ्गः सङ्गहेतुः भिदा भेदहेतुः बलं प्रवृत्तिस्वभावं च रजः कर्तृ तमःसत्वे च कर्मभूते जयेत् । तदा पुमान् कर्मादिभिर्युज्येत । बलमित्यत्र चलमिति च पाठः । सङ्गहेतुत्वात् यशसा श्रिया च युज्येत भेदहेतुत्वात् दुःखेन युज्यते । "द्वितीयाद्वै भयं भवति" इति श्रुतेः । बलस्वभावत्वात् कर्मणा युज्येत ॥ १४ ॥ यदेति ॥ यदा मूढं विवेकभ्रंशकं लयमावरकं जडमनुद्यमात्मकं तमः कर्तृ रजःसत्त्वे च कर्मभूते जयेत् । तदा पुमान् शोकादिभिर्युज्येत मूढत्वात् शोकमोहहिंसाभिर्युज्यते।लयत्वात् निद्रया युज्यते जडत्वात् उद्यमरहितमेव केवलमाशया युज्यते।जडस्थाने जन इति पाठे लयात्मकमेव निद्राऽऽशयोर्हेतुः ॥ १५ ॥ यदेति ॥ यदा चित्तं प्रसीदेत शान्तं भवेत् । तद्भावः । इन्द्रियाणां च निर्वृतिः विषयादुपरतिर्भवति। देहे चाभयं रोगादिभयराहित्यं भवति । मनश्चासङ्गं सर्वसङ्गरहितं भवति तत्तदा मत्पदं मदुपलब्धिस्थानं सत्त्वमुद्रिक्तं वृद्धं विद्धि ॥ १६ ॥

विकुर्वन्निति ॥ यदा जनः क्रियया विकुर्वन् विकारं प्राप्नुवन् आधीः आसमन्ताद्विक्षिप्ता धीर्यस्य तथाभूतो भवति । चेतसां बुद्धीन्द्रियाणां चानिर्वृतिः अनुपरतिः स्वस्वविषयेषु विक्षिप्तत्वं गात्राणि कर्मेन्द्रियाणि तेषामस्वास्थ्यं विकाराधिक्यं मनश्च भ्रान्तं चञ्चलं भवति तदा एतैर्हेतुभिः रजः उत्कटं निशामय जानीहि ॥ १७ ॥ सीददिति ॥ यदा सदित् तिरोभवत् चेतसो ग्रहणे चिदाकारपरिणामे अक्षमं च सच्चित्तं विलीयेत मनोऽपि संकल्पात्मकं नष्टं लीनं भवति तमः अज्ञानं ग्लानिर्विषादश्च भवति तत्तदा तम उत्कटमुपधारय विद्धि । यदा तु वृत्तिरहितं भगवत्परं वा मनस्तदा नैर्गुण्यं विद्धीति ज्ञेयम् ॥ १८ ॥ एधमान इति ॥ हे उद्धव सत्त्वगुण एधमाने देवानां बलमेधते । रजस्येधमाने असुराणां बलमेधते । तमस्येधमाने रक्षसां बलमेधते । इन्द्रियाण्येव निवृत्तिप्रवृत्तिमोहस्वभावानि देवासुररक्षांसीति ज्ञेयम् । यद्वा । प्रसङ्गादाधिदैविकानां गुणानामुत्कर्षकार्याणि उक्तानीति ज्ञेयम् ॥ १९ ॥ सत्त्वादिति ॥ सत्त्वाज्जागरणं विद्यादित्यादि स्पष्टम् प्रसङ्गान्निर्गुणावस्थामप्याह । तुरीयं चतुर्थमवस्थान्तरं नाम त्रिषु जागरणादिषु सन्ततमेक-

विकुर्वन् क्रियया चाऽऽधीरनिर्वृत्तिश्च चेतसाम् ॥ गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय॥१७॥सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम्॥
मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥ एधमाने गुणे सत्त्वे देवानां बलमेधते ॥ असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥ १९ ॥
सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ॥ प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु संततम् ॥ २० ॥ उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ॥
तमसाऽधोऽध आमुख्याद्रजसाऽन्तरचारिणः ॥ २१ ॥ सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ॥ तमोलयास्तु निरयं यान्ति मामेव
निर्गुणाः ॥ २२ ॥ मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ॥ राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥

रूपमात्मतत्त्वमेवेत्यर्थः ॥ २० ॥ उपर्युपरीति ॥ ब्राह्मणा वेदार्थानुष्ठानादियुक्ताः जनाः उपर्युपरि लोकान् गच्छन्ति । आब्रह्मण इति पाठे ब्रह्मलोकमभिव्याप्येत्यर्थः । तथा तमसा आमुख्यात् स्थावरानभिव्याप्य अधोऽधो लोकान् गच्छन्ति । रजसा तु अन्तरचारिणो मनुष्या भवन्ति नैर्गुण्येन मत्पदं यान्तीति ॥ २१ ॥ मरणसमये गुणोत्कर्षफलमाह—सत्वे इति ॥ सत्वे वृद्धे सति प्रलीना मृताः जनाः स्वः ऊर्ध्वलोकं यान्ति । एवं रजोलया रजसि प्रवृद्धे सति लयो मरणं येषां ते नरलोकं यान्ति । एवं तमोलयास्तु निरयं यान्ति । निर्गुणास्तु मामेव यान्ति । निर्गुणा इत्यत्र तु लयशब्दानुपादानात् जीवन्तोऽपि यदि निर्गुणास्तदाऽपि मामेव यान्तीत्यर्थः ॥ २२ ॥ मदर्पणमिति ॥ मदाराधनरूपं निष्फलं फलाभिसन्धिरहितं वा यन्निजं नित्यं नैमित्तिकमनुष्ठितं कर्म तत्सात्त्विकं ज्ञेयम् । फलं संकल्प्यते यस्मिंस्तत् कर्म राजसं ज्ञेयम् । हिंसाप्रायादि हिंसोद्देशेन कृतं हिंसाबहुलम् आदिशब्दात् दम्भमात्सर्यादिकृतं च कर्म तामसं ज्ञेयम् । मद्भजनादि निर्गुणम् ॥ २३ ॥

कैवल्यमिति ॥ कैवल्यं देहादिव्यतिरिक्तकेवलात्मविषयं ज्ञानं सात्त्विकम् । वैकल्पिकं देहादिभेदेन भिन्नात्मविषयकं यत् ज्ञानं तद्रजः राजसम् । प्राकृतं बालमूकादिज्ञानतुल्यं केवलमाहारादिप्रकृतिकार्यविषयकं ज्ञानं तामसम् । मन्निष्ठं परमेश्वरविषयकं तु ज्ञानं निर्गुणं स्मृतम् ॥२४॥ वनमिति॥ विविक्तत्वाद्वनं सात्विको वासो वासस्थानमित्यादि स्पष्टम्। मन्निकेतं तु साक्षान्मदाविर्भावान्निर्गुणं स्थानम् ॥ २५ ॥ सात्विक इति ॥ असङ्गी फलानासक्तः कारकः कर्त्ता सात्विकः रागान्धः फलेऽत्यभिनिवेशवान् कर्त्ता राजसः स्मृतः। स्मृतिविभ्रष्टः कर्त्तव्याकर्तव्यानुसन्धानशून्यः कर्ता तामसः । मदपाश्रयः मदेकशरणः कर्ता निरहङ्कारत्वान्निर्गुणः ॥ २६ ॥ सात्विकीति ॥ आध्यात्मिकी अध्यात्मशास्त्रविषया श्रद्धा सात्विकी । कर्मश्रद्धा तु राजसी । अधर्मे धर्म इति या श्रद्धा सा तामसी । मत्सेवायां श्रद्धा तु निर्गुणा ॥२७॥ पथ्यमिति ॥ पथ्यं हितं पूतं शुद्धम् अनायस्तम् अनायासतः प्राप्तम् आहार्यं भक्ष्यभोज्यादि सात्विकं स्मृतम्। इन्द्रियाणां प्रेष्ठं भोगकाले सुखदं कट्वम्लादि राजसम्। आर्त्तिदं रोगकरम् अशुचि अशुद्धं मालिन्यकरं तामसम् चशब्दात् मन्नि-

कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत् ॥ प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥२४॥ वनं तु सात्त्विको वासो ग्रामे राजस उच्यते॥ तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥ सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ॥ तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ॥ तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ॥ राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाऽशुचि ॥ २८ ॥ सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ॥ तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ॥ श्रद्धावस्था कृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥३०॥ सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ॥ दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥ ३१ ॥

वेदितं तु निर्गुणमित्यभिप्रेतम् ॥ २८ ॥ सात्त्विकमिति ॥ आत्मोत्थं स्वात्मानुभवजन्यं सुखं सात्त्विकम् । विषयोत्थं सुखं तु राजसम् । मोहेन मादकवस्तुप्रयुक्तवैचित्येन जातम् । तथा दैन्येन पुत्रकलत्राद्युपच्छन्देन प्रभवं च सुखं तामसम् । मदपाश्रयं मद्ध्यानपूजानमस्कारादिप्रभवं सुखं तु निर्गुणम् ॥२९॥ द्रव्यमिति ॥ द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं सात्त्विकं सुखमित्यादि कालो यदा भजेत मां भक्त्या यदेतरौ जयेदित्यादिना योऽर्थादुक्तः ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादिना कर्म मदर्पणमित्यादिकारकः सात्विकः कारको सङ्गीत्यादिः श्रद्धा सात्विक्याध्यात्मिकीत्यादि अवस्था सत्वाज्जागरणमित्यादि आकृतिः उपर्युपरि गच्छन्तीत्यादिनोक्ता देवत्वादिरूपा निष्ठा सत्त्वे प्रलीनाः स्वर्यान्तीत्यादिनोक्तः स्वर्गादि । एवं सर्वोऽप्ययं भावस्त्रैगुण्यास्त्रिगुणात्मक एव ॥ ३० ॥ सर्वे इति ॥ हे पुरुषर्षभ यावन्तः पुरुषाव्यक्ताभ्यां धिष्ठिता अधिष्ठिता । अलो- पश्छान्दसः । ते सर्वेऽपि भावाः पदार्थाः गुणमयाः गुणकार्यभूता एव । एवं च चक्षुषा दृष्टं श्रोत्रेण श्रुतं बुद्ध्याऽनुध्यातं च सर्वं गुणमयमेवेति शेषः ॥ ३१ ॥

एता इति सार्द्धम् ॥ पुंसः गुणकर्मनिबन्धनाः गुणकर्मनिमित्ताः एताः संसृतयः देवमनुष्यादियोनयो भवन्ति । येनेति । हे सौम्य येन चित्तजा इमे गुणा निर्जिताः सः भक्तियोगेन मन्निष्ठो मद्ध्यानपरः सन् मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति॥३२॥तस्मादिति॥तस्माद्विचक्षणा विवेकिनो ज्ञानविज्ञानयोः संभवो यस्मिंस्तमिमं देहं लब्ध्वा गुणसङ्गं विनिर्धूय त्यक्त्वा मां भजन्तु । भजन्तीत्यपि पाठः ॥३३॥ निःसङ्ग इत्यर्द्धम् ॥ विद्वान् विवेकी निःसङ्गो विषयासक्तिरहितः जितेन्द्रियश्च सन् अप्रमत्तः सावधानः मां भजेत ॥३४॥ रज इति सार्द्धम् ॥ मुनिर्मननशीलः सत्वसंसेवया सात्विकान्येव सेवेत । पुमान् सत्त्वविवृद्ध्य इति प्रागुक्तया रजस्तमश्चाभिजयेत् । नैरपेक्ष्येण उपशमात्मकेन सत्वेनैव सत्वं चाभिजयेत् । ततश्च युक्तः शान्तधीश्च भवति । अतः गुणैर्मुक्तो जीवः जीवं जीवोपाधिलिङ्गं शरीरं विहाय मां संपद्यते ॥३५॥जीव इति॥ जीवः जीवेन लिङ्गशरीरेणोपाधिना निर्मुक्तः आशयश्चित्तं तत्र संभवः प्रादुर्भावो येषां तैर्गुणैः सत्वादिगुणवृत्तिभिश्च निर्मुक्तो मया ब्रह्मणा पूर्णानन्देनैव पूर्णो व्याप्तः बहिर्विषयभोगेन न चरेत्

एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ॥ येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ ३२ ॥
तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ॥ गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥३३॥ निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः॥
॥ ३४ ॥ रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ॥ सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः ॥ संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम्
॥ ३५ ॥ जीवो जीवविनिर्मुक्तो गुणैश्चाशयसंभवैः ॥ मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥३६॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे
पञ्चविंशोऽध्यायः ॥२५॥ श्रीभगवानुवाच ॥ मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ॥ आनन्दं परमात्मानमात्मस्थं समुपैति माम्॥१॥
गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ॥ गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥ वर्तमानोऽपि न पुमान्युज्यते वस्तुभिर्गुणैः ॥ २ ॥

आन्तरः विषयस्मरणेन च न चरेत् न विचरति । किंतु जीवन्मुक्तो भवतीत्यर्थः ॥ ३६ ॥ इति श्रीकृष्णसेवार्थमन्विनार्थप्रकाशिकाम् ॥ गङ्गासहायोऽमूं पञ्चविंश एकादशे व्यधात् ॥२५॥ षड्विंशके दुष्टसङ्गाद्दोषाः सत्सङ्गतो गुणाः ॥ ऐलेतिहासतस्तत्र श्लोकाः सार्द्धाः शराग्नयः ॥ त्रीण्युवाचेति पादोनाः स्युः षट् त्रिंशदनुष्टुभः ॥२६॥ मदिति ॥ मत्स्वरूपं लक्ष्यते येन तमिमं कायं नरदेहं लब्ध्वा मद्धर्मे मदाराधने भक्तियोगे आस्थितः सन् आत्मस्थमात्मन्येव नियन्तृत्वेन स्थितमानन्दरूपं परमात्मानं मां समुपैति सम्यक् प्राप्नोति ॥१॥ नच तस्य विषयसङ्गोऽस्तीत्याह—गुणेति सार्द्धम्॥ ज्ञाननिष्ठया हेतुना गुणमयी या जीवस्य योनिः उपाधिः प्रकृतिस्तया विमुक्तः मायामात्रेषु मायाकार्येषु अतः अवस्तुतः अवस्तुत्वेन दृश्यमानेषु वर्तमानोऽपि जीवः अवस्तुभिः तैर्गुणैर्न युज्यते तत्रासक्तो न भवति ॥ २ ॥

सङ्गमिति॥शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपस्तेषाम् असतां सङ्गं क्वचित्कदाचिदपि न कुर्यात्। आस्तां तेषां बहूनां सङ्गदोषकथनं किंतु तस्यैकस्याप्यनुगः अनुवर्ती मनुष्य-मनुगच्छति योऽन्धस्तद्वत्तमसि नरके पतति ॥३॥ ऐल इति ॥ ऐलः पुरूरवाः सम्राट् चक्रवर्ती बृहच्छ्रवाः विपुलकीर्त्तिः उर्वशीविरहात्प्रथमं मुह्यन् पश्चात्कुरुक्षेत्रे तां समागम्य गन्धर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे शोकापगमे सति ततो " निर्विण्णः सन्निमां गाथामगायत " इति नवमस्कन्धानुसारेण द्रष्टव्यम्। तद्गाथाः ॥४॥ त्यक्त्वेति ॥ पूर्वावस्थासमये शय्यायामात्मानं त्यक्त्वा व्रजन्तीमुर्वशीं तद्वियोगेन विक्लवः व्याकुलः अत एवोन्मत्तवन्नग्नः हे जाये हे घोरे भयंकरे तिष्ठ तिष्ठेति विलपन्नृपः पुरूरवा अन्वगात् ॥ ५ ॥ कामानिति ॥ उर्वश्या आकृष्टा चेतना विवेको यस्य सः तया सह क्षुल्लकान् तुच्छानपि कामान् जुषन् सेवमानोऽपि। शता आर्षः। अतृप्तः सः वर्षाणां यामिनीः रात्रीः यान्तीः अपयान्तीः आयान्तीः आगामिनीश्च न वेद। वर्त्तमानसामीप्यविवक्षया लट्। अतस्तद्वियोगेन व्याकुलो जातः ॥ ६ ॥ तस्य गन्धर्वलोकं

सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ॥ तस्यानुगस्तमस्यन्धे पतत्यन्धानुगाऽन्धवत् ॥ ३ ॥ ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥ त्यक्त्वात्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥ ५ ॥ कामानतृप्तोऽनुजुषन् क्षुल्लकान्वर्षयामिनीः ॥ न वेद यान्तीर्नायान्तीरुर्वश्याऽऽकृष्टचेतनः ॥ ६ ॥ ऐल उवाच ॥ अहो मे मोहविस्तारः काम-कश्मलचेतसः ॥ देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः ॥ ७ ॥ नाहं वेदाभिनिर्मुक्तः सूर्यो वाऽभ्युदितोऽमुया ॥ मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥ अहो मे आत्मसंमोहो येनात्मा योषितां कृतः ॥ क्रीडामृगश्चक्रवर्त्ती नरदेवशिखामणिः ॥ ९ ॥ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ॥ यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥

प्राप्तस्य बहुकालमुर्वशीसंयोगानन्तरं निर्विण्णस्य गाथामाह–अहो इति ॥ कामेन कश्मलं क्षुभितं चेतो यस्य तस्य मे मोहविस्तारः अहो अनिर्वचनीय इत्यर्थः। यतो देव्या उर्वश्या गृहीतकण्ठस्य स्वस्य इमे अहोरात्ररूपा आयुषः खण्डा मया न स्मृताः ॥ ७ ॥ नाहमिति ॥ बतेति खेदे। उत अपि अमुया उर्वश्या मुषितो मोहितोऽहम-भिनिर्मुक्तः अस्तं गतः अभ्युदितो वा सूर्य इति न वेद। वर्तमान सामीप्ये भूते लट्। तथा वर्षपूगानां गतान्यहान्यपि न वेद। यद्वा। अभिनिर्मुक्तः सूर्यास्तकालेऽपि स्वपन् अभ्युदितः सूर्ये उदितेऽपि स्वपन्नहं सूर्यः क्वास्तीति न वेद। " सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च। अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम्॥" इत्यमरः। शेषं तुल्यम् ॥ ८ ॥ अहो इति ॥ अहो महान्मे आत्मसंमोहो जातः येन मोहेन नरदेवानां शिखामणिरिव सर्वोत्तमश्चक्रवर्ती सार्वभौमोऽप्यहं योषितां क्रीडामृगः वानरः तदधीनः कृतः ॥ ९ ॥ सेति ॥ सपरिच्छदं राज्यादिसहितमीश्वरं चक्रवर्तिनमात्मानं मां तृणमिव त्यक्त्वा यान्तीमपि स्त्रियमहमुन्मत्तवन्नग्नो रुदन्नन्वगमम् ॥ १० ॥

कुत इति ॥ खरो यथा पादताडितोऽपि खरीमनुगच्छति तद्वत्स्त्रिया तिरस्कृतो योऽहं तां यान्तीमन्वगच्छं तस्य ममानुभावः माहात्म्यं तेजः पराभिभवसामर्थ्यम् ईशित्वं जगत्स्वामित्वं वा कुत एव स्यात् । सर्वमेव नष्टमित्यर्थः ॥ ११ ॥ किमिति ॥ यस्य मनः स्त्रीभिर्हृतं तस्य विद्यया देवतोपासनरूपया किम् । तपसा उपवासादिक्लेशसहनेन किम् । त्यागेन दानेन किम् । श्रुतेन अध्ययनाद्यभ्यासेन वा किम् । विविक्तेन एकान्तवासेन वा किम् । मौनेन वा किं फलं स्यान्न किंचिदित्यर्थः ॥ १२ ॥ स्वार्थस्येति॥ स्वार्थस्य श्रेयसः अकोविदमज्ञातारं मां धिक् । योऽहमीश्वरतां प्राप्य गौरिव खर इव च जितः तिरस्कारपूर्वकं वशीकृतः॥ १३॥ सेवत इति ॥ यथा आहुतिभिर्वह्निर्न शाम्यति प्रत्युत वर्द्धते एवम् उर्वश्या अधरासवं सेवतः । शता आर्षः । मे ममात्मभूः मनसिजः कामो न तृप्यति न शाम्यति ॥१४॥ पुंश्चल्येति॥ आत्मारामाणामीश्वरं भगवन्तमधोक्षजम् ऋते पुंश्चल्यापहृतं चित्तं मोचितुं मोचयितुं णिलोप आर्षः । को नाम अन्यः प्रभुः समर्थो भवेत् ॥ १५ ॥ बोधितस्येति ॥ देव्या उर्वश्या पुरूरवो मा मृथा मा प्रततो

कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ॥ योऽन्वगच्छत् स्त्रियं यान्तीं खरवत्पादताडितः ॥ ११ ॥ किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ॥ किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥ स्वार्थस्याकोविदं धिङ् मां मूर्खं पण्डितमानिनम् ॥ योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥१३॥ सेवतो वर्षपूगान् मे उर्वश्या अधरासवम् ॥ न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥१४॥ पुंश्चल्याऽपहृतं चित्तं को न्वन्यो मोचितुं प्रभुः ॥ आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥ बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ॥ मनोगतो महामोहो नापयात्यजितात्मनः ॥१६॥ किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः ॥ रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥ क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ॥ क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥

“मा त्वा वृकासो अशिवासन्न उक्षन् ।” इत्यादिसूक्तवाक्येन यथार्थवचनेन बोधितस्यापि दुर्मतेः अजितात्मनः मे मनोगतः महामोहः भोग्यताबुद्धिर्नापयाति॥१६॥किमेतयेति॥नः अस्माकं कामिनामेतया उर्वश्या किमपकृतं न किंचिदपीत्यर्थः। तत्र हेतुमाह।यत् यस्मात् योऽहमेवंभूतः स एवाजितेन्द्रियः अतो मोहेन तत्रासक्त इत्यर्थः । तत्र दृष्टान्तमाह यथा । रज्जुस्वरूपा विदुषो रज्जुद्रष्टुः पुंसस्तस्यां सर्पकल्पनया खिद्यमानस्यापि रज्ज्वा किमपि नापकृतं भवति तथेति॥१७॥कायमिति ॥ मलीमसः अतिमलिनः दौर्गन्ध्याद्यात्मकः अतिदुर्गन्धादिमान् अशुचिः स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्निधनादपि “कायमाधेयशौचत्वात्पण्डिता अशुचिं विदुः।” इत्युक्तेः । एवंभूतः स्त्रियाः कायः क्व तस्मिन् सौमनस्याद्याः सुमनसां पुष्पाणामिव गन्धशुचित्वसौकुमार्याद्या गुणाश्च क्व । अतो हि निश्चितमविद्यया स्वरूपावरकशक्त्या कृतस्तथाऽध्यास आरोप एव ॥ १८ ॥

पित्रोरिति ॥ किमयं कायः पित्रोः स्वं धनं जनकत्वात् । नु वितर्के । भार्यायाः वा भोगप्रदत्वात् । अत्रानुपयुक्तमप्येततुल्यन्यायत्वादुक्तम् । स्वामिनो वाधीनत्वात् । अग्नेर्वा अन्त्येष्ट्या तदाहुतित्वात् श्वगृध्रयोर्वा भक्ष्यत्वात् । किं वा आत्मनः जीवस्य तत्कृतशुभाशुभफलभोगित्वात् सुहृदां बन्ध्वादीनां वा तदुपकारित्वात् । एवं कस्यायमिति यो नावसीयते न निश्चीयते ॥ १९ ॥ तस्मिन्निति ॥ तस्मिन् अमेध्ये तुच्छा कृमिविड्भस्मलक्षणा निष्ठा अन्तो यस्य तस्मिन् स्त्रियाः कलेवरे अहो सुभद्रं सुखकरं सुनसं शोभननासिकं सुष्ठु स्मितं यस्मिंस्तथाभूतं स्त्रिया मुखमिति मोहेन पुमान् विषज्जते ॥ २० ॥ त्वगिति ॥ त्वगादीनां सप्तधातूनां संहतौ सङ्घाते रमताम् शता आर्षः । पुरुषाणां विण्मूत्रादिसंहतौ रमतां कृमीणां च कियदन्तरं न कियानपि भेदस्तत्तुल्या एव त इत्यर्थः ॥ २१ ॥ अथेति ॥ अतो यस्मात् विषयेन्द्रियसंयोगादेव मनः क्षुभ्यति अन्यथा तु न क्षुभ्यति । अथापि तस्मात् कदापि अर्थवित् स्वहिताभिज्ञो विवेकी स्त्रीषु स्त्रैणेषु स्त्रीवश्येषु च नोपसज्जेत ॥ २२ ॥ ननु क्वचिन्निर्जने स्थितस्यापि मुनेरपि मनःक्षोभो दृश्यते इत्याशङ्क्य सोऽपि पूर्वदर्शनादिकं विना न भवतीत्याह—अदृष्टादिति ॥ अदृष्टात् अश्रुताच्च भावात् पदार्थात् भावो मनःक्षोभो नोपजायते । यतः

पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ॥ किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥ तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ॥ अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियाः ॥ २० ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥ अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ॥ विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ २२ ॥ अदृष्टादश्रुताद्भावान्न भाव उपजायते ॥ असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥ तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ॥ विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ॥ २४ ॥ श्रीभगवानुवाच ॥ एवं प्रगायन्नरदेवदेवः स उर्वशीलोकमथो विहाय ॥ आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥ ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ॥ सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥

प्राणान् इन्द्रियाणि विषयेषु असंप्रयुञ्जतस्ततो नियच्छतः पुंसो मनः स्तिमितं निश्चलं सत् शाम्यति ॥ २३ ॥ तस्मादिति ॥ तस्मात् स्त्रीषु स्त्रैणेषु च इन्द्रियैः सङ्गो न कर्तव्यः । पञ्चज्ञानेन्द्रियाणि एकं मनश्चेति षड्वर्गः विदुषामपि अविश्रब्धः मदधीनोऽतो नापकारं करिष्यतीति न विश्वसनीयः । मादृशामविवेकिनां न विश्वसनीय इति तु किमु वक्तव्यम् ॥२४॥ एवमिति ॥ ततश्च नृपेषु देवेषु च दीव्यतीति तथाभूतः पुरूरवा एवं प्रगायन्नुर्वशीलोकं विहाय तत्रासक्तिं त्यक्त्वा अथो आत्मन्येव आत्मानं मामवगम्य ज्ञात्वा तेन ज्ञानेन विधूतमोहो निवृत्तदेहाद्यात्मभ्रमः संसारादुपारमत् जीवन्मुक्तो बभूव ॥२५॥ तत इति ॥ ततो हेतोः बुद्धिमान् दुःसङ्गम् उत्सृज्य सत्सु सज्जेत सन्तः एतस्य मनोव्यासङ्गं विषयासक्तिम् उक्तिभिः हितोपदेशैःछिन्दन्ति ॥ २६ ॥

सन्त इति ॥ सन्तः अनपेक्षाविषयाभिलाषरहिताः मच्चित्ताः प्रशान्ताः कामादिरहिताः समं ब्रह्मैव सर्वं पश्यन्तीति तथा निर्ममाः सर्वत्र ममतारहिताः निरहङ्काराः देहादावहमित्यभिमानरहिताः निर्द्वन्द्वाः शीतोष्णक्षुत्पिपासादिकृतविकाररहिताः निष्परिग्रहाः सर्वविषयत्यागिनः भवन्ति ॥ २७ ॥ तेषामुक्तयो मत्कथा एवेत्याह—तेष्विति ॥ हे महाभाग तेषु महाभागेषु मत्कथाः नित्यं संभवन्ति प्रवर्तन्ते । ता हि कथाः जुषतामादरेण शृण्वतां नृणाम् । शता आर्षः । अघं पापं प्रपुनन्ति निवर्तयन्ति । अतस्तत्सन्निधिरेव तारयति न तूपदेशादेरप्यपेक्षा ॥२८॥ ता इति ॥ आदृता मयि आदरवन्तः अत एव मत्पराः मदाराधननिष्ठाः फलान्तरसंकल्परहिताः श्रद्दधानाः कथायां श्रद्धावन्तो ये ताः कथाः शृण्वन्ति गायन्त्यनुमोदन्ति च । तङ्भाव आर्षः । ते मयि भक्तिं विन्दन्ति ॥ २९ ॥ भक्तिमिति ॥ अनन्ता गुणाः शक्तयो यस्य तस्मिन् ब्रह्मणि सर्वकारणे आनन्दानुभवात्मनि सच्चिदानन्दविग्रहे मयि भक्तिं लब्धवतः साधोः जनस्य किमन्यत्फलमवशिष्यते स यद्यदिच्छति तत्सर्वं सुलभमेव तथापि नैवेच्छतीत्याशयः ॥ ३० ॥

**सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः ॥ निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः ॥२७॥ तेषु नित्यं महाभाग महाभागेषु मत्कथाः ॥ संभवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥ ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ॥ मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ॥ मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम् ॥ शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥ ३१ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् ॥ सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥ अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ॥ धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग् बिभ्यतोऽरणम् ॥३३॥ सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ॥ देवता बान्धवाः सन्तः सन्त आत्माऽहमेव च ॥ ३४ ॥**

यथेति ॥ विभावसुमग्निं सेवमानस्य यथा शीतं जाड्यं भयं तमश्च अप्येति नश्यति तथा साधून् संसेवतः । शता आर्षः । कर्मजाड्यम् आगामि संसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः ॥ ३१ ॥ निमज्ज्येति ॥ अप्सु निमज्जतां यथा दृढा नौरुत्तरणसाधनं तथा घोरे भयङ्करे भवाब्धौ निमज्ज्योन्मज्जतामुच्चावचा योनीर्गच्छतां ब्रह्मविदः शान्ताः सन्त एव परायणं परमाश्रयः ॥ ३२ ॥ अन्नमिति ॥ यथा प्राणिनामन्नमेव प्राणो जीवनम् । यथा आर्त्तानां पीडितानां शरणं पीडानिवर्तकोऽहमेव यथा च धर्म एव प्रेत्य परलोके वित्तं तथा सन्त एव अर्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं रक्षका इत्यर्थः ॥ ३३ ॥ सन्त इति ॥ समुत्थितः सम्यगुदितोऽप्यर्को बहिर्विषये एकमेव चक्षुर्दिशति बाह्यमेव तमो निरस्य चक्षुषो दर्शनसामर्थ्यं संपादयति । सन्तस्तु अन्तरात्मविषये तदावरकाज्ञानं निरस्य सगुणनिर्गुणज्ञानात्मकानि चक्षूंषि दिशन्ति । अतः सन्त एव देवतास्तद्वदाराध्याः बान्धवास्तद्वत्सत्काराहाः सन्त एव आत्मा आत्मवत्प्रीतियोग्याः किंबहुना सन्तः अहमेव मद्दृष्ट्या सेव्या इत्यर्थः । यद्वा । सन्तः अन्तश्चक्षूंषि दिशन्ति सन्त

एव बहिः समुत्थितः उदितः अर्कः भजनचक्षुः प्रकाशकः ॥ ३४ ॥ वैतसेन इति ॥ सुगुप्तभावेनोभावनं प्रविष्टस्य वीना स्त्रीभावं भाना रोना यस्य तस्य स्त्रीभावं मानस्य पुत्रो वैतसेनः पुरूरवा अप्येवमुक्तप्रकारेणोर्वश्या लोकात् स्थानादवलोकनाद्वा निःस्पृहस्ततः सत्सङ्गात् सर्वतो मुक्तसङ्ग आत्मारामश्च सन् यथेऽमेतां महीं चचार ॥ ३५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशस्य षड्विंशे व्यधादङ्गासहायकः ॥ २६ ॥ सप्तविंशे तु कृष्णार्चायोगाश्चितप्रसादकः ॥ साङ्गः समासतः प्रोक्तस्तत्र श्लोकाः शरेषवः ॥ उवाचेति वचोद्वन्द्वं श्लोकतुल्या अनुष्टुभः ॥ २७ ॥ क्रियेति॥ हे प्रभो यस्मात् यं क्रियायोगमाश्रित्येति ल्यब्लोपे पञ्चमी । ये सात्वताः भक्ताः सात्वतर्षभं भक्तपालकं त्वां यथा येन प्रकारेणाऽर्चन्ति तं भवदाराधनरूपं क्रियायोगं समाचक्ष्व कथय ॥ १ ॥ एतदिति ॥ भगवानिति सर्वविशेषणम् । नारदः व्यासः देवानामाचार्योऽङ्गिरसः सुतो बृहस्पतिश्चेत्यादयो मुनयो मननशीला विवेकिनो मुहुः पुनः पुनरेतत् भवदर्चनमेव नृणां निःश्रेयसकरं वदन्ति ॥ २ ॥ निःसृतमिति ॥ न केवलं मुनय एव

वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिस्पृहः ॥ मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे ऐलगीतं नाम षड्विंशोऽध्यायः ॥ २६ ॥ उद्धव उवाच ॥ क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ॥ यस्मात्त्वां ये यथार्चन्ति सात्वताः सात्वतर्षभ ॥ १ ॥ एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ॥ नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥ निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः ॥ पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥३॥ एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ॥ श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥४॥ एतत्कमलपत्राक्ष कर्मबन्धविमोचनम् ॥ भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥५॥ श्रीभगवानुवाच ॥ न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ॥ संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥ वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ॥ त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७॥

वदन्ति किंतु तव मुखाम्भोजात् निःसृतं त्वदुपदिष्टं यत् स्वपुत्रेभ्यो भृग्वादिभ्यो भगवान् अजः ब्रह्माऽप्याह स्म । तथा देव्यै पार्वत्यै भगवान् भवोऽप्याह स्म ॥३॥ एतदिति॥ हे मानद एतत्पूजनमेव सर्ववर्णानामाश्रमाणां स्त्रीशूद्राणां च श्रेयसां धर्मादीनामुत्तमं साधनमहं मन्ये ॥ ४ ॥ एतदिति ॥ हे कमलपत्राक्ष हे विश्वेश्वरेश्वर एतत्कर्मबन्धविमोचनं त्वदाराधनं भक्ताय सेवकाय अनुरक्ताय प्रेमवते मह्यं ब्रूहि ॥ ५ ॥ न हीति ॥ हे उद्धव नास्त्यन्तो ग्रन्थतः पारश्चानुष्ठानतो यस्य तस्य मम कर्मकाण्डस्य पूजाविधानशास्त्रस्य यतोऽन्तः इयत्ता नास्ति अतः संक्षिप्तं यथा स्यात्तथा यथावदनुपूर्वशः क्रमेण वर्णयिष्यामि ॥ ६ ॥ वैदिक इति ॥ वैदिक एव मन्त्रो वैदिकान्येव च सर्वाण्यङ्गानि यस्मिन् स पुरुषसूक्तादिविधिः वैदिकः । एवं तन्त्रोक्तमन्त्रादियुक् तान्त्रिकः । मिश्रो नामोभयत्रोक्तः नारायणाष्टाक्षरादिः । त्रयाणां मध्ये ईप्सितेन स्वेष्टेनान्यतमेनैव विधिना प्रकारेण मां

समर्चयेत् ॥ ७ ॥ यदेति ॥ यदा त्रैवर्णिकः पुरुषस्तदा गर्भाष्टमैकादशद्वादशादिकाले स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनं प्राप्य श्रद्धया भक्त्या च यथा मां यजेत पूजयेत् तत्पूजनप्रकारं मे मत्तो निबोध शृणु ॥ ८ ॥ अर्चायामिति ॥ अर्चायां प्रतिमायां स्थण्डिले भूमौ द्रव्येण गन्धपुष्पादिना स्वस्य गुरुं पूज्यं माममायया फलाभिसन्धिलक्षणकपटत्यागेन केवलं भक्तियुक्त एवार्चेत् ॥९॥ पूर्वमिति ॥ तत्र पूर्वं धौतदन्तः सन्नङ्गशुद्धये उभयैर्वैदिकतान्त्रिकैर्मन्त्रैर्मृद्ग्रहणादिना देहे मृद्गोमयलेपनपूर्वकं स्नानं प्रकुर्वीत ॥ १० ॥ सन्ध्येति ॥ यस्य यानि सन्ध्योपासनादीनि कर्माणि वेदेन आचोदितानि साकल्येन विहितानि तैः सह सम्यक् मदाराधनविषयक एव सङ्कल्पो यस्य तथाभूतः सन् कर्मपावनीं कर्मपाशविमोचनीं मम पूजां कुर्यात् न तु कर्माणि परित्यजेत् ॥ ११ ॥ शैलीति ॥ शैली शिलामयी लौही सुवर्णादिमयी लेप्या मृच्चन्दनादिभिर्भित्तौ लिखिता लेख्या चित्ररूपा सैकती सिकतामयी हृदि पूजायां मनोमयी मनसैव चिन्तिता मणिमयी चेत्यष्टविधा प्रतिमा स्मृता ॥ १२ ॥ चलेति ॥ प्रकर्षेण तिष्ठत्यस्यामिति

**यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ॥ यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥ अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे ॥ द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥ पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ॥ उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिभिः ॥ १० ॥ सन्ध्योपास्त्यादिकर्माणि वेदेनाऽऽचोदितानि मे ॥ पूजां तैः कल्पयेत् सम्यक्संकल्पः कर्मपावनीम् ॥ ११ ॥ शैली दारुमयी लौही लेप्या लेख्या च सैकती ॥ मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥ चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ॥ उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥ अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् ॥ स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥ द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ॥ भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि ॥ १५ ॥**

प्रतिष्ठा प्रतिमा एव जीवस्य भगवतो मन्दिरं जीवानां मन्दिरमाश्रयोऽहमेवेत्यर्थः । सा च पुनश्चला शालग्रामादिः अचला च श्रीजगन्नाथादिरिति द्विविधा । तत्रापि हे उद्धव स्थिरायां मन्दिरे प्रतिष्ठापूर्वकं स्थापितायामर्चने उद्वासावाहने न स्तः उद्वासो विसर्जनम् ॥ १३ ॥ अस्थिरायामिति ॥ अस्थिरायां तु उद्वासावावाहनयोर्विकल्पः स्यात् । तत्रापि शालग्रामे तु नैव कुर्यात् । स्थण्डिले उपलक्षणतया सैकत्यां च तद्द्वयं भवेदेव । अन्यत्र कुर्यात् वा न कुर्यात् । अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायां स्नपनं स्यात् । अन्यत्र विलेप्यायां विलेख्यायां दारुमय्यां च परिमार्जनमेव भवेत् ॥ १४ ॥ द्रव्यैरिति ॥ प्रसिद्धैः शास्त्रविहितैः यथालब्धैः देशकालवित्तानुसारेण प्राप्तैर्द्रव्यैः साधनभूतैः अमायिनः निष्कामस्य भक्तस्य संबन्धी प्रतिमादिषु मद्यागः मम पूजनं भवति । हि शब्दस्त्वर्थे । हृदि तु मद्यागो भावेन मनोमयैरेव द्रव्यैः कर्तव्य इत्यर्थः ॥ १५ ॥

अधिष्ठानभेदेन प्रधानोपचारमाह—स्नानेति सार्द्धम् ॥ हे उद्धव स्नानमलङ्करणं चार्चायामेव प्रेष्ठं योग्यम् । स्थण्डिले तु तत्त्वविन्यासो यथास्थानमङ्गप्रधानदेवतानां तत्तन्मन्त्रैः स्थापनं प्रेष्ठम् । वह्नौ तु आज्यप्लुतं हविरेव प्रेष्ठम् । सूर्ये च अभ्यर्हणमुपस्थानार्घादि प्रेष्ठम् । सलिले सलिलादिभिस्तर्पणादिना पूजनं प्रेष्ठम् ॥ १६ ॥ श्रद्धयेति सार्द्धम् ॥ भक्तेन श्रद्धया उपाहृतं वारि अपि मम प्रेष्ठम् । अभक्तोपहृतं भूरि अपि मे तोषाय न कल्पते । यदि वारिमात्रेणापि मम सन्तोषस्तदा भक्त्याऽर्पिता गन्धादयो मम सन्तोषकरा भवन्ति इति पुनः किं वक्तव्यमित्यर्थः ॥ १७ ॥ शुचिरिति ॥ प्रागेव संभृताः संभाराः पूजासाधनानि येन सः दर्भैः कल्पितम् आसनं येन सः स्नानादिना शुचिः प्राङ्मुख उदङ्मुखो वा आसन आसीनः स्थिरायामर्चायां तु संमुखः अर्चाभिमुख उपविष्टः सन्नर्चेत् ॥ १८ ॥ कृतेति ॥ अनन्तरं गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वस्मिन् कृतन्यासः कृतो मूलमन्त्रन्यासो यस्यां तां ममार्चां पाणिना आमृजेत् निर्माल्याद्यपकर्षणादिना शोधयेत् । प्रातरेव वा निर्माल्याद्यपसारणमित्यपि ज्ञेयम् । कलशं पूर्णकुम्भं

स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव ॥ स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ॥ १६ ॥
श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १७॥ शुचिः
संभृतसंभारः प्राग्दर्भैः कल्पितासनः ॥ आसीनः प्रागुदग् वाऽर्चेदर्चायामथ संमुखः ॥ १८ ॥ कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् ॥
कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥१९॥ तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥ प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥२०॥
पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दैशिकः ॥ हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमन्त्रयेत् ॥ २१ ॥ पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां
परां मम ॥ अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २२ ॥

प्रोक्षणीयं प्रोक्षणार्थोदकपात्रं च यथावदुपसाधयेत् चन्दनपुष्पादिभिः संस्कुर्यात् ॥ १९ ॥ तदद्भिरिति ॥ तदद्भिः प्रोक्षणीजलैः । समासान्ताभाव आर्षः । देवपूजास्थानादिकं प्रोक्ष्य पाद्याद्यर्थं त्रीणि पात्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् । उपलक्षणमेतत् । मधुपर्कपुनराचमनार्थं द्वे अन्ये इति पंच पात्राणि इति ज्ञेयम् । तत्र पाद्यादिद्रव्याणि । " पाद्ये श्यामाकदूर्वाब्जविष्णुक्रान्तादिरिष्यते । गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ दूर्वा चेति क्रमादर्घद्रव्याष्टकमुदीरितम् । जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ॥ " मधुपर्के घृतदधिमधु पुनराचमने शुद्धं जलमिति ॥ २० ॥ पाद्येति ॥ दैशिकः पूजकः पाद्यार्घाचमनीयार्थं यानि त्रीणि पात्राणि तानि यथाक्रमं " हृदा नम इति शीर्ष्णा स्वाहेति शिखया वषट् " इति मन्त्रयेत् । ततः सर्वाणि गायत्र्या चाभिमन्त्रयेत् ॥ २१ ॥ पिण्डे इति ॥ तदनन्तरं पिण्डे देहे वाय्वग्निसंशुद्धे इति भूतशुद्ध्युक्तरीत्या कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते तत्तत्प्रकरणोक्तन्यासादि कृत्वा तस्मिन् शरीरे " हृत्पद्मस्थां परां श्रेष्ठां

नादान्ते सिद्धभाविताम् ।" प्रणवस्याकारोकारमकारबिन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्भावितां ध्यातां जीवः कला अंशो यस्यास्ताम् अग्र्यीं सूक्ष्मां मम मूर्तिं ध्यायेत् ॥२२॥ तयेति ॥ तयाऽऽत्मभूतया स्वेनैव भावेन चिन्तितया मन्मूर्त्या व्याप्ते अमृतमये पिण्डे स्वदेहे दीपेन प्रभया गृह इव व्याप्ते सति तस्मिन्नेव प्रथमतो मानसैरेवोपचारैर्मां संपूज्य तन्मयः सन् अर्चादिष्वावाह्य स्थापनमुद्रया च स्थापयित्वा न्यस्तानि अङ्गानि हृदयाद्यङ्गमन्त्राः यस्मिंस्तं मां प्रपूजयेत् ॥ २३ ॥ पाद्येति युग्मम् ॥ धर्मादिभिः धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यङ्कस्याग्नेयादिचतुष्कोणेषु पादाः पूर्वादिक्रमेण मध्ये च अधर्माज्ञानावैराग्यानैश्वर्याणि गात्राणि तन्मध्ये पूर्वादिदिग्विदिक्षु क्रमेण मध्ये च "विमलोत्कर्षणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानानुग्रहा" इति नव शक्तयः त्रयो गुणाः पट्टिकाः । एवं यथोपदेशं धर्मादिभिर्नवभिर्विमलादिभिः शक्तिभिश्चासनं कल्पयित्वेत्यर्थः । तत्र च कर्णिकायां केसरैस्तत्रस्थसूर्यादिमण्डलैश्चोज्ज्वलमष्टदलं पद्मं च कल्पयित्वा तत्र च मां संस्थाप्य उभयसिद्धये वेदतन्त्रोक्तभुक्तिमुक्तिफलसिद्धये उभाभ्यां

तयाऽत्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः॥ आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥२३॥ पाद्योपस्पर्शार्हणादीनुपचारान् प्रकल्पयेत् ॥ धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २४ ॥ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २५ ॥ सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ॥ मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २६ ॥ नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ॥ महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥२७॥ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ॥ स्वे स्वे स्थाने त्वभिमुखान् पूजयेत्प्रोक्षणादिभिः ॥२८॥ चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ॥ सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥२९॥ स्वर्णघर्मानुवाकेन महापुरुषविद्यया ॥ पौरुषेणापि सूक्तेन सामनीराजनादिभिः ॥ ३० ॥

वेदतन्त्रोक्तप्रकाराभ्यां मह्यं पाद्यादीनुपचारान् प्रकल्पयेत् समर्पयेदिति । तत्र उपस्पर्शः आचमनम् । अर्हणमर्घ्यम् ॥ २४ ॥ २५ ॥ सुदर्शनमिति ॥ तत्र न्यस्ताङ्गमित्यङ्गावरणपूजा सूचिता । आसनेनैव शक्त्यावरणमप्युक्तम् । ततः सुदर्शनादिमुसलान्तान्यायुधान्यष्टदिक्षु तथा कौस्तुभमालाश्रीवत्सानुरसि च पूजयेत् ॥ २६ ॥ नन्दमिति ॥ नन्दादीन् पार्षदानष्टदिक्षु गरुडं च पुरतः पूजयेत् ॥ २७ ॥ दुर्गामिति ॥ दुर्गादींश्चतुरश्चतुष्कोणेषु गुरून् वामतः सुरान् इन्द्रादिलोकपालान् पूर्वादिदिक्षु एवं स्वे स्वे स्थाने स्थितानेतान् देवस्याभिमुखान् प्रोक्षणादिभिः पूजयेत् ॥ २८ ॥ पाद्यादीनुपचारान् प्रकल्पयेदित्युक्तं तानेव गुणविधिभिः प्रपञ्चयति—चन्दनेति ॥ विभवे सति चन्दनादिभिर्यथासंभववैर्वासितैरन्यथा शुद्धैरेव सलिलैः मन्त्रैर्मन्त्रपूर्वकं मां नित्यदा स्नापयेत् ॥ २९ ॥ स्वर्णेति ॥ स्वर्णघर्मानुवाकः "सुवर्णं घर्मं परिवेदनेन" इत्यादिमहापुरुषविद्या । जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥" इति पौरुषं सूक्तम् । सहस्रशीर्षेत्यादिनीराजनादीनि सामानि "इन्द्रं न रोनेमधिताहवन्त"

यद्वा । " अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे । जपहोमनमस्कारान्न कुर्यात्केशवालये । " इत्यग्रपृष्ठादौ निषेधात् । मत्पादयोर्दक्षिणपार्श्वे किंचिद्दूरे शिरः कृत्वा बाहुभ्यां च परस्परं सम्मुखीभूततर्कमुद्राभ्यां सहितं यथा स्यात्तथा हे ईश मृत्युरेव ग्रहो ग्राहो यस्मिंस्तस्मात्संसारार्णवाद्भीतम् अत एव प्रपन्नं शरणमागतं मां पाहि इति विज्ञप्त्या च प्रणमेत् ॥ ४५ ॥ इतीति ॥ इति प्रार्थयमानः शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय धृत्वाऽर्चेत् । यदि मद्रूपमुद्वास्यमुद्वासयेत् तर्हि प्रतिमायां यन्न्यस्तं ज्योतिस्तत्पुनरपि हृत्पद्मस्थज्योतिष्येवोद्वासनीयम् ॥ ४६ ॥ अर्चेति ॥ अर्चादिषु यदा यत्र श्रद्धा तदा तत्र मामर्चयेत् । न त्वधिष्ठाने मुख्यामुख्यत्वमस्ति । यतः सर्वेषामात्माऽहं सर्वभूतेषु आत्मनि च अवस्थित एवास्मि ॥ ४७ ॥ एवमिति ॥ एवं वैदिकतान्त्रिकैः क्रियायोगपथैः पूजामार्गैर्मामर्चयन् पुमान् उभयतः इहामुत्र चाभीप्सितां सिद्धिमिष्टं फलं मत्तो विन्दति ॥४८॥ समर्थं प्रत्याह—मदर्चामिति ॥ प्रथमं दृढं मन्दिरं कारयेत् । तत्र च मदर्चां मत्प्रतिमां संप्रतिष्ठाप्य रम्याणि पुष्पोद्यानानि च कारयेत् । पूजायात्रो-

इति शेषां मया दत्तां शिरस्याधाय सत्वरम् ॥ उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत् पुनः ॥ ४६ ॥ अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ॥ सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥ ४७ ॥ एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ॥ अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४८ ॥ मदर्चां संप्रतिष्ठाप्य मन्दिरं कारयेत् दृढम् ॥ पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाऽऽश्रितान् ॥ ४९ ॥ पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ॥ क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात् ॥ ५० ॥ प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ॥ पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५१ ॥ मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ॥ भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ ५२ ॥ यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ॥ वृत्तिं स जायते विड्भुग् वर्षाणामयुतायुतम् ॥ ५३ ॥

त्सवाऽश्रितान् पूजा प्रत्यहमूयात्राविशिष्टे पर्वणि बहुजनसमागमः उत्सवो वसन्तादिमहोत्सवस्तदाश्रितान् साधनभूतान् क्षेत्रादीनग्रिमश्लोकोक्तान् दद्यादिति शेषः । यद्वा । पूजायात्रोत्सवाश्रितान् भूषणशिबिकादींश्च कारयेत् इति शेषः ॥ ४९ ॥ पूजेति ॥ अन्वहं नित्यं तथा महापर्वसु पूजादीनां पूजायात्रोत्सवादीनां प्रवाहार्थं संततानुवृत्त्यर्थं क्षेत्रापणादीन् दत्त्वा मत्सार्ष्टितां मत्समानैश्वर्यमियात् प्राप्नुयात् ॥ ५० ॥ प्रतिष्ठयेति ॥ प्रतिष्ठया सार्वभौमं सर्वभूमिपतित्वम् इयात् । सद्मना मन्दिरनिर्माणमात्रेण भुवनत्रयपतित्वम् इयात् । केवलं पूजादिना तु ब्रह्मलोकं प्रतिष्ठादिभिस्त्रिभिस्तु मया साम्यमियात् । समशब्दात् स्वार्थे ष्यञ् ततस्तल् ॥ ५१ ॥ मामिति ॥ यस्तु नैरपेक्ष्येण फलाभिसन्धिविरहेण मामेवं पूजयेत् स भक्तियोगं लभते । तेन भक्तियोगेन च मामेव विन्दति प्राप्नोति ॥ ५२ ॥ य इति ॥ यः स्वदत्तां परैर्वा दत्तां सुरविप्रयोर्वृत्तिं हरेत स वर्षाणामयुतायुतपर्यन्तं विड्भुक् विष्ठाभोजी कृमिर्जायते ॥ ५३ ॥

कर्तुरिति ॥ कर्तुः प्रयोज्यस्य सारथेः सहकारिणः हेतोः प्रयोजकस्य अनुमोदितुरनुमन्तुश्च प्रेत्य तत्फलं भवति । यतः एते कर्मणां भागिनः फलभागार्हाः । तत्रापि भूयसि कर्मणि सारथ्यादौ च भूयः अधिकं फलं भवतीति । यद्वा । कर्मणां भागिनः भागार्हस्येति हेतुगर्भं कर्तुरित्यादेर्विशेषणम् । तान्त्रिकादिपूजाप्रकाराः पर्यङ्के द्रष्टव्याः ॥५४॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशे सप्तविंशे व्यधात् गङ्गासहायकः ॥२७॥ अष्टविंशे तु पूर्वोक्तो ज्ञानयोगः समासतः ॥ पुनर्निरूपितः श्लोकास्तत्र सार्द्धाः ४४॥ कृतान्वयः ॥ उवाचत्रयमङ्क्याद्या द्वापञ्चाशदनुष्टुभः ॥२८॥ अतिविस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह—परेति ॥ परेषां स्वभावान् शान्तघोरादीन् तत्प्रयुक्तानि कर्माणि च न प्रशंसेत् न च गर्हयेत् निन्देत् । किंतु प्रकृत्या पुरुषेण च जातं विश्वमेकात्मकं पश्यन् भवेत् पश्येत् ॥ १ ॥ परेति ॥ यः परस्वभावकर्माणि प्रशंसति निन्दति वासः असति मिथ्याभूते द्वैतेऽभिनिवेशतः अहंममात्मकात् हेतोः स्वार्थात् ज्ञाननिष्ठालक्षणात् आशु भ्रश्यति ॥ २ ॥ तैजस इति ॥ तैजसे राजसाहंकारकार्ये इन्द्रियगणे निद्रया आपन्ने अभिभूते सति पिण्डस्थः देहस्थो जीवः केवलं मनोमात्रेण मायां स्वप्नरूपां प्राप्नोति । ततो मनस्यपि लीने सति नष्टचेतनः सन् मृत्युं वा । वाशब्द

कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ॥ कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥५४॥ इति श्री० एकादशस्कन्धे सप्तविंशोऽध्यायः ॥२७॥
श्रीभगवानुवाच ॥ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ॥ विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥ १ ॥ परस्वभावकर्माणि यः प्रशंसति निन्दति ॥ स आशु भ्रश्यति स्वार्थादसत्यभिनिवेशतः ॥२॥ तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः ॥ मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥ ३ ॥ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ॥ वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥ छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः ॥ एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥

इवशब्दार्थः । मृत्युतुल्यां सुषुप्तिं प्राप्नोति यथैतत् तद्वदेव नानार्थदृक् द्वैताभिनिवेशी पुमान् विक्षेपं लयं च प्राप्नोति । तत्र कदाचित्सुषुप्तिवन्महापदं गतो मोहेन तदनुसन्धानशून्य एव भवति न त्वात्मानं जानातीति । यथा प्राज्ञसम्पर्काद् विश्वस्य भोगक्षयलक्षणो भ्रंशः एवमनात्मसंपर्कादात्मनोऽपि स्वरूपभ्रंशः इत्याशयः ॥ ३ ॥ किमिति ॥ अवस्तुनः द्वैतस्य मध्ये किं भद्रं स्तुतियोग्यं किं वा अभद्रं निन्दायोग्यम् । वाचेति । बाह्येन्द्रियोपलक्षणं वाचा उदितम् उक्तं चक्षुरादिभिर्गृहीतं मनसा ध्यातं च यत्किंचिदपि वस्तु तत्सर्वमात्मव्यतिरेकतोऽनृतमसत्यमेवेत्यर्थः ॥४॥ नन्वेवं देहादीनामप्यसत्वात्कथं भयहेतुत्वं तत्राह—छायेति ॥ छाया मुखादिप्रतिबिम्बं प्रत्याह्वयः प्रतिध्वनिः आभासः शुक्तिरजतादिः । एते हि यथा असन्तोऽप्यर्थकारिणो भवन्ति । एवं देहादयोऽपि पदार्थाः आमृत्युतः मृत्युपर्यन्तम् । यद्वा । मृत्युः लयः यावन्नैव लीयन्ते तावत्पर्यन्तं संसारभयं यच्छन्ति ॥ ५ ॥

ननु सृष्ट्यादिश्रुतिभिरेव द्वैतं निरूपितं कथमसत्त्वं तत्राह—आत्मैवेति ॥ तत्तस्मात् श्रौतादिविचारात् इदं सर्वं विश्वं परमात्मैव यतः प्रभुः सर्वभवनयोग्यः ईश्वरः सर्वकरणसमर्थ-श्चातःस एव सृजति सृज्यते च त्रायते पाल्यते त्राति पालयति । बाहुलकाददादिभिन्नेऽपि शपो लुक् आत्वम्। संह्रियते संहरति च परमेश्वरस्यैव कर्तृत्वं कर्मत्वं चेति तस्मात् हेतोः अन्यस्मात् सृज्यादिभिन्नादात्मनः सकाशादन्यो भावः पदार्थो वेदेन निरूपितो नास्ति ॥६॥ निरूपितेति ॥ जीवात्मनि इयं त्रिविधा अध्यात्मिकादिरूपा भातिः प्रतीतिः निर्मूला भ्रान्तिरूपेति विवेकिभिर्निरूपिता । अत इदं त्रिविधमपि यतो गुणमयं सत्त्वादिगुणकार्यम् । अतः मायया कृतं विद्धि॥७॥एतदिति ॥ अतो य एतत् मदुदितं मयोक्तं ज्ञानविज्ञानयोर्नैपुणं निष्ठां विद्वान् जानाति स च परस्वभावकर्माणि न निन्दति न च स्तौति । किन्तु सूर्यवत्समो भूत्वा लोके विचरति॥८॥ निष्ठाप्राप्त्युपायमाह—प्रत्यक्षेणेति॥ प्रत्यक्षादिभिः प्रमाणैरेतद्विश्वमाद्यन्तवत् उत्पत्तिविनाशवत् आत्मव्यतिरेकेणासच्च ज्ञात्वा तत्र निःसङ्गः आसक्तिरहित एवेह संसारे विचरेत् । तत्र प्रत्यक्षेण घटादीनामाद्यन्तव-त्त्वम् अनुमानेन पृथिव्यादीनां यथा पृथिव्यादि आद्यन्तवत् दृश्यत्वात् घटवत् इत्यादिना निगमेन श्रुत्या आकाशादीनामप्रत्यक्षाणां " तस्माद्वा एतस्मादात्मन आकाशः

आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ॥ त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥६॥ निरूपितेयं त्रिविधा निर्मूला भातिरात्मनि ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ७ ॥ एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ॥ न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ८ ॥ प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ॥ आद्यन्तवदसद् ज्ञात्वा निःसङ्गो विचरेदिह ॥ ९ ॥ उद्धव उवाच ॥ नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्य-योः ॥ अनात्मसदृशोरीश कस्य स्यादुपलभ्यते ॥१०॥ आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ॥ अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥ ११ ॥ श्रीभगवानुवाच ॥ यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ॥ संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १२ ॥

संभूतः " इत्यादिना तथाऽऽत्मसंविदा । स्वानुभवेनापि सर्वं दृश्यमाद्यन्तवद् ज्ञेयम् । एवं प्रत्यक्षादिभिः सर्वदृश्यस्यासत्त्वमपि ज्ञेयम् ॥ ९ ॥ नेति ॥ द्रष्टृदृश्ययोरिति हेतुगर्भे क्रमादात्मानात्मनोर्विशेषणे । तथा च हे ईश संसृतिःसुखदुःखाद्यनुभवरूपा आत्मनो नैव संभवति तस्य द्रष्टृत्वेन स्वप्रकाशत्वात् । तद्धेतुकर्मसु प्रवृत्त्यसंभवात् नापि देहस्य सं-भवति । तस्यानात्मत्वेन जडत्वात् । एवं द्वयोर्मध्ये कस्य स्यात् कस्यापि न संभवति तथाऽप्युपलभ्यतेऽतः कथं सेति वद ॥ १० ॥ तदेव स्फुटयति—आत्मेति ॥ आ-त्मा तु अव्ययः अगुणः शुद्धः कर्मकृतमालिन्यरहितः अग्निवत्स्वयंज्योतिः यतः अनावृतः अविद्याकृतावरणरहितः अव्ययत्वादिभिर्विशेषणैः नाशादिरागादिपुण्यपापुण्या-ज्ञानपरिच्छेदानामसंभवं दर्शयति तथा देहस्तु दारुवत् अचित् जडः । अयं भावः । यथाऽग्निदारुणोर्भेदेनानुपलम्भेऽपि दारुप्रकाश्यमग्निः प्रकाशकः तथा देहात्मनोरपि । अतः इह द्वयोर्मध्ये कस्य संसृतिः । अन्यतरस्यापि सा न घटत इत्यर्थः ॥ ११ ॥ उभयोरविवेक एव संसारालम्बनमित्याह—यावदिति ॥ अविवेकिनः आत्मनो यावद्देहादि-

भिः सह संनिकर्षणं संबन्धस्तावत् सुखदुःखादिसंसारः अपार्थोऽपि आत्मन्यविद्यमानोऽपि फलवान् स्फुरत्येवेत्यर्थः ॥ १२ ॥ अर्थे इति ॥ अर्थे देवमनुष्याद्याकारे आत्मन्यविद्यमानेऽपि स्थूलोऽहं कृशोऽहं मनुष्योऽहमेते ममानुकूला एते प्रतिकूला एवं विषयान् ध्यायतोऽस्य जीवस्य सुखदुःखादिसंसृतिर्नैव निवर्त्तते। यथा स्वप्ने वस्तुतः शरीरादावविद्यमानेऽपि शिरश्छेदाद्यनर्थागमो भवति तथेति॥ १३ ॥ यथा हीति ॥ यथा हि अप्रतिबुद्धस्य स्वप्नान् पश्यत एव पुरुषस्य प्रस्वापः स्वप्नदृष्टपदार्थः बहून् शिरश्छेदाद्यनर्थान् बिभर्ति पुष्णाति । स एव प्रतिबुद्धस्य तत उत्थितस्य मोहाय नैव भवति तथा अज्ञस्यानर्थहेतुरपि ज्ञानिनस्तथा न भवतीत्यर्थः ॥ १४ ॥ शोकेति ॥ शोकहर्षादयो जन्ममृत्यू च अहंकारस्यैव दृश्यन्ते । आत्मनस्तु न दृश्यन्ते सुषुप्त्यादौ तेषामदर्शनात् । अहं शोकादिमानितिवच्चैतन्यं तथेति प्रतीत्यभावाच्च शोकादीनां कृशत्वादिवत् द्रष्टृधर्मत्वानुपपत्तेरिति भावः ॥ १५ ॥ नन्वेवं मुक्तिरप्यहङ्कारस्यैव स्यात् ततो मुक्तावहङ्कारावशेषः प्रसज्येत, तत्राह—देहेति ॥ देहेन्द्रियप्राणमनस्सु अभिमानो यस्य सः आत्मैव तेषामन्तर्हितो जीवः अत एव गुणकर्ममयी मूर्तिर्यस्य स एव सूक्ष्मोपाधिभिः सूत्रादिशब्दैर्बहुधेव गीतः कालतन्त्रः कलयतीति कालः परमेश्वरस्तदधीनः संसारे

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ १३ ॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ १४ ॥ शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥ १५ ॥ देहेन्द्रियप्राणमनोभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ॥ सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतन्त्रः ॥ १६ ॥ अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १७ ॥ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥

आ सर्वतो धावति । अतस्तस्यैव मोक्षोऽपि युक्त इत्याशयः ॥ १६ ॥ अमूलमिति ॥ वस्तुतो मूलशून्यमेव अविद्यया बहुभिर्देवमनुष्यादिरूपैः रूपितं प्रकाशितम् ऐन्द्रजालिकतुल्यम् । तदेव मनआदि कर्मान्तम् । यद्वा । मनआदिषु क्रियत इति मनआदि कर्म मनआदिभिः सम्बद्धमेतत् । अहङ्करणं गुर्वीश्वरोपासनया शितेन ज्ञानखड्गेन च्छित्त्वा मुनिर्मननशीलः अत एव अतृष्णः विषयाभिलाषरहितो गां भूमिं विचरति ॥ १७ ॥ ज्ञानमेवाह—ज्ञानमिति॥ विवेकः अपरोक्षात्मसाक्षात्कारः निगमः उपनिषदादिश्रवणम् । तपः स्वधर्म इति टीकाकाराः । यद्वा । तप आलोचनं मननाख्यम् । तदुपकारकाणि प्रत्यक्षादीनि । तत्र प्रत्यक्षं स्वानुभवः । ऐतिह्यं ज्ञानवतामुपदेशः । अनुमानं तर्कः । एतत्सर्वं ज्ञानमित्यन्वयः । अत्र विवेकः । उपेयरूपं ज्ञानं निगमादीनि साधनानि । करणल्युटा तेष्वपि ज्ञानशब्दप्रयोगः । यथा गीतासु "अमानित्वमदम्भित्वम्" इत्युपक्रम्य "तत्वज्ञानार्थदर्शनम्" इत्यन्तमुक्त्वा "एतज्ज्ञानमिति प्रोक्तम्" इति । तेषां ज्ञानशब्दवाच्यत्वमुक्तम् । यद्वा । निगमः श्रवणम् । तपो निदिध्यासनम् । प्रत्यक्षादित्रिकेण मननमुक्तम् ।

तथा चैव श्रवणमनननिदिध्यासनान्युक्तानि यत्तु निगमादिसाधनैर्जायते यो विवेकस्तज्ज्ञानमिति वैयधिकरण्येन स्वामिपादा व्याचख्युस्तत्तु अभिप्रायकथनम्। न त्वन्वयाभिप्रायेण । अथ निगमादिमननान्तैः सिद्धमर्थमाह । आद्यन्तयोरित्यादिना । ब्रह्मेन्द्रियार्थात्मविकारचित्रमित्यन्तेन यदस्य जगतोराद्यन्तयोरस्ति तदेवात्र तत्त्वं केवलं मध्येऽपि परमार्थभूतम् । नतु जगदिति । तथा कलयति प्रकाशयतीति कालः प्रकाशकः हेतुश्च कारणं च तदेव न ततः पृथक् एतदुक्तं भवति । "यदस्य विश्वस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवैतत् न ततः पृथक् " इत्येवं निश्चये निगमादिसाधनैर्यो विवेको जायते तज्ज्ञानम्॥१८॥यथेति ॥ यत् स्वकृतं सुष्ठु कुण्डलादिरूपेण अकृतं न विरचितं हिरण्यं तदेव सर्वस्य हिरण्मयस्य कुण्डलादिकार्यस्योत्पत्तेः पुरस्तान्नाशाच्च पश्चाद्यदस्ति तदेव मध्येऽपि कटककुण्डलमित्यादिनानाव्यपदेशैर्नामभिर्व्यवहार्यमाणं व्यवहारं प्राप्यमाणं भवति । यथा सुकृतमिति पाठे सुष्ठु कुण्डलादिरूपेण विरचितमपि हिरण्यमेव इत्यादि तद्वदस्य विश्वस्य कारणभूतोऽहमेवाद्यन्तरूपो मध्ये नानाव्यवहारालम्बनं च न मत्तः पृथग्विश्वमस्तीति ॥ १९ ॥ विज्ञानमिति ॥ त्रियवस्थमिति यकारस्य पृथक् पाठः छन्दोऽनुरोधेन । जाग्रदादित्र्यवस्थं यदेतद्विज्ञानं मनः तथा तदवस्थाकारणभूतं च यद्गुणत्रयम् ।

यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ॥ तदेव मध्ये व्यवहार्यमाणं नानाऽपदेशैरहमस्य तद्वत् ॥ १९ ॥ विज्ञानमेतत् त्रियवस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ॥ समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २० ॥ न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ॥ भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥२१॥ अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ॥ ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥ २२ ॥

यच्च कारणकार्यकर्तृकारणमध्यात्ममिन्द्रियाणि कार्यमधिभूतं पृथ्व्यादि कर्तृ अधिदैवम् । एवं गुणत्रयकार्यभूतं त्रिविधं जगत् । एतद्येन तुर्येण सामान्यज्ञानमात्रेण समन्वयेन भवति । येनानुगतं प्रकाशते । " तमेव भान्तमनुभाति सर्वम् " इति "चक्षुषश्चक्षुः" इति च श्रुतिः । ननु विशेषज्ञानं विना तुर्यं पृथङ् नोपलभ्यते तत्राह । व्यतिरेकतश्च समाधौ यदस्ति तदेव सत्यम् ॥ २० ॥ एवमव्यभिचारिणः सत्यत्वमुक्त्वा व्यभिचारिणोऽसत्यत्वमाह—न यदिति ॥ यत् भूतं कार्यं पुरस्तान्नास्ति उत अपि यत्पश्चान्नास्ति तन्मध्येऽपि नास्ति किन्तु व्यपदेशमात्रं व्यवहारमात्रमेव यद्यत् परेणान्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत् तदेव कारणप्रकाशकात्मकमेव स्यान्न ततः पृथगिति मे मनीषा निश्चयः । " वाचारम्भणं विकारो नामधेयम् " इति " सर्वं खल्विदं ब्रह्म " इति च श्रुतेः । कारणप्रकाशकव्यतिरेकेण कार्यस्य प्रकाश्यस्य चानुपलम्भादिति भावः ॥२१॥ अविद्यमान इति ॥ योऽयं वैकारिकः सात्त्विकः तथा राजसश्च सर्गः तथा तामसश्च सर्गः स एष प्रागविद्यमानोऽपीदानीम् अवभासते प्रकाशते कार्यभूत एव । यद्वा । यः वैकारिकः विकारसमूहः विकारेभ्यो महदादिभ्यो जातो वा स प्रागविद्यमानोऽपि राजससर्गः रजोद्वारेण ब्रह्मकार्यभूतः इत्यर्थः । अवभासतेऽपि ब्रह्मप्रकाश्यश्चेत्यर्थः । ब्रह्म तु स्वयं स्वतः

सिद्धं सर्वकारणमेव न तु कार्यमित्यर्थः । ज्योतिः प्रकाशकं चेत्यर्थः । अतः कारणात् इन्द्रियाणि च अर्थास्तन्मात्राणि च आत्मानश्च देवानामप्युपलक्षणम् । विकाराः पञ्च महाभूतानि च एवं चित्रं विश्वं ब्रह्मैव भाति ॥ २२ ॥ एवमिति ॥ एवं पूर्वोक्तैः निगमतपःप्रत्यक्षैतिह्यानुमानैः स्फुटं यथा भवति तथा ब्रह्मविवेकहेतुभिः तथा विशारदेन निपुणेन गुरुणा निमित्तभूतेन च परस्य देहादेरपवादेनात्मत्वनिरासेन आत्मविषयं देहादिभिन्नो वा एको नैको वा स्वतन्त्रः परतन्त्रो वेत्यादिरूपं संदेहं छित्त्वा स्वरूपानन्देनैव तुष्टः सन्नखिलेभ्यः कामुकेभ्यः इन्द्रियादिभ्यः उपारमेत निःसङ्गो भवेदिति ॥ २३ ॥ परापवादमेव प्रपञ्चयति—नेति ॥ वपुरादिः अर्थसाम्यपर्यन्तः जडवर्गः आत्मा न भवतीति जडत्वादिति सर्वत्र हेतुः । तत्र पार्थिवं वपुः शरीरम् आत्मा न भवति पार्थिवमिति हेतुः पार्थिवत्वादित्यर्थः । एवम् अन्नमात्रम् अन्नोपष्टम्भम् । "नपुंसकमनपुंसकेन" इति एकशेषः । इन्द्रियाणि देवाः अर्कादय इन्द्रियानुग्राहकाः असुः प्राणः वायुर्बाह्यः धिषणा बुद्धिः सत्त्वं चित्तम् अहंकृतिरहङ्कारः । एतेऽप्यात्मानो न भवन्ति । अन्नमात्रमिति हेतुः । अन्नोपष्टम्भत्वात् शरीरवत् इत्यर्थः । वायुः जलं हुताशः तेजः खं क्षितिरिति पञ्च भूतानि । अर्थाः शब्दादयः पञ्च साम्यं गुणत्रयसाम्यं प्रकृतिः एतेऽपि आत्मा न भवन्ति । जडत्वाद्घटवत् इति ॥ २४ ॥ समाहितैरिति ॥ सम सुष्ठु सम्यग्विविक्तं ज्ञातमनुभूतं धाम स्वरूपं येन तस्य गुणात्मभिः सत्त्वादिगुणपरिणामात्मकैः करणैः समाहितैः को गुणो भवेत् उत अथवा विक्षिप्यमाणैस्तैः किं नु दूषणं भवेत् । तत्र दृष्टान्तमाह । घनैरूपेतैः प्राप्तैर्विगतैर्वा यथा रवेः किं गुणदोषौ न भवतस्तथा प्रकाशकस्य प्रकाश्यगुणदोषा न भवन्तीत्यर्थः ॥ २५ ॥ यथेति ॥ वाय्वनलाम्बुभूगुणैः शोषणदहनक्लेदनरजोधूसरत्वादिभिर्गतागतैरागमापायिभिः ऋतुगुणैः शीतोष्णादिभिश्च वा यथा नभो न सज्जते न लिप्यते तथाहंमतेः देहाद्यहमित्यभिमानवतः संसृतिहेतुभिरपि सत्त्वादिमलैस्तत्कार्यैर्विषयैश्च परं प्रकृतिविलक्षणमक्षरं न सज्जते तथा तदात्मभूतो मुक्तोऽपि न सज्जते न लिप्यत इत्यर्थः । यद्वा । अहंमतेरहङ्कारात्परमक्षरं संसृतिहेतुभिः न युज्यते ॥ २६ ॥ तथापीति ॥ यद्यपि जीवन्मुक्तस्य विषयसंबन्धेऽपि न दोषस्तथापि विवेकरहितेन पुंसा तु दृढेन मद्भक्तियोगेन मनसः कषायः तद्वत् दुर्मोचनीयं रजो विषयेषु रागो यावन्न निरस्येत तावत् मायारचितेषु प्रकृतिकार्येषु गुणेषु विषयेषु सङ्गः परिवर्जनीयः ॥ २७ ॥

एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन ॥ छित्त्वाऽऽत्मसंदेहमुपारमेत स्वानन्दतुष्टोऽखिलकामुकेभ्यः ॥ २३ ॥ नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुजलं हुताशः ॥ मनोऽन्नमात्रं धिषणा च सत्त्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥ २४ ॥ समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुत किन्नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥ २५ ॥ यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते ॥ तथाऽक्षरं सत्त्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥ २६ ॥ तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ॥ मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः ॥ २७ ॥

यथेति ॥ यथा नृणामामयो रोगः असाधु असम्यग्यथा भवति तथा चिकित्सितः प्रतिकृतः पुनः पुनः प्ररोहन् देहं तुदति एवमपक्वः अपक्वाः कषायास्तद्दुर्वासना रागादय-स्तन्मूलानि कर्माणि च यस्मिंस्तत् अत एव सर्वसङ्गं सर्वत्र धनपुत्रकलत्रादिषु सज्जमानं मनः कुयोगिनमसम्यग्ज्ञानवन्तं विध्यति भ्रंशयतीत्यर्थः ॥ २८ ॥ कुयोगिन इति ॥ मनुष्यभूतैः पुत्रकलत्रबन्धुशिष्यादिरूपैः त्रिदशैरुपसृष्टैः प्रेरितैरन्तरायैर्विघ्नैर्ये कुयोगिनो विहता भ्रंशिताः । सन्धिरार्षः । तथा च श्रुतिः । "यस्मात्तदेषां न प्रियं यदेतन्मनुष्या विदुः" इति । ते हि प्राक्तनयोगाभ्यासबलेन भूयः पुनर्जन्मान्तरेऽपि योगमेव युञ्जन्ति कुर्वन्ति नतु कर्मतन्त्रं कर्मविस्तारम् । अतो न पूर्वाभ्यासस्य व्यर्थतेति भावः । देवानां तत्र विघ्नकरणे हेतुस्तु तेषां स्वपूजाभङ्ग एव स तु पूर्वं निरूपितः ॥ २९ ॥ करोतीति ॥ असौ विदुषोऽन्यो जन्तुः केनाप्यन्तर्यामिप्रारब्धादिना चोदितः कर्म करोति क्रियते विक्रियते च तत्फललाभादिना हर्षशोकादिविकारं च प्राप्नोत्यतस्तेन संसरतीत्यर्थः । विद्वांस्तु तत्र प्रकृतौ देहे स्थितोऽपि प्रारब्धवशात् आनिपातात् मरणपर्यन्तं देहनिर्वाहकं भोजनादिकर्म करोति परंतु यतः स्वसुखानुभूत्या स्वरूपानन्दानुभवेन निवृत्ततृष्णः अतः न तथा विक्रियते तथा च निरहङ्कारित्वात् न संसरतीत्यर्थः ॥ ३० ॥

यथाऽऽमयोऽसाधु चिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् ॥ एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम् ॥ २८ ॥
कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं नतु कर्मतन्त्रम् ॥ २९ ॥ करोति
कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात् ॥ न तत्र विद्वान् प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥
तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् ॥ स्वभावमन्यत् किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥ ३१ ॥ यदि स्म
पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत् ॥ न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥ पूर्वं गृहीतं
गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमङ्ग ॥ निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ ३३ ॥

तिष्ठन्तमिति ॥ यतः आत्मस्थमतिः आत्मस्था स्वरूपानुसन्धाननिष्ठा मतिर्यस्य सः अतः विद्वांस्तु तिष्ठन्तम् आसीनम् अनुव्रजन्तं शयानम् उक्षन्तं मूत्रयन्तम् अन्नमदन्तं च स्वभावप्राप्तमन्यदपि किंचित् दर्शनस्पर्शनादि ईहमानं कुर्वन्तमात्मानं देहमपि न वेद ॥ ३१ ॥ यदीति ॥ यदि कदाचित् समाधिभङ्गे मनीषी असतां बहिर्मुखानामि-न्द्रियाणां नानाविधमर्थं शब्दादिविषयजातं पश्यति तथापि नानात्वात् मिथ्यास्वप्नवत् इत्यादिनाऽनुमानेन विरुद्धं बाधितं सत् अन्यत् आत्मव्यतिरिक्तं वस्तुतया न मन्यते । यथा पुरुषः स्वापादुत्थाय प्रबुध्य संस्कारमात्रेण स्फुरन्तमत एव स्वयमेव तिरोदधानं स्वाप्नं स्वप्ने दृष्टं देहादिविषयं वस्तुतया न मन्यते तद्वदित्यर्थः ॥ ३२ ॥ पूर्वमिति ॥ अङ्ग हे उद्धव पूर्वं बद्धावस्थायां गुणैः सत्वादिभिस्तदनुरूपैः कर्मभिश्च यदिदं चित्रं देहादिरूपम् अज्ञानकार्यं यदात्मन्यविविक्तमभिन्नतया गृहीतमासीत् तदेव पुनरीक्षया

आत्मज्ञानेन निवर्त्तते । आत्मा तु न केनापि रूपेण गृह्यते उपादीयते नापि विसृज्यो भवति । तथा च मुक्तेः क्रियाफलत्वे भवेदात्मनो विकारस्तस्यास्त्वारोपिताज्ञानमात्रनिवृत्तिरूपत्वान्नात्मसंस्पर्शित्वं बन्धमोक्षयोरिति न विकारशङ्केति भावः ॥ ३३ ॥ यथेति ॥ यथा हि भानोरुदयो नृचक्षुषामावरकं तमः निहन्यात् पूर्वमेव सत् घटादि पुनर्न तु विधत्ते विरचयति । एवं निपुणा निश्चयात्मिका सती यथार्था मे समीक्षा साक्षात्कारः पुरुषस्य बुद्धेः तमिस्रं मोहकमज्ञानमेव हन्यात् निरस्यति न तु किंचिद्विधत्ते इत्यर्थः ॥ ३४ ॥ एष इति ॥ एष आत्मा स्वयंज्योतिः स्वयंप्रकाशः अजः जन्मादिविकाररहितः अप्रमेयः प्रत्यक्षादिभिः प्रमाणैः प्रमातुमशक्यः महानुभूतिः अपरिच्छिन्नज्ञानैश्वर्यादिमान् अत एव सकलानुभूतिः सर्वसाक्षी एकः सर्वात्मकः अद्वितीयश्च वचसां विरामे अगोचरत्वेन निवृत्तौ सत्यामपि यः स्वयंज्योतिः येन ईषिताः प्रेषिताः वाक् असवः इन्द्रियाणि च चरन्ति स्वस्वविषये प्रवर्त्तन्ते ॥ ३५ ॥ देह आत्मेति वदतो निन्दति—एतावानिति ॥ यत् यः केवले अभिन्ने आत्मन् आत्मनि विकल्पो भेदः । ङिल्लुगार्षः । स एतावान् सर्वोऽप्यात्मनो मनसः संमोहो भ्रम एव । हि यतः स्वमात्मानमृते विना यस्य विकल्पस्यावलम्बः आश्रयो नास्ति रजतभ्रमस्येव शुक्तिम् अधिष्ठानं

**यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते ॥ एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥ ३४ ॥ एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ॥ एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति ॥ ३५ ॥ एतावानात्मसंमोहो यद्विकल्पस्तु केवले ॥ आत्मन्नृते स्वमात्मानमवलम्बो न यस्य हि ॥३६॥यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ॥ व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम्॥ ३७ ॥ योगिनोऽपक्वयोगस्य युञ्जतः काय उत्थितैः ॥ उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३८ ॥ योगधारणया कांश्चिदासनैर्धारणान्वितैः ॥ तपोमन्त्रौषधैः कांश्चिदुपसर्गान् विनिर्दहेत् ॥ ३९ ॥**

विना भ्रमादर्शनात् ॥ ३६ ॥ केचित्पुनः प्रत्यक्षादिसिद्धस्य प्रपञ्चस्य बाधायोगाद्वेदान्तानां च क्रत्वर्थकर्तृप्रतिपादकत्वेनार्थवादत्वं मन्यन्ते तन्मतमनूद्य दूषयति—यदिति ॥ नामाकृतिभिः नामभिः रूपैश्च उपलक्षितं पञ्चवर्णं पञ्चभूतात्मकमिन्द्रियैर्ग्राह्यं च यद्द्वयं द्वैतं देहादि तदबाधितमेवेत्ययं पण्डितमानिनाम् अत्र वयमेव पण्डिता इत्यभिमानवतां वेदान्तेष्वयमर्थवादः इति प्रतीतिः व्यर्थेन अर्थशून्येन भ्रमेणैवेति । तथाहि न तावद्विध्येकवाक्यत्वं तेषामस्ति येनार्थवादत्वं स्यात् । न चाकर्तृभोक्तृरूपात्मप्रतिपादनं कर्मविधिशेषतां भजते नाप्यबाधितत्वं जगतः नामरूपात्मकत्वात् । पञ्चवर्णात्मकत्वात् ग्राह्यत्वात् स्वप्नवत् इत्याद्यनुमानैः वाचारम्भणादिश्रुतिभिश्च बाधितत्वात् ॥ ३७ ॥ योगिन इति ॥ अपक्वयोगस्य अनिष्पन्नयोगस्य योगं युञ्जतः कुर्वतो योगिनः कायो यद्यन्तरेवोत्पन्नैरुपसर्गैः रोगाद्युपद्रवैर्विहन्येत अभिभूयते तत्र तदा अयं विधिः प्रतीकारो विहितः ॥३८॥ तमेव दर्शयति—योगेति ॥ कांश्चित्सन्तापशैत्यादीन् योगधारणया सूर्यसोमादिधारणया वातादिरोगान् वायुधारणान्वितैरासनैः कांश्चित् पापग्रहसर्पादिकृतान्

उपसर्गान् उपद्रवान् तपोमन्त्रौषधैर्विनिर्दहेत् निवर्त्तयेदित्यर्थः ॥ ३९ ॥ कांश्चिदिति ॥ कांश्चित्कामक्रोधादीन् अशुभदान् योगभ्रंशनपूर्वकदुःखप्रदान् ममानुध्यानेन नामसंकीर्त्तनादिभिश्च हन्यात्। कांश्चिच्च दम्भाभिमानादीन् योगेश्वराणामनुवृत्त्या अनुसरणेन हन्यात् ॥ ४० ॥ केचिदिति ॥ केचित्पुनर्धीरा जितेन्द्रिया एतैरन्यैश्च विविधोपायैर्देहमेव सुकल्पं जरारोगादिराहित्येन समर्थं तथा वयसि तारुण्ये स्थिरं च विधाय कृत्वाऽथ अद्वन्द्वपरकायप्रवेशादिसिद्धये तत्तद्धारणारूपं योगं युञ्जन्ति नतु ज्ञाननिष्ठारूपम् ॥ ४१ ॥ न हीति ॥ परंतु तत्सिद्ध्यर्थं योगानुष्ठानं कुशलैर्विवेकिभिरादत्यमादरणीयं नैव भवति। यतः शरीरस्यान्तवत्त्वान्नश्वरत्वात्। तदायासः सिद्ध्यर्थायासः अपार्थकः निष्फल एव। यथा वनस्पतिवदात्मैव स्थायी शरीरं तु फलवन्नश्वरम्। अत आत्मलाभार्थ एव यत्नो विधेयो न शरीरसिद्ध्यर्थः ॥४२ ॥ योगमिति ॥ नित्यं योगं निषेवतः। शता आर्षः। प्राणायामादिभिर्यदि संकल्पमन्तरेणैव कायः कल्पतां दाढर्यमियात् तदाऽपि मतिमान् विवेकी मत्परं योगमुत्सृज्य तत् देहदार्ढ्यादिकं न श्रद्दध्यात् न विश्वसेत्।

कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ॥ योगेश्वरानुवृत्त्या वा हन्यादशुभदाञ्छनैः ॥ ४०॥ केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ॥ विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥४१॥ न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ॥ अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥४२॥ योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४३ ॥ योगचर्यामिमां योगी विचरन् मदपाश्रयः ॥ नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४४ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे अष्टाविंशोऽध्यायः ॥ २८ ॥ उद्धव उवाच ॥ सुदुष्करामिमां मन्ये योगचर्यामनात्मनः ॥ यथाऽञ्जसा पुमान् सिद्ध्येत्तन्मे ब्रूह्यञ्जसाऽच्युत ॥ १ ॥ प्रायशः पुण्डरीकाक्ष युञ्जन्तो योगिनो मनः ॥ विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥

नेच्छेद्वा किंतु मदाराधनपर एव भवेदित्यर्थः ॥४३॥ योगचर्यामिति ॥ निःस्पृहः विषयाभिलाषरहितः मदपाश्रयो योगी इमां योगचर्यां विचरन् कुर्वन् अन्तरायैर्नैव विहन्येत किंतु स्वसुखे अनुभूः अनुभूतिर्यस्य तथा भूतो भवतीत्यर्थः ॥ ४४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशाष्टाविंशेऽस्मिन् व्यधाद्गङ्गासहायकः ॥ २८ ॥ ऊनत्रिंशे च पूर्वोक्तो भक्तियोगः समासतः ॥ पुनर्निरूपितस्तत्र श्लोकाः सार्द्धा नवाँयः ॥ सँतोवाचेति पादोना अँष्टबाणा अनुष्टुभः ॥ २९ ॥ सुदुष्करामिति ॥ हे अच्युत अनात्मनः अजितेन्द्रियस्य इमां पूर्वोक्तां योगचर्यां सुदुस्तरां मन्ये। अतः अञ्जसा अनायासेन पुमान् यथा सिद्ध्येत् विमुच्येत तत्साधनमञ्जसा सुबोधं यथा स्यात्तथा मे मह्यं ब्रूहि। क्रियाभेदप्रयुक्तवाक्यभेदादञ्जसेत्यस्य पौनरुक्त्यं न दोषः ॥ १ ॥ प्रायश इति ॥ हे पुण्डरीकाक्ष मनो युञ्जन्तो निगृह्णन्तः अत एव मनसो निग्रहे निमित्ते कर्शिताः परिश्रान्ताः तथापि तस्यासमाधानात् अनिग्रहात् योगिनः प्रायशो विषीदन्ति क्लिश्यन्तीत्यर्थः ॥ २ ॥

अथेति ॥ हे विश्वेश्वर यस्माद् ज्ञानयोगमार्गे क्लेशोऽधिकतरः । अथातः अत एव हे अरविन्दलोचन ये हंसाः सारासारविवेकचतुरास्ते आनन्ददुघं परमानन्दपूरकं तव पदाम्बुजमेव सुखं यथा स्यात्तथा श्रयेरन् सेवन्ते । नु निश्चितमत्र सन्देहो नास्ति । ये त्वमी योगकर्मभिर्मानिनः वयमेव योगज्ञाः वयमेव कर्मकुशला इति गर्विताः सन्तस्तव पदाम्बुजं न श्रयन्ते ते तु त्वन्मायया विहताः । यद्वा । अमी त्वद्भक्ताः त्वन्मायया न विहताः अतः योगकर्मभिर्मानिनो न भवन्ति । अन्ये तु वयमेव योगज्ञा इत्यादि केवलं गर्विता भवन्ति न मुच्यन्ते ॥ ३ ॥ किं चित्रमिति ॥ हे अशेषबन्धो हे अच्युत स्वयं त्वीश्वराणां ब्रह्मादीनां यानि श्रीमन्ति किरीटानि तेषां तटानि अग्राणि तैः पीडितं विलुठितं पादपीठं यस्य तथाभूतोऽपि यो भवान् श्रीरामरूपेण मृगैर्वानरैः सह सख्यमरोचयत् कृपया कृतवान् । यद्वा । मृगैर्वृन्दावनस्थहरिणैः साहित्यं गाश्चारयन्नकरोत् तथा दधि चोरयन् मृगैर्वानरैः सख्यमकरोत् तस्य तव अनन्यशरणेषु नास्ति त्वत्तोऽन्यत् शरणमाश्रयो येषां तेषु दासेषु यथा नन्दगोपीबलिप्रभृतिषु यदात्मसात्वं तेषां य आत्मा तत्तदधीनत्वं राज्ञास्य पुरं विप्रसात्कृतमितिवत् । दासैस्त्वमात्मसात्कृतः इति तवात्मसात्त्वम् । आत्मसात्कृतत्वमित्यर्थः । तत्किं चित्रं किमसंभावितम् ॥ ४ ॥ तमिति ॥

**अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ॥ सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥३॥ किं चित्रमच्युत तवैतदशेषबन्धो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ॥ योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥४॥ तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु ॥ को वा भजेत्किमपि विस्मृतयेऽनुभूत्यै किं वा भवेन्न तव पादरजोजुषां नः ॥५॥ नैवोपयन्त्यपचितिं कवयस्तवेश ब्रह्मायुषाऽपि कृतमृद्धमुदः स्मरन्तः ॥ योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥६॥**

अखिलस्य जगत आत्मानं चेतयितारं स्वरूपभूतं च अत एव दयितं प्रेष्ठं सुखसेव्यमीश्वरं सर्वपुरुषार्थदाने समर्थं चेति कर्मधारयः । त्वां को नु स्वस्मिन् त्वया कृतमुपकारं वेत्तीति कृतज्ञः पुमान् विसृजेत् न कोऽपीत्यर्थः । तथा यत् केवलं भूत्यै ऐश्वर्याय भवति अनु तदनु ऐश्वर्यप्राप्त्यनन्तरं तव विस्मृतये भवति तत् किमपि त्वद्व्यतिरिक्तं स्वर्गादिकं त्वया दत्तमपि को वा तादृशः कुशलः पुमान् भजेत । यद्वा । त्वद्व्यतिरिक्तं किमपि देवतान्तरं धर्मज्ञानादिसाधनं वा भूत्यै ऐश्वर्याय संसारस्य विस्मृतये मोक्षाय च को वा भजेत् । तव पादरजोजुषां भक्तानां नोऽस्माकं किं वा ऐश्वर्यादिकं न भवेत् यदि ते किंचिद्वाञ्छन्ति तदा त्वद्भजनात्त्वत्कृपयैव सर्वं सुलभमित्यर्थः ॥ ५ ॥ नैवेति ॥ हे ईश यो भवान् बहिराचार्यवपुषा गुरुरूपेण अन्तश्च चैत्यवपुषा अन्तर्यामिरूपेण तनुभृतां प्राणिनामशुभं प्रतिबन्धकं पापं विषयवासनां च विधुन्वन् निरस्यन् स्वगतिं निजं रूपं व्यनक्ति प्रकटयति तस्य तव अपचितिं प्रत्युपकारमानृण्यमिति यावत् । कवयो ब्रह्मविदोऽपि त्वत्कृतमुपकारं स्मरन्तः ऋद्धमुदः उपचितपरमानन्दाः सन्तः ब्रह्मायुषाऽपि ब्रह्मायुस्तुल्यमायुः प्राप्य भजन्तोऽपि इत्यर्थः । नैवोपयन्ति नैव प्राप्नुवन्ति । अतः त्वत्कृतोपकारानृण्याय ते सर्वमूलमात्मानं निवेदयन्ति का वार्त्ताऽन्यभजनस्य ॥ ६ ॥

इतीति ॥ इत्येवमनुरक्तचेतसा उद्धवेन पृष्टः जगत्क्रीडनकं क्रीडासाधनं यस्य सः स्वशक्तिभिः रजआदिभिर्गृहीतं मूर्तित्रयं ब्रह्मादिरूपं येन सप्रेम प्रेमयुक्तं मनोहरं स्मितं यस्य सः ईश्वरेश्वरः कृष्णस्तं प्रति जगाद सप्रेम जगाद वा ॥७॥ हन्तेति ॥ हन्तेति हर्षे। सुमङ्गलान् मम धर्मान् ते तुभ्यं कथयिष्यामि। यान् श्रद्धया आचरन् मर्त्यः उपायान्तरेण दुर्जयमपि मृत्युं जन्ममरणादिरूपं संसारं जयति ॥ ८ ॥ कुर्यादिति ॥ मयि अर्पिते मनश्चित्ते संकल्पविकल्पानुसन्धानात्मके येन सः अत एव मद्धर्मेष्वेवात्ममनसो रतिर्यस्य सः मां स्मरन् शनकैः असंरम्भतः मदाराधनार्थं सर्वकर्माणि कुर्यात् ॥९॥ देशानिति॥ मद्भक्तैः साधुभिः श्रितान् अत एव पुण्यान् देशान् संश्रयेत। तथा देवासुरमनुष्येषु ये मद्भक्तास्तेषामाचरितानि कर्माणि चाश्रयेत् ॥ १० ॥ पृथगिति ॥ पृथक् स्वयमेकाकी सत्रेण अन्यैः सह संभूय वा महाराजोपचारैर्गीतादिभिश्च मह्यं मत्प्रीत्यर्थं पर्वसु एकादश्यादिषु यात्रा बहुजनसमागमस्तत्र च योग्यान् महोत्सवान् कारयेत् ॥ ११ ॥ अन्तरङ्गां भक्तिमाह—मामिति ॥ अमलाशयः शुद्धान्तःकरणः यथा खम्

श्रीशुक उवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ॥ गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः ॥७॥
श्रीभगवानुवाच ॥ हन्त ते कथयिष्यामि मम धर्मान्सुमङ्गलान् ॥ यान् श्रद्धया चरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥ कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ॥ मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥ देशान्पुण्यान्संश्रयेत मद्भक्तैः साधुभिः श्रितान् ॥ देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥ पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥ मामेव सर्वभूतेषु बहिरन्तरपावृतम् ॥ ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥ १२ ॥ इति सर्वाणि भूतानि मद्भावेन महामते ॥ सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥ १३ ॥ ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ॥ अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥ १४ ॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ॥ स्पर्धासूयातिरस्काराः साहंकारा वियन्ति हि ॥ १५ ॥

आकाशमिव बहिरन्तश्च पूर्णम् अपावृतम् आवरणशून्यं सर्वभूतेषु आत्मनि च स्थितमात्मानं मामेवेक्षेत ॥ १२ ॥ इतीति ॥ हे महामते निर्मलबुद्धे इत्यनेन प्रकारेण यः केवलं ज्ञानरूपां दृष्टिमाश्रितः सन् सर्वाणि भूतानि मद्भावेन मन्यमानः अतस्तानि सर्वाणि भूतानि सभाजयन् सत्कुर्वन् वर्तेत ॥ १३ ॥ ब्राह्मणे इति ॥ ब्राह्मणादिषु विषमेष्वपि यः समदृक् समं मामेव पश्येत् स पण्डितो मतः। ब्राह्मणे पुल्कसे इति जातितो वैषम्यम्। पुल्कसोऽन्त्यजजातिविशेषः। स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो दातरि चेति कर्मतो वैषम्यम्। अर्के विस्फुलिङ्ग इति गुणतो वैषम्यम्। अक्रूरे शान्ते क्रूरे चेति स्वभावतो वैषम्यम् ॥ १४ ॥ नरेष्विति ॥ नरेष्वीश्वरदृष्टिं नित्यं कुर्वतस्तु अचिरात् शीघ्रमस्मिन् जन्मन्येव समेषु स्पर्धा उत्तमेषु असूया हीनेषु तिरस्कारः स्वस्मिन्नहङ्कारश्च हि निश्चितमेते दोषा वियन्ति नश्यन्ति ॥ १५ ॥

विसृज्येति॥ अतः स्मयमानान् हसतः स्वान् सख्यादीन् तथा दैहिकीं दृशमहमुत्तमः स तु नीच इति दृष्टिं तया दृष्ट्या या व्रीडा लज्जा तां विसृज्य श्वचाण्डालादीनभिव्याप्ये-श्वरदृष्ट्या सर्वान् भूमौ दण्डवत्पतित्वा प्रणमेत्॥१६॥उक्तायाः समदृष्टेरवधिमाह—यावदिति॥ यावत्सर्वेषु भूतेषु मद्भावः मदात्मकमेवेति निश्चयः नोपजायते तावत् वाङ्मनःकाय-वृत्तिभिः एवमुपासीत । तत्र वाचः कर्म सर्वभूतान्युद्दिश्य भगवते नम इत्युच्चारणम् । मनसः कर्म ईश्वरः सर्वत्र प्रविष्ट इति चिन्तनम् । कायकर्म प्रणमेद्दण्डवद्भुवि इति ॥१७॥ सर्वमिति॥तस्य एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति । ततश्च तया आत्ममनीषया सर्वत्र परमेश्वरदृष्ट्या जातया साक्षात्कारात्मिकया विद्यया परितो ब्रह्मैव पश्यन् सर्वतो मुक्तसंशयः सन् क्रियामात्रादुपरमेत् ॥ १८ ॥ अयं हीति॥ मनोवाक्कायवृत्तिभिः सर्वभूतेषु यो मद्भावः । अयं हि अयमेव सर्वेषां कल्पानामुपायभेदानां मध्येऽयमेवोपायो मम सध्रीचीनः समीचीनो मतः ॥ १९ ॥ समीचीनत्वमुपपादयति—न हीति ॥ अङ्ग हे उद्धव निर्गुणत्वाद्धेतोः अनाशिषः निष्कामस्य मदुपासनात्मकस्य धर्मस्योपक्रमे सति । यद्वा । मद्धर्मस्य अङ्गमात्रस्याप्युपक्रमे सति अणु अपि ईषदपि वैगुण्यादिभिर्नाशो नास्त्येव । यतो मया सर्वज्ञेनायं धर्मः सम्यग्व्यवसितो निश्चितः । ननु मन्वादिमुखेन कथं-

विसृज्य स्मयमानान्स्वान्दृशं व्रीडां च दैहिकीम् ॥ प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥ १६ ॥ यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ॥ तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥ सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ॥ परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥ १८ ॥ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ॥ मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥१९॥ न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि ॥ मया व्यवसितः सम्यक् निर्गुणत्वादनाशिषः ॥ २० ॥ यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत् ॥ तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥ २१ ॥ एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ॥ यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥ २२ ॥

चित् ॥ २० ॥ यो य इति ॥ आस्तां तावन्मदुपासनात्मकस्य ध्वंसवार्ता यतो लौकिकोऽपि यो निरर्थो भोजनगमनाद्यायासः सोऽपि मयि परमेश्वरे कल्प्यते चेत् तर्हि धर्मः स्यात्।अनिष्फलाय मत्प्रीतिद्वारा फलदानाय कल्पते समर्थो भवतीत्यन्वयः। हे सत्तम भयादेरिवेति यथा कंसस्य भयं कामो गोपीनां चैद्यादीनां द्वेषश्च मयि कल्पितः सफलो जातः तथेत्यर्थः। यद्वा। लौकिकोऽपि यो यो निरर्थः आयासः सोऽपि मयि परे निष्फलाय चेत्कल्प्यते निष्कामतयाऽर्पितश्चेत्तर्हि धर्म एव स्यात् । निरर्थायासे दृष्टान्तः । यथा भयशोकादेर्हेतोः पलायनाक्रन्दनादिक्लेशस्तद्वत् ॥ २१ ॥ एषेति ॥ अतो बुद्धिमतां विवेकिनां बुद्धिर्विवेकस्तत्फलम् । एषा एव नतु अतिकठिनशास्त्रे संचरिष्णुत्वम् । तथा मनीषिणां चतुराणां मनीषा चातुर्यं तत्फलं च एषा एव नतु धनार्जनादिचातुर्यम् । तदेव दर्शयति । यत् अनृतेन आत्मन्यध्यस्तेन मर्त्येन मरणधर्मकेण मनुष्यदेहेन इह अस्मिन्नेव जन्मनि अमृतं मरणशून्यमत एव सत्यं परमार्थभूतं मा मां प्राप्नोति तत् यो महाबीभत्सेन श्वादिभक्ष्येण शरीरेण सेवादिषु भगवदर्पितेन अप्राकृतानन्दनिधिं भगवन्तं गृह्णाति ।

ततः कोऽन्यः पटुतमः ॥ २२ ॥ एष इति ॥ देवानामपि दुर्गमो दुर्ज्ञेयः ब्रह्मवादस्य वेदान्तसिद्धान्तस्य कृत्स्नः संग्रह एष ते तुभ्यं मया समासव्यासविधिनाऽभिहितः ॥ २३ ॥ अभीक्ष्णश इति ॥ ते तुभ्यं विस्पष्टयुक्तिमत् तत्वज्ञानं मया अभीक्ष्णशः गदितम् एतत् विज्ञाय पुरुषो नष्टसंशयः सन् मुच्यते च ॥ २४ ॥ सुविविक्तमिति ॥ तव प्रश्नं मया सुविविक्तं विविच्य दत्तोत्तरं य एतत् मदुक्तमाख्यानमपि धारयेत् चिन्तयेत् स सनातनं ब्रह्म गुह्यं वेदेऽपि रहस्यं परं ब्रह्म अधिगच्छति ॥२५॥ य एतदिति ॥ यः एतन्मम भक्तेषु सुपुष्कलं विस्तृतं यथा भवति तथा दद्यात् तस्य ब्रह्म ददाति यः ब्रह्मणि दायो यस्य वा तस्य ब्रह्मदायस्य । ब्रह्मोपदेष्टुरिति चतुर्थ्यर्थे षष्ठी । अहमात्मना स्वयमेवात्मानं ददामीत्यन्वयः ॥ २६ ॥ य इति ॥ यः स्वयमपि परमं शुचि अन्येषामपि पवित्रं शोधकम् । पवित्रशब्दात्तत्करोतीति ण्यन्तादच् । एतत् समधीयीत उच्चैः पठेत् स अहरहः

एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः ॥ समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥ अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ॥ एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥ सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् ॥ सनातनं ब्रह्म गुह्यं परं ब्रह्माधिगच्छति ॥२५॥ य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम् ॥ तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥२६॥ य एतत्समधीयीत पवित्रं परमं शुचि ॥ स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥ य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः ॥ मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥ अप्युद्धव त्वया ब्रह्म सखे समवधारितम्॥अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥ नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च ॥ अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥ एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ॥ साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥३१॥ नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥ ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे ॥ यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥ ३३ ॥

ज्ञानदीपेन मामन्यानपि दर्शयन् स्वयमपि पूयेत ॥ २७ ॥ य इति ॥ अव्यग्रः सावधानः । स्फुटमन्यत् ॥२८॥ अपीति ॥ हे उद्धव हे सखे अपि किं त्वया ब्रह्म समवधारितं तथा अपि किं ते मनोभवः असौ मोहः अध्यासः शोकश्च विगतः ॥२९ ॥ नैतदिति ॥ दाम्भिकाय धर्मध्वजाय नास्तिकाय वेदे विश्वासरहिताय शठाय वञ्चकाय अशुश्रूषोः अशुश्रूषवे अश्रद्धया शृण्वते अभक्ताय दुर्विनीताय च एतन्मदुपदिष्टज्ञानभक्त्यादिरहस्यं त्वया न दीयतां नोपदेष्टव्यमित्यर्थः ॥ ३० ॥ एतैरिति ॥ एतैर्दाम्भिकत्वादिभिर्दोषैर्विहीनाय ब्रह्मण्याय विप्रभक्ताय च साधवे शुचये च ब्रूयात् । शूद्राणां योषितां चापि यदि भक्तिः स्यानर्हि तेभ्योऽपि ब्रूयादेव ॥३१॥ नेति ॥ जिज्ञासोः एतद्विज्ञाय ज्ञातव्यं नावशिष्यते । पीयूषं स्वादु अमृतं पीत्वा पातव्यं नावशिष्यते ॥ ३२॥ ज्ञान इति ॥ ज्ञानादौ यावान् धर्मादिलक्षणश्चतुर्विधोऽर्थस्तावान् सर्वोऽपि ते तवाहमेव तत्र ज्ञाने मोक्षः

कर्मणि विहिते धर्मः स्वाभाविके कर्मणि तु कामः योगे त्वणिमादिसिद्धयः वार्तायां कृष्यादावर्थः दण्डनीतावैश्वर्यमिति सिद्धैश्वर्ययोरपि कामान्तर्गतत्वाच्चातुर्विध्यम् ॥ ३३ ॥ मर्त्य इति ॥ मर्त्यो मनुष्यो यदा त्यक्तसमस्तकर्मा सन् मे निवेदितात्मा भवति तदाऽसौ मे विचिकीर्षितो विशिष्टः कर्तुमिष्टो भवति । ततश्चामृतत्वं मोक्षं प्रतिपद्यमानो मयाऽऽत्मभूयाय मदैक्याय मत्समानैश्वर्यायेति वा कल्पते योग्यो भवति ॥३४॥ स इति ॥ एवमादर्शितो ज्ञानकर्मभक्तियोगस्य मार्गो यस्मै सः उद्धवः उत्तमश्लोकस्य भगवतो वचो निशम्य प्रीत्या बाष्पेण उपरुद्धकण्ठः अश्रुभिः परिप्लुताक्षश्च सः बद्धाञ्जलिः सन्न किंचिदप्यूचे ॥ ३५ ॥ विष्टभ्येति ॥ प्रणयेन प्रेम्णाऽवघूर्णं क्षुभितं चित्तं धैर्येण विष्टभ्य आत्मानं बहु कृतार्थं मन्यमानः शीर्ष्णा । शीर्षंश्छन्दसि । तच्चरणारविन्दं स्पृशन् कृताञ्जलिश्च सन् भगवन्तं प्राह स्म ॥ ३६ ॥ विद्रावित इति ॥ यो मोहरूपो महान्धकारो

मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ॥ तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥ ३४ ॥
श्रीशुक उवाच ॥ स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ॥ बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किंचिदूचेऽश्रुपरिप्लुताक्षः
॥ ३५ ॥ विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन्बहु मन्यमानः ॥ कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥
उद्धव उवाच ॥ विद्रावितो मोहमहान्धकारो य आश्रितो मे तव सन्निधानात्॥विभावसोः किंनु समीपगस्य शीतं तमो भीः प्रभवन्त्यजाद्य
॥ ३७ ॥ प्रत्यर्पितो मे भवताऽनुकम्पिना भृत्याय विज्ञानमयः प्रदीपः ॥ हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम्
॥३८॥ वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु ॥ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥३९॥
नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम् ॥ यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ ४० ॥

मया आश्रित आसीत् । सः तव संनिधानात् उपदेशात् विद्रावितः तदुचितमेव । हे अजाद्य ब्रह्मणोऽपि जनक अग्नेः समीपगस्य किं शीतादयः प्रभवन्ति बाधाय समर्था भवन्ति न भवन्तीत्यर्थः । यथाऽग्निसमीपे शीतादिभयं न संभवति तथा त्वद्भक्तस्य मोहादि न संभवतीत्यर्थः ॥ ३७ ॥ प्रतीति ॥ अनुकम्पिना कृपावता भवता मे मह्यं भृत्याय ज्ञानमयः प्रदीपः प्रत्यर्पितः अतस्तव कृतज्ञः त्वया कृतमनुग्रहं जानन् त्वदीयपादमूलं हित्वाऽन्यच्छरणं को वा समीयात् आश्रयेत् ॥ ३८ ॥ वृक्ण इति ॥ सृष्टिविवृद्धये यस्त्वया स्वमायया दाशार्हादिषु मे सुदृढः स्नेहपाशः प्रसारितः स त्वयैवात्मसुबोधहेतिना आत्मतत्वज्ञानशस्त्रेण वृक्णः संच्छिन्नः ॥ ३९ ॥ नम इति ॥ हे महायोगिन् ते तुभ्यं नमोऽस्तु । यथा त्वच्चरणाम्भोजे अनपायिनी शाश्वती रति प्रीतिः स्यात्तथा प्रपन्नं मामनुशाधि अनुगृहाण ॥ ४० ॥

गच्छेति सार्द्धं चतुष्कम् ॥ हे उद्धव मया दिष्टो नियुक्तः त्वं बदर्याख्यं ममाश्रमं गच्छ । तत्र मत्पादतीर्थोदके स्नानोपस्पर्शनैः शुचिः तथा स्नानादेः पूर्वमपि मत्पादतीर्थोदकभूताया अलकनन्दाया गङ्गायाः ईक्षया विधूताशेषकल्मषः निवृत्तसकलदोषः वल्कलानि वसानः परिदधानः वन्यभुक् विषयसुखे निःस्पृहः द्वन्द्वमात्राणां शीतोष्णादीनां तितिक्षुः सहनशीलः सुशीलः संयतेन्द्रियः शान्तः रागादिरहितः समाहितधिया चित्तैकाग्र्येण युक्तः ज्ञानविज्ञानसंयुतः एतत् त्वया यत् शिक्षितं तत् विविक्तं सुविचारितमनुभावयन् चिन्तयन् मय्यावेशितवाक् चित्तो मद्धर्मेषु निरतश्च भव । ततः परं देहपातानन्तरं तिस्रो गतीः त्रिगुणात्मिकादेव तिर्यङ्मनुष्ययोनीः अतिक्रम्य मामेष्यसि ॥ ४१ ॥ ॥४२॥४३॥४४॥ स इति ॥ हरति संसारं मेधा बुद्धिः यद्विषया स हरिमेधास्तेन । असिजार्षः । श्रीकृष्णेन उक्तः परिसृत्य परिक्रम्य अद्वन्द्वपरोऽपि भगवदुपदेशेन दुःखसुखविनिर्मुक्तोऽपि स्नेहेन आर्द्रधीः सः अपक्रमे निर्गमसमये भगवत्पादयोः शिरो निधायाश्रुकलाभिः तत्पादौ न्यषिञ्चत् ॥ ४५ ॥ सुदुस्त्यजेति ॥ सुदुस्त्यजः स्नेहो यस्मिंस्तेन

श्रीभगवानुवाच ॥ गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं ममाश्रमम् ॥ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥ ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः ॥ वसानो वल्कलान्यङ्ग वन्यभुक् सुखनिस्पृहः ॥ ४२ ॥ तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः ॥ शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥ मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ॥ मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ॥ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥ श्रीशुक उवाच ॥ स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ॥ शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे ॥ ४५ ॥ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ॥ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥ ४६ ॥ ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ॥ यथोपदिष्टां जगदेकबन्धुना तपः समास्थाय हरेरगाद् गतिम् ॥ ४७ ॥

भगवता वियोगात् कातरो भीतः अत एव तं परिहातुमशक्नुवन् आतुरो विह्वलः सन् कृच्छ्रं कष्टं ययौ प्राप । ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रत् अतिनिर्बन्धरूपया तदाज्ञया तं पुनः पुनर्नमस्कृत्य बदरिकाश्रमं ययौ । अत्र च "पृष्ठतोन्वगमं भर्तुः पादविश्लेषणाक्षमः ।" इत्यादितृतीयस्कन्धोपक्रमोक्तानुसारेण बदरिकाऽऽश्रमं गच्छन् भगवतः प्रभासयात्रामुपश्रित्य शनैः पृष्ठतो गतः सन्नुपसंहृतनिजकुलं भगवन्तमेकान्ते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्वमाकलय्य तदाज्ञातो गत इति द्रष्टव्यम् ॥ ४६ ॥ तत इति ॥ ततश्च तं भगवन्तमन्तर्हृदि हृदयमध्ये संनिवेश्य ध्यायन् महाभागवत उद्धवो विशालां बदरिकाश्रमं गतः सन् तत्र तपः समास्थाय कृत्वा जगदेकबन्धुना श्रीकृष्णेन यथोपदिष्टां तदामृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पते वै इत्याद्युक्तप्रकारामपरोक्षानुभवलक्षणां हरेर्गतिमगात् ॥ ४७ ॥

य इति ॥ आनन्दरूपो भगवांस्तत्समुद्रो वेदस्ततः संभृतं निःसारितम् ।यद्वा । आनन्दसमुद्रो भगवद्भक्तिमार्गस्तस्मिन् संभृतमेकीकृतं योगेश्वरसेविताङ्घ्रिणा। कृष्णेन भागवताय उद्धवाय भाषितमेतज्ज्ञानामृतं यः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते स विमुच्यत इति तु किं वक्तव्यं यतस्तत्सङ्गेन जगदपि विमुच्यत इत्यर्थः ॥ ४८ ॥ भवभयमिति ॥ भवः संसारः भयं च जरारोगादिनिमित्तं तदुभयं निवृत्तानां प्रवृत्तानां च भृत्यवर्गाणां यथायोग्यमपहन्तुं यो निगमकृत् वेदकर्ता अमृतद्वयमुपजह्रे उद्धृतवान् तत्र ज्ञानविज्ञानयोः साररूपं वेदसारं वेदाख्यपुष्पोद्यानस्य मकरन्दमेकं भृङ्गवदुपजह्रे । भृङ्गो यथा पुष्पमकोपयन्नेवामृतं तत उपहरति तद्वत् । तथोदधितश्चैकमुपजह्रे तच्चोभयं यथातथं भृत्यवर्गानपाययत् । तं पुरुषमृषभं पुरुषोत्तममाद्यं जगत्कारणं कृष्णसंज्ञमहं नतोऽस्मि । मालिनी छन्दः ॥ ४९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकादशैकोनत्रिंशे व्यधाद्भक्तसहायकः ॥ २९ ॥ त्रिंशे स्वायतनं गन्तुं मौसलच्छलतो हरिः ॥ निजं कुलं संजहार श्लोकास्तत्र खमार्गणाः ॥ उवाचेति चतुष्कं च पञ्चबाणा

य एतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ॥ कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयाऽऽसेव्य जगद्विमुच्यते ॥४८॥ भवभयमपहन्तुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृङ्गवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान् पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥ ४९ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥ राजोवाच ॥ ततो महाभागवत उद्धवे निर्गते वनम् ॥ द्वारवत्यां किमकरोद्भगवान् भूतभावनः ॥ १ ॥ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ॥ प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥ प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

अनुष्टुभः ॥ ३० ॥ तत इति ॥ महाभागवत उद्धवे वनं प्रति निर्गते सति द्वारवत्यां भूतभावनः भगवान् किमकरोत् ॥ १ ॥ ब्रह्मेति ॥ स्वकुले ब्रह्मशापेन उपसंसृष्टे उपद्रुते सति यादवर्षभः कृष्णः सर्वनेत्राणाम् उपलक्षणतया सर्वेन्द्रियाणाम् प्रेयसीं स्वतनुं कथमत्यजत् हरौ विप्रशापो न भवति तथापि यादवत्वानुकरणात्कथंचिन्मान्यः अतः तदेतत् कथमत्यजत् । यद्वा । केषांचिन्मुनीनां मते तस्य तनुत्यागः श्रूयते । तत्कथं सम्भवेत् । तत्तनोः सच्चिदानन्दरूपत्वेन त्यागासम्भवात् ॥ २ ॥ प्रत्याक्रष्टुमिति ॥ यत्र यस्मिन् वपुषि लग्नं नयनं प्रत्याक्रष्टुं परावर्त्तयितुमबला न शेकुः । यच्च कर्णरन्ध्रेण प्रविष्टं सत्सतामात्मनि लग्नं लिखितमिव तिष्ठति । ततो न सरति न निर्गच्छति । यस्य श्रीः शोभा संकीर्त्यमाना कवीनां वाचां रतिमुल्लासविशेषं जनयति तेषां मानं जगत्पूज्यतां जनयति इति तु किमु वक्तव्यम् । यच्च जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यमीयुः प्रापास्तद्वपुः कथमत्यजदिति पूर्वेणान्वयः । मन्दाक्रान्ता छन्दः ॥ ३ ॥

दिवीति ॥ दिवि सूर्यपरिवेषादीन् भुवि भूकम्पादीन् अन्तरिक्षे दिग्दाहादीन् महोत्पातान् स्वयमेवोत्पादितत्वेनान्यैर्दुष्प्रतीकारान् समुत्थितान् दृष्ट्वा कृष्णः सुधर्मायामासीनान् यदूनाह स्म ॥ ४ ॥ एत इति ॥ हे यदुपुङ्गवाः एते यमस्य केतवो ध्वजा इव मृत्युसूचकाः महोत्पाताः द्वारवत्यां दृश्यन्ते इति शेषः । अतो नः अस्माकमत्र मुहूर्तमपि न स्थेयम् ॥ ५ ॥ स्त्रिय इति ॥ इतः स्थानात् स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं तीर्थं व्रजन्तु । वयं यत्र प्रत्यक् पश्चिमवाहिनी सरस्वत्यस्ति तं प्रभासाख्यं तीर्थं यास्यामः ॥ ६ ॥ तत्रेति ॥ तत्राभिषिच्य स्नात्वा शुचयः सन्तः समाहिताः उपोष्य स्नपनालेपनार्हणैः देवताः पूजयिष्यामः ॥ ७ ॥ ब्राह्मणानिति ॥ ब्राह्मणैः कृतस्वस्त्ययना वयं महाभागान् ब्राह्मणान् गोभूहिरण्यादिभिः पूजयिष्यामः ॥ ८ ॥ विधिरिति ॥ एष तत्राभिषिच्येत्यादिनोक्तो विधिः प्रकारः अरिष्टघ्नः सर्वोपद्रवनिवारकः उत्तमं मङ्गलायनं

श्रीशुक उवाच ॥ दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ॥ दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥४॥ श्रीभगवानुवाच॥ एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ॥ मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः ॥५॥ स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ॥ वयं प्रभासं यास्यामो यत्र प्रत्यक् सरस्वती ॥६॥ तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ॥ देवताः पूजयिष्यामः स्नापनालेपनार्हणैः ॥७॥ ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम् ॥ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥ विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ॥ देवद्विजगवां पूजा भूतेषु परमो भवः ॥९॥ इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ॥ तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः॥१०॥तस्मिन्भगवताऽऽदिष्टं यदुदेवेन यादवाः ॥ चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥ ततस्तस्मिन्महापानं पपुर्मैरेयकं मधु ॥ दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥ १२ ॥ महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ॥ कृष्णमायाविमूढानां संघर्षः सुमहानभूत् ॥ १३ ॥

मङ्गलप्रापकश्च हि यस्माद्देवद्विजगवां पूजाभूतेषु देवाद्याराधकेषु परमो भव उद्भवहेतुः ॥ ९ ॥ इतीति ॥ सर्वे यदुवृद्धाः मधुद्विषः श्रीकृष्णस्य वाक्यमाकर्ण्य तथास्त्वित्यङ्गीकृत्य नौभिः समुद्रमुत्तीर्य रथैः प्रभासं ययुः ॥ १० ॥ तस्मिन्निति ॥ यादवाः तस्मिन् प्रभासे यद्यदुदेवेन भगवता आदिष्टं तत्सर्वश्रेयोपबृंहितं सर्वं श्रेयःसाधनं परमया भक्त्या चक्रुः । श्रेयोपबृंहितमित्यत्र सन्धिरार्षः ॥ ११ ॥ तत इति ॥ ततस्तस्मिन् स्थाने दिष्टेन दैवेन विभ्रंशितधियस्ते यादवाः अन्यथा तत्र स्थाने तत्कदापि नापश्यन् । यस्य द्रवैः रसैः मतिः भ्रश्यते तन्महत् महामदजनकं पीयते इति पानम् तत् मधु मधुरं मैरेयकं मद्यविशेषं पपुः ॥१२॥ महापानेति ॥ महापानेन अभितो मत्तानां दृप्तचेतसां कृष्णमायया विमूढानामिति मुख्यो हेतुः । वीराणां यादवानां सुमहान् संघर्षः कलहः अभूत् ॥ १३ ॥

युयुधुरिति ॥ ततश्च ते क्रोधेन संरब्धाः क्षोभयुक्ताः आततायिनः शस्त्रपाणयः वेलायां समुद्रतीरे धनुरादिभिः परस्परं युयुधुः । तङ्भाव आर्षः ॥ १४ ॥ पतदिति ॥ पतन्त्य- इतस्ततश्चलन्त्यः पताका येषु तै रथकुञ्जरादिभिरश्वतरान्तैः मिथः समेत्य सुदुर्मदाः ते शरैः न्यहन् न्यघ्नन्नित्यर्थः । आर्षः प्रयोगः । तत्र दृष्टान्तमाह । यथा दद्भिर्दन्तैः द्विपा गजा युध्यन्ते तद्वदिति ॥ १५ ॥ मिथः समेत्येत्यस्य प्रपञ्चः—प्रद्युम्नेति ॥ युधि रूढमत्सरौ प्रद्युम्नसाम्बौ इत्यादियोधानां मध्ये गदौ द्वौ तत्रैकः कृष्णभ्राता एकश्च पुत्रः सुमित्रः सुरथश्च तौ । दैर्घ्यमार्षम् । असुरथनामा वा कश्चित् । समीयतुः युयुधाते॥१६॥अन्ये इति ॥ अन्ये च ये निशठादयः तेऽपि मुकुन्देन मायया विमोहिता अत एव मदान्धेन मदतमसा बलात्कारिताः । यद्वा । मदेन अन्धवत्कारिताः । यद्वा।मदेनान्धकारः जातो येषाम् । इतच् । अन्योऽन्यमासाद्य जघ्नुः॥१७॥दाशार्हेति ॥ दाशार्हादयो नव तत्तद्वंश्या

युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥१४॥ पतत्पताकै रथकुञ्जरादिभिः खरोष्ट्रगोभिर्म-हिषैर्नरैरपि ॥ मिथः समेत्याश्वतरैः सुदुर्मदा न्यहन् शरैर्दद्भिरिव द्विपा वने ॥१५॥ प्रद्युम्नसाम्बौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसा-त्यकी ॥ सुभद्रसंग्रामजितौ सुदारुणौ गदौ सुमित्रासुरथौ समीयतुः ॥ १६ ॥ अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमु-ख्याः ॥ अन्योऽन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥ १७ ॥ दाशार्हवृष्ण्यन्धकभोजसात्वता मध्वर्बुदा माथुरशू-रसेनाः ॥ विसर्जनाः कुकुराः कुन्तयश्च मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥ १८ ॥ पुत्रा अयुध्यन्पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपि-तृव्यमातुलैः ॥ मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहञ्ज्ञातय एव मूढाः ॥ १९ ॥ शरेषु क्षीयमाणेषु भज्यमानेषु धन्वसु ॥ शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥ २० ॥ ता वज्रकल्पा ह्यभवन्परिघा मुष्टिना भृताः ॥ २१ ॥ जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥ प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ॥ हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥

अर्बुदाः माथुराः शूरसेनाश्च तत्तद्देशभवाः इत्याद्याः ते सर्वे सौहृदं स्नेहं विसृज्य त्यक्त्वा मिथोऽयुध्यन्नित्यस्यापकर्षः ॥१८॥ पुत्रा इति ॥ एवमेव मूढाः सन्तः पुत्राः पितृभि-रयुध्यन् । तङ्भाव आर्षः । भ्रातृभिश्च भ्रातरः स्वस्रीयदौहित्रपितृव्यमातुलैः मातुलमातामहभ्रातृभागिनेयाः अयुध्यन् । शेषान्वयः स्पष्टः । अहन् अघ्नन् आर्षमेकत्वम् ॥१९॥शरेष्विति ॥ धन्वसु धनुष्षु मुष्टिभिः एरकाः विप्रशापाऽऽपतितलोहमुसलचूर्णप्रभवान् तृणविशेषान् जह्रुः जगृहुः । शेषं स्पष्टम्॥२०॥ता इत्यर्द्धम्॥ता एरकाः मुष्टिना भृताः धृताः वज्रतुल्याः परिघा लोहदण्डा एव अभवन् ॥ २१ ॥ जघ्नुरिति सार्द्धम् ॥ हे राजन् ततस्ते यादवास्तैः परिघैः द्विषः जघ्नुः । ततस्ते कृष्णेन वार्यमाणास्तु कृष्णमायाविमोहितास्ते तं कृष्णं बलभद्रं च प्रत्यनीकं प्रतिपक्षं मन्यमानाः आततायिनो हिंसापराः नानास्त्रैर्हन्तुं कृतधियः आपन्नाः योद्धुं प्राप्ताः ॥ २२ ॥

अथेति ॥ अथ हे कुरुनन्दन तौ रामकृष्णावपि संक्रुद्धौ अत एरकामुष्टिरूपौ परिघौ उद्यम्य चरन्तौ । यद्वा । उद्यम्य उद्यतौ भूत्वा एरकामुष्टय एव परिघा ययोस्तौ युधि तान् जघ्नतुः ॥ २३ ॥ ब्रह्मेति ॥ ब्रह्मशापेनोपसृष्टानां व्याप्तानां तथा कृष्णमायया आवृतात्मनां तेषां स्पर्धानिमित्तः क्रोधः कुलक्षयं निन्ये । वैणवो वेणुसंघर्षोत्पन्नोऽग्निर्यथा वेणुवनं क्षयं नयति तद्वदिति ॥ २४ ॥ एवमिति ॥ एवं सर्वेषु स्वेषु लोकेषु कुलेषु नष्टेषु सत्सु केशवः अवशेषितो भुवो भारोऽवतारित इति मेने ॥ २५ ॥ राम इति ॥ रामः समुद्रस्य वेलायां तीरे पौरुषं परमपुरुषध्यानलक्षणं योगमास्थाय तमेवाह आत्मनि परमात्मनि आत्मानं संयोज्य तदेकतापन्नं ध्यात्वा मानुष्यं भूर्लोके मनुष्यरूपतां वा तत्याज ॥ २६ ॥ रामेति ॥ रामस्य निर्याणं स्वलोकगमनम् अंशरूपेण पातालगमनं च आलोक्य भगवानपि तूष्णीं पिप्पलवृक्षमासाद्य पृष्ठतोऽवष्टभ्य धरोपस्थे भूतले

अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ॥ एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥ ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ॥ स्पर्द्धा-
क्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वने ॥ २४ ॥ एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ॥ अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥
रामः समुद्रवेलायां योगमास्थाय पौरुषम् ॥ तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥ २६ ॥ रामनिर्याणमालोक्य भगवान् देवकीसुतः ॥
निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥ बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ॥ दिशो वितिमिराः कुर्वन् विधूम इव पावकः
॥ २८ ॥ श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ॥ कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥ सुन्दरस्मितवक्त्राब्जं नीलकुन्तलम-
ण्डितम् ॥ पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥ कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ॥ हारनूपुरमुद्राभिः कौस्तुभेन विराजितम्
॥ ३१ ॥ वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥ ३२ ॥ मुसलावशेषायःखण्डकृतेषुर्लुब्धको
जरा ॥ मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥

निषसाद उपविष्टवान् ॥ २७ ॥ बिभ्रदिति ॥ चतुर्भुजं स्वया प्रभया भ्राजिष्णु प्रकाशमानं रूपं बिभ्रत् बिभ्राणः तथा तयैव प्रभया विधूमः पावक इव दिशो वितिमिराः कुर्वन् निषसादेति सर्वत्रानुषङ्गः ॥ २८ ॥ श्रीवत्सेति ॥ श्रीवत्सः अङ्कः चिह्नमुरसि यस्य तत् घनश्यामं तप्तहाटकस्य सुवर्णस्येव वर्चो यस्य तेन कौशेयाम्बरयुग्मेन परिवीतं कटिप्रदेशे उपरि चावृतम् । सुमङ्गलमतिसुन्दरम् ॥ २९ ॥ सुन्दरेति ॥ सुन्दरस्मितं वक्त्राब्जं यस्मिंस्तत् नीलैः कुन्तलैर्मण्डितं पुण्डरीके इवाभिरामे सुन्दरे अक्षिणी यस्मिन् तत् स्फुरन्मकरकुण्डलम् ॥ ३० ॥ कटीति ॥ कटिसूत्रादिभिर्विराजितं तत्र मुद्राः अङ्गुलीयकानि ॥ ३१ ॥ वनमालेति ॥ वनमालया परीतान्यङ्गानि यस्मिन् तत् मूर्तिमद्भिः निजायुधैश्च विराजितं पङ्कजमिवारुणं वामं पादं दक्षिणे ऊरौ कृत्वा आसीनं रूपं बिभ्रत् निषसाद ॥ ३२ ॥ मुसलेति ॥ तदा चूर्णितमुसलादवशेषं यदयो लोहं तस्य खण्डेन

कृत इषुर्येन सः जरा नाम कश्चिल्लुब्धको मृगयुः मृगास्यमिवाकारो यस्य तं तस्य भगवतश्चरणं मृगोऽयमिति शङ्कमान इषुणा विव्याध । अत्र स्पर्शनमात्रमभूत् न व्यधनम् । तदङ्गस्य सच्चिदानन्दरूपत्वात् अन्यथा पादयोः पपातेत्यत्र शरं निरकाशयत् इत्युक्तं स्यात् ॥ ३३ ॥ चतुर्भुजमिति ॥ तं चतुर्भुजं पुरुषं दृष्ट्वा यतो बाणविसर्गेण स कृतकिल्बिषोऽत एव भीतः सन् शिरसा स्पृशन् असुरद्विषः भगवतः पादयोः पपात ॥ ३४ ॥ अजानतेति ॥ हे मधुसूदन हे उत्तमश्लोक हे अनघ पापेनापि अजानता मया कृतमिदं पापरूपस्य मे ममागः क्षन्तुमर्हसि ॥ ३५ ॥ यस्येति ॥ हे विष्णो हे प्रभो वृद्धाः यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनं वदन्ति । तस्य ते मयाऽसाधु पापं कृतम् ॥ ३६ ॥ तदिति ॥ तत्तस्मात् कृतापराधत्वात् हे वैकुण्ठ मा मां पापिष्ठमाशु जहि।तत्फलमाह यथेति।यथा सतामतिक्रममपराधं पुनरहं न कुर्याम् ॥ ३७ ॥ यस्येति ॥ यस्य तवात्मसंयोगेन स्वाधीनया मायया रचितं त्वन्मायया पिहितदृष्टयो लुप्तविवेकाः विरिञ्चो ब्रह्मा तथास्य तनया रुद्रादयश्च ये चान्ये गिरां पतयो वेदद्रष्टारस्तेऽपि न विदुः । तस्य आचि-

चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ॥ भीतः पपात शिरसा पादयोरसुरद्विषः ॥३४॥ अजानता कृतमिदं पापेन मधुसूदन ॥ क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥ यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ॥ वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥ ३६ ॥ तन्माशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ॥ यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥ यस्याऽऽत्मयोगरचितं न विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ॥ त्वन्मायया पिहितदृष्टय एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥ श्रीभगवानुवाच ॥ मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ॥ याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम्॥३९॥इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ॥ त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥

न्त्यमायस्य ते एतत् ब्रह्मशापादिकम् असद्गतयः पापयोनयो वयमज्ञः साक्षात् किं गृणीमः कथं वर्णयामः । अतो मां जहीति । अत्र तृतीयस्कन्धे निम्लोचति रवावित्युक्तेः सायङ्काले यदूनां संग्रामः तदनन्तरं भगवान् सरस्वतीतटे निषसाद तदैव मृगवधार्थं मृगयुरागतः इति प्रतीयते तच्च नोपपद्यते । कोटिशो यदूनां संग्रामे भीरुजातीनां मृगाणां तदैवागमनं तत्र मृगयोर्मृगयाकालज्ञातुरागमनं चासंभावितम् अतो यदूनां तात्कालिको वधो मिथ्याभूतोऽपि भगवता वैराग्यार्थं प्रत्यायितो वस्तुतो मधूनि पीत्वा देवेष्वन्तर्हितेषु निर्जने देशे लुब्धक आगतः॥३८॥मेति ॥ हे जरे त्वं मा भैः भयं मा कुरु।" बहुलं छन्दसि " इति बाहुलकात्सिचः परस्यापृक्तहल ईट् न। उत्तिष्ठ हि यस्मात् एष कामः मत्ताडनविषयकसंकल्पो मे मयैव कृतः अतः मदनुज्ञातः त्वं सुकृतिनां योग्यं पदं स्थानं स्वर्गं याहि॥३९॥इतीति ॥ इच्छया शरीरिणा भगवता कृष्णेन आदिष्टः सः जराख्यः त्रिः परिक्रम्य तं श्रीकृष्णमित्यादि यथाश्रुतमग्रेऽन्वयः । इच्छाशरीरिणा इत्यस्यायं भावः । शुद्धसत्वमयीं निजां मूर्त्तिमन्तर्धाय तत्प्रतिकृत्यैव विडम्बनमात्रं कृतम् ।

एतच्च देवादयो ब्रह्ममुख्या इत्यादिना स्फुटीकरिष्यति ॥ ४० ॥ दारुक इति ॥ दारुकः कृष्णस्य पदवीं स्थानमन्विच्छन्नन्वेषयन् कृष्णधारितायाः तुलसिकायाः आमोदो यस्मिंस्तं वायुमाघ्राय तेन तां पदवीमधिगम्य अनुमाय तदभिमुखं ययौ ॥ ४१ ॥ तमिति ॥ तत्र तिग्मद्युभिरतिप्रकाशैः आयुधैर्वृतम् अश्वत्थमूले कृतकेतनं कृतनिवासं तं पतिं भगवन्तं विलोक्येति शेषः । स्नेहेन प्लुतो व्याप्त आत्मा यस्य सः अत एव बाष्पमश्रु लोचनयोर्यस्य स रथादवप्लुत्य तस्य पादयोर्निपपात ॥ ४२ ॥ अपश्यत इति ॥ स्पष्टम् ॥ ४३ ॥ इतीति ॥ हे राजेन्द्र सूते इत्येवं ब्रुवति सति तस्य उदीक्षतः ऊर्ध्वं पश्यतः सतः । शता आर्षः । गरुडलाञ्छनो गरुडध्वजः अश्वध्वजसहितो रथः खमुत्पपात ऊर्ध्वमगात् ॥ ४४ ॥ तमिति ॥ दिव्यानि विष्णुप्रहरणानि भगवदायुधानि च तं रथमन्वगच्छन् रथगमनानन्तरं स्वलोकं गतानीत्यर्थः । तेन रथादिगमनदर्शनेनातिविस्मित आत्मा

दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ॥ वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥ तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ॥ स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य स बाष्पलोचनः ॥ ४२ ॥ अपश्यतस्त्वच्चरणाम्बुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ॥ दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥ इति ब्रुवति सूते वै रथो गरुडलाञ्छनः ॥ खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षतः ॥ ४४ ॥ तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च ॥ तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥ गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः ॥ संकर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥ द्वारकायां च न स्थेयं भवद्भिः स्वस्वबन्धुभिः ॥ मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥ स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ॥ अर्जुनेनाविताः सर्व इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥ त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ॥ मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ॥ तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे यदुकुलसंक्षयो नाम त्रिंशोऽध्यायः ॥ ३० ॥

मनो यस्य तं जनार्दन आह स्म ॥ ४५ ॥ गच्छेति ॥ हे सूत त्वं द्वारवतीं गच्छ । तत्र च गत्वा ज्ञातीनां सर्वयादवानां मिथो निधनं रामस्य निर्याणं योगमार्गेण स्वर्लोकगमनं मद्दशां स्वलोकगमनोद्योगं च बन्धुभ्यो ब्रूहि । मद्दशामितीच्छाशरीराभिप्रायेण ॥ ४६ ॥ द्वारकायामिति ॥ स्वं स्वमिति च । स्पष्टम् ॥ ४७ ॥ ॥ ४८ ॥ त्वमिति ॥ मन्मायारचनामिति निजमूर्तेरन्तर्हितत्वाद्वृथा शोकं मा कुर्वित्यर्थः । शेषं द्वयं स्पष्टम् ॥ ४९ ॥ ५० ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमात्रिंश एकादशस्य च ॥ ३० ॥

एकत्रिंशे निजं धाम ययौ कृष्णस्तथा नुतम् ॥ वसुदेवादयोऽप्यत्र श्लोकाः सार्द्धाष्टवाह्निवंः ॥ उवाचेत्येकं सपादा एकत्रिंशदनुष्टुभः ॥ ३१ ॥ अथेति सार्द्धद्वयम् ॥ अथ दारुकगमनानन्तरं तत्र ब्रह्मा आगमत् । भवान्या समं भवश्चागमत् । तथा भगवतो निर्याणं द्रष्टुकामाः परमोत्सुकाः सन्तः महेन्द्रप्रमुखा देवाः प्रजेश्वरेश्वरैर्मरीच्यादिभिः सहिता मुनयः सनकादयश्च पितरः सिद्धाद्याश्च द्विजा गरुडलोकवासिनः पक्षिणः मैत्रेयादयो ब्राह्मणा वा आगमन् ॥१॥२॥ गायन्त इति सार्द्धम् ॥ परमया भक्त्या युताः शौरेर्हरेः कर्माणि जन्म च गायन्तः गृणन्तः स्तुवन्तश्च विमानावलिभिः नभः सङ्कुलं व्याप्तं कुर्वन्तस्ते पुष्पवर्षाणि ववृषुः ॥ ३ ॥ भगवानिति ॥ भगवान् पितामहं ब्रह्माणं तथाऽऽत्मनः स्वस्य विभूतिभूतान् इन्द्रादींश्चागतान् वीक्ष्य प्रेक्षणादिभिस्तान् सभाजयित्वा आत्मनि चात्मानं संयोज्य स्वरूपानुसन्धानपरो भूत्वा पद्मसदृशे नेत्रे न्यमीलयत् । अयं भावः । पूर्वं ब्रह्मादिभिः सलोकान् लोकपालान्नः पाहि । वैकुण्ठकिङ्करान् इति प्रार्थितत्वात् इदानीं च स्वं स्वं लोकं प्रति नेतुमागतान् बहुषु च तेषु दाक्षिण्यात्तान् वञ्चयितुं समाधिमिव

श्रीशुक उवाच ॥ अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ॥ महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥१॥ चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ॥२॥ गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ॥ कुर्वन्तः संकुलं राजन् भक्त्या परमया युताः ॥३॥ भगवान् पितामहं वीक्ष्य विभूतीरात्मनो विभुः ॥ संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ४ ॥ लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ॥ योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत् स्वकम् ॥ ५ ॥ दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ॥ सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ ६ ॥ देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि ॥ अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ७ ॥

पद्मनेत्रे न्यमीलयत् इति ॥ ४ ॥ लोकेति ॥ लोकानामभिरामां मनोहरामत एव धारणाध्यानयोर्मङ्गलं शोभनं विषयं स्वतनुमाग्नेय्या योगधारणया अदग्ध्वैव तनुसहित एव स्वकं धाम वैकुण्ठाख्यमाविशत् जगाम । यद्वा । धारणाध्यानयोर्मङ्गलं यथा स्यात्तथा शुद्धजाम्बूनदमिव स्वतनुं दग्ध्वा दाहोत्तीर्णसुवर्णमिव स्वतनुमादायैव धामाविशत् । अत्र योगधारणोद्भूताग्निद्वारैव वपुषोऽन्तर्द्धानविवक्षा जहौ तच्च कलेवरमित्यादिसंवादादित्याहुः । शरीरेण सहैव गमनमित्यन्ये । सर्वशक्तिशालिनः प्रभोरुभयथापि न विरोधः ॥५॥ दिवीति ॥ पूर्वार्द्धं स्पष्टम् । भूमेः सकाशात् सत्यादयोऽपि तं श्रीकृष्णमनुजग्मुः । कलौ सत्यादितिरोधानात् ॥६॥ देवेति ॥ तदा श्रीकृष्णेऽन्तर्हिते सति कुतो गत इति वितर्कयन्तोऽपि ब्रह्ममुख्या देवादयः स्वधाम विशन्तम् अविज्ञातगतिं श्रीकृष्णं न ददृशुः । ततश्चातिविस्मिता बभूवुः ॥ ७ ॥

सौदामन्या इति ॥ आकाशे अभ्रमण्डलं हित्वा यान्त्याः सौदामन्या विद्युतो गतिर्यथा मर्त्यैर्न लक्ष्यते देवैस्तु लक्ष्यते तथा भूमण्डलं हित्वा गच्छतः श्रीकृष्णस्य गतिः देवैरपि न लक्षिता किंतु तत्पार्षदैरेवेत्यर्थः ॥ ८ ॥ ब्रह्मेति ॥ स्पष्टम् ॥९॥ राजन्निति ॥ परस्य सर्वकारणस्य परमेश्वरस्य श्रीकृष्णस्य तनुभृत्सु यादवादिषु जननाप्ययेहाः आविर्भावतिरोभावचेष्टाः मायया विडम्बनमनुकरणमात्रमवेहि जानीहि। ननु जीववत्प्राकृतदेहादिसम्बन्धोऽस्ति। येन तद्दाहादिचिन्तया खेदो युक्तः स्यादित्याशयः। तत्र दृष्टान्तमाह। यथा नटस्येति। नटो यथा अविकृत एव नानारूपैर्जन्मादीन् विडम्बयति तद्वद् भगवानपीत्यर्थः। विश्वसर्गनिरोधादिष्वप्यसावविकृत एवास्त इत्याह। सृष्ट्वेति। आत्मना स्वयमेवेदं जगत्सृष्ट्वा अन्तर्यामित्वेनानुविश्य तत्र विहृत्य क्रीडित्वा अन्ते च द्विपरार्धावसाने सर्वं स्वस्मिन् संहृत्य उपरतः निवृत्तव्यापार आत्ममहिना स्वमहिम्ना आत्मानन्दानुभवरूपेणास्ते ॥ १० ॥ मर्त्येनेति ॥ यमेन स्वलोकं प्रति नीतं गुरुसुतं मर्त्येन तेनैव शरीरेणोपलक्षितं य आनयत् आनीतवान्। यश्च शरणदः शरणागतायास्तव मातू

सौदामन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम् ॥ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥८॥ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं
हरेः ॥ विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा ॥ ९ ॥ राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य ॥
सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥ १० ॥ मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छ-
रणदः परमास्त्रदग्धम्॥जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयद् मृगयुं सदेहम्॥११॥ तथाऽप्यशेषस्थितिसंभवाप्यये-
ष्वनन्यहेतुर्यदशेषशक्तिधृक् ॥ नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥ १२ ॥ य एतां प्रातरुत्थाय कृष्णस्य
पदवीं पराम् ॥ प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १३ ॥

रक्षकस्त्वां च ब्रह्मास्त्रदग्धं रक्षितवान्। यश्चान्तकानामप्यन्तकं मृत्युंजयमीशं श्रीरुद्रं बाणसङ्ग्रामे जितवान् मृगयुं लुब्धकं यः स्वः स्वर्गमनयत् निन्ये सोऽसौ स्वावने स्वस्य स्वानां यदूनां चावने रक्षणे अनीशः असमर्थः किम् ॥ ११ ॥ तथापीति ॥ एवमुक्तप्रकारेणाशेषस्य जगतः स्थितिसंभवाऽप्ययेषु अनन्यहेतुर्निरपेक्षक एव कारणं स्वयं यत् यस्मात् अशेषशक्तिधृक् तथापि मर्त्येन लोकेन किं न किंचित्कार्यमिति स्वस्थानामात्मनिष्ठानां दिव्यां गतिं प्रदर्शयन् शिक्षयितुम् अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधाय रन्तुमेव यतेरंस्तन्मा भूदित्याशयः। अतः मर्त्येन मनुष्यलोके स्थित्या किम् इति विचार्य यादवान् संहृत्य शेषितमवशेषितं निजं वपुरत्र स्थापयितुं भगवान् नैच्छत् अन्तर्दधौ इत्यर्थः। मर्त्येन किमित्यस्य उभयत्रान्वयः ॥ १२ ॥ य इति ॥ यः प्रातरुत्थाय प्रयतः प्रयत्नवान् सन् कृष्णस्यैतामुक्तप्रकारां पदवीं वैकुण्ठगमनरूपां भक्त्या कीर्तयेत् इत्यनुक्षणं शृणुयात् स्मरेद्वा सतामनुत्तमां सर्वोत्तमां वैकुण्ठाख्यां पदवीमेव प्राप्नोति ॥ १३ ॥

दारुक इति सार्द्धम् ॥ हे नृप कृष्णेन विच्युतो रहितः दारुकः द्वारकामेत्य गत्वा वसुदेवोग्रसेनयोश्चरणौ पतित्वा अस्रैः अश्रुभिस्तौ न्यषिञ्चत् । ततः कृत्स्नशः सर्वेषां वृष्णीनां निधनं कथयामास ॥ १४ ॥ तदिति सार्द्धम् ॥ तत्तेषां निधनं श्रुत्वा उद्विग्नं भीतं हृदयं येषां ते अत एव शोकेन विमूर्च्छिताः । मुख्यं हेतुमाह । कृष्णविश्लेषेण विह्वलाः ते जना आननं घ्नन्तस्ताडयन्तो यत्र व्यसवो मृता ज्ञातयः शेरते तत्रैव जग्मुः ॥ १५ ॥ देवकीति सार्द्धम् ॥ देवकी रोहिणी च तथा वसुदेवश्च एते त्रयो रामकृष्णौ स्वसुतावपश्यन्तः शोकेन आर्त्ताः स्मृतिं चेतनां जहुः मूर्छिता जाताः । यतो भगवद्विरहेणातुरा अतस्तत्र प्रभासे प्राणांश्च जहुः ॥१६॥ उपगुह्येति ॥ अन्याश्च स्त्रियः तांस्तान् स्वस्वपतीन् उपगुह्य आलिङ्ग्य चितामारुरुहुः । एतद्वक्ष्यमाणं च अवस्तुभूतमेव ॥ १७ ॥ वसुदेवेति ॥ वसुदेवपत्न्यः तद्गात्रमालिङ्ग्याग्निमाविशन् । हरेः स्नुषाः पुत्रभार्याः

दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ॥ पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः ॥ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ॥ १४ ॥
तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः॥ व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥१५॥
देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ॥ कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ॥ १६ ॥
उपगुह्य पतींस्तांस्तांश्चितामारुरुहुः स्त्रियः ॥ रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ॥१७॥ वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः ॥ कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ १८ ॥ अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ॥ आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ १९ ॥ बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम् ॥ हतानां कारयामास यथावदनुपूर्वशः ॥ २० ॥ द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ॥ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ २१ ॥ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः ॥ स्मृत्याऽशेषाऽशुभहरं सर्वमङ्गलमङ्गलम् ॥ २२ ॥

प्रद्युम्नादीनालिङ्ग्याग्निमाविशन् । कृष्णपत्न्यो रुक्मिण्याद्याः कृष्णास्यान्तर्ध्यानात्तदात्मिकास्तमेव ध्यायन्त्यः अग्निमाविशन् ॥१८॥ अर्जुन इति ॥ प्रेयसः प्रियतमस्य सख्युः कृष्णस्य विरहेणातुरो विह्वलोऽप्यर्जुनः सदुक्तिभिः सत्या यथार्था उक्तयो येषु तैः कृष्णगीतैः शोकमोहादिनिरासकैः श्रीगीतावचनैः आत्मानं सान्त्वयामास समाहितमकरोत् ॥ १९ ॥ बन्धूनामिति ॥ नष्टगोत्राणां नष्टसंततीनां हतानां बन्धूनां यत्साम्परायिकं परलोकसाधनं दाहपिण्डोदकदानादि कर्म तत् यथावत् यथाविधि अनुपूर्वशः क्रमेणार्जुनः कारयामास ॥ २० ॥ द्वारकामिति ॥ हे महाराज श्रीमद्भगवतः आलयं वर्जयित्वा हरिणा त्यक्तां द्वारकां क्षणात् तस्मिन्नेव क्षणे समुद्रोऽप्लावयत् ॥ २१ ॥ नित्यमिति ॥ तत्र मन्दिरे भगवान् नित्यं सन्निहितो वर्तते अत एव स्मृतिमात्रेणैवाशेषाशुभहरं सर्वपापनिवर्तकं सर्वेभ्योऽपि मङ्गलेभ्यो मङ्गलावहेभ्यो मङ्गलं श्रेष्ठं तन्मन्दिरमिति शेषः॥२२॥

स्त्रीति ॥ धनञ्जयोऽर्जुनः स्त्रीबालवृद्धानादाय इन्द्रप्रस्थं समावेश्य तत्र वज्राख्यमनिरुद्धपुत्रं राज्येऽभ्यषेचयत् । अत्र बालवृद्धाः यादवव्यतिरिक्ता ज्ञेयाः । शापस्य
कुलविषयत्वात् मौसलादवशेषित इति वज्रस्यैव भगवदिच्छयावशेषश्रवणाच्च ॥२३॥ श्रुत्वेति ॥ पितामहाः युधिष्ठिरादयः त्वां तु वंशधरं राजानं कृत्वा महापथं हिमालयम् ।
स्फुटमन्यत् ॥२४॥ य इति ॥ यो मर्त्यः देवदेवस्य विष्णोः एतज्जन्म तत्कृतानि कर्माणि च श्रद्धया कीर्तयेदिति श्रवणस्मरणयोरप्युपलक्षणम् । स सर्वपापैः प्रमुच्यते
॥२५॥ इत्थमिति ॥ इत्थमेवं यथा त्वया श्रुतानि तथा हरेः भक्तदुःखहर्तुः भगवतो यो रुचिरोऽवतारस्तस्य वीर्याणि वीर्यसूचकानि शन्तमानि परमानन्दजनकानि अन्यत्र

स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ॥ इन्द्रप्रस्थं समावेश्य वज्रं तत्राऽभ्यषेचयत् ॥२३॥ श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ॥
त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २४ ॥ य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च ॥ कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमु-
च्यते ॥ २५ ॥ इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि ॥ अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां
परमहंसगतौ लभेत ॥ २६ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

॥ समाप्तोऽयं एकादशस्कन्धः ॥

पुराणान्तरेषु इह अस्मिंश्च पुराणे श्रुतानि बाल्यचरितानि । चकारात् पौगण्डयौवनचरितानि च गृणन् कीर्तयन् शृण्वन् स्मरंश्च पुरुषः परमहंसानां गतौ प्राप्ये भगवति
परां भक्तिं लभेत प्राप्नुयात् ॥ २६ ॥ अव्यक्तमक्षरमुपास्य बभूव कश्चित् स्वं लब्धवर्णमवगत्य कृतार्थमानी ॥ सवाग्विभङ्गललितस्फुरणादमन्दानन्दोत्थया जडतयैव वयं
कृतार्थाः ॥ १ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायश्वरमेऽध्याय एकादशे व्यधात् ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजेन गंगाविष्णुना स्वकीये
"लक्ष्मीवेङ्कटेश्वर" यन्त्रालयेऽङ्कित्वा प्रकाशितम् ।

सङ्ख्यायाः सेनाया धनस्य वा पतिः नन्द इति ख्यातः प्रसिद्धो महानन्दिसुतो भविष्यति ॥ ८ ॥ तत इत्यर्द्धम् ॥ ततः प्रभृति नृपा शूद्रप्राया अधार्मिका भविष्यन्ति ॥ ९ ॥ स इति ॥ महापद्म इति नामैकदेशग्रहणम् । महापद्मपतिः अनुल्लङ्घितशासनः स नन्दः द्वितीयो भार्गवः परशुराम इव एकमेव छत्रं तस्यैव राजचिन्हं यस्यां तथाभूतां पृथिवीं शासिष्यति । तत्र राज्यं करिष्यति ॥ १० ॥ तस्येति ॥ समाः वर्षाणि । स्फुटमन्यत् ॥ ११ ॥ नवेति ॥ नवसङ्ख्याकान्नन्दान् नन्दादीन्नन्दमेकम् अष्टौ तत्पुत्रांश्चेत्यर्थः । तान्नन्दादीन् प्रपन्नान् विश्वस्तान् कौटिल्यवात्स्यायनादिपर्यायश्चाणक्याख्यो द्विज उद्धरिष्यति उन्मूलयिष्यति विनाशयिष्यति । ततश्च तेषां सपितृकाणां सुमाल्यादीनामभावे सोमवंशे समाप्ते कलौ जगतीं पृथिवीं मौर्या मौर्यसंज्ञका भोक्ष्यन्ति ॥ १२ ॥ मौर्या भोक्ष्यन्तीति स्फुटयति—स एवेति ॥ स एव द्विजः चन्द्रगुप्तसंज्ञं प्रथमं मौर्यं राज्येऽ-

ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः ॥९॥ स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः ॥ शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥१०॥ तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः ॥ य इमां भोक्ष्यन्ति महीं राजानः स्म शतं समाः ॥ ११ ॥ नव नन्दान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ १२ ॥ स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥ तत्पुत्रो वारिसारस्तु ततश्चाशोकवर्धनः ॥१३॥ सुयशा भविता तस्य संगतः सुयशःसुतः ॥ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १४ ॥ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ॥ १५ ॥ आग्निमित्रस्ततस्तस्मात्सुज्येष्ठोऽथ भविष्यति ॥ वसुमित्रो भद्रकश्च पुलिन्दो भविता सुतः ॥ १६ ॥ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥ ततो भागवतस्तस्माद्देवभूतिरिति श्रुतः ॥ १७ ॥ शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ ततः कण्वानियं भूमिर्यास्यत्यल्पगुणा नृप ॥ १८ ॥ शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥ स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥ १९ ॥

भिषेक्ष्यति तत्सुतः तस्य चन्द्रगुप्तस्य सुतः । स्फुटमन्यत् ॥ १३ ॥ सुयशा इति ॥ सुयशःसुतः संगतसंज्ञकः । स्फुटमन्यत् ॥ १४ ॥ शतधन्वेति ॥ हे कुरुकुलोद्वह यद्यपि चन्द्रगुप्तादयो नवैव तथापि पराशरादिभिश्चन्द्रगुप्तात्प्रथमो दशरथ उक्तस्तत्साहित्येन एते दशेत्युक्तं ज्ञेयम् । सप्तत्रिंशदुत्तरं शतं समाः भोक्ष्यन्ति ॥ १५ ॥ अग्नीति द्वयम् ॥ अग्निमित्र इति बृहद्रथस्य सेनानीः पुष्पमित्रो नाम स्वामिनं हत्वा स्वयं राज्यं करिष्यति स च न तद्वंश्यः किंतु शुङ्गानां प्रथमस्तेन सहाग्निमित्रादयो दश ॥ १६ ॥ ॥ १७ ॥ शुङ्गा इति ॥ दशवर्षशताधिकं वर्षशतं द्वादशाधिकं विष्णुपुराणानुसारेण ॥ १८ ॥ कथं कण्वान् यास्यति तदाह—शुङ्गमिति ॥ कामिनं परस्त्रीलम्पटं देवभूतिनामानं शुङ्गं हत्वा तदमात्यो महामतिः राजकार्ये निपुणबुद्धिः वसुदेवकण्वो राज्यं स्वयं करिष्यति ॥ १९ ॥

तस्येति सार्द्धम् ॥ कण्वानामन्तिमः सुशर्मा ज्ञेयः । इमे वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति । अत्रान्येऽपि राजाना ज्ञेयाः । वर्षाणामाधिक्यात् ॥ २० ॥ हत्वेति ॥ तद्भृत्यः सुशर्मणो भृत्योऽन्ध्रजातीयो वृषलः शूद्रः बली बलवान् असत्तमश्च बलीकनामा अन्तिमं काण्वं सुशर्माणं हत्वा कंचित्कालं गां भूमिं भोक्ष्यति ॥ २१ ॥ कृष्णेति श्लोकौ स्पष्टौ ॥ २२ ॥ २३ ॥ अनिष्टेति ॥ अनिष्टकर्मा अटमानस्य सुतः तस्य सुतो हालेयस्तस्य चात्मजस्तलकः । स्फुटमन्यत् ॥ २४ ॥ चकोर इति ॥ हे अरिन्दम सुनन्दस्य चकोराख्यः सुतस्तस्य सुतः अनवमः यत्र यस्य शिवस्वातिः सुतः । यद्वा । यत्र येषु बहुसंज्ञेषु अष्टसु नवमः

तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः ॥ काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च ॥ शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ॥ २० ॥ हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ गां भोक्ष्यत्यन्ध्रजातीयः कंचित्कालमसत्तमः ॥ २१ ॥ कृष्णनामाऽथ तद्भ्राता भविता पृथिवीपतिः ॥ श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥ २२ ॥ लम्बोदरस्तु तत्पुत्रस्तस्माच्चिबिलको नृपः ॥ मेघस्वातिश्चिबिलकाद्टमानस्तु तस्य च ॥२३॥ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः ॥ २४ ॥ चकोरो बहवो यत्र शिवस्वातिररिंदम ॥ तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः ॥ २५ ॥ मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः सलोमधिः ॥ २६ ॥ एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च ॥ षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन ॥ २७ ॥ सप्ताभीरा आवभृत्या दश गर्दभिनोनृपाः ॥ कङ्काः षोडश भूपाला भविष्यन्ति च लोलुपाः ॥ २८ ॥ ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः ॥ भूयो दश गुरुण्डाश्च मौना एकादशैव तु ॥ २९ ॥ एते भोक्ष्यन्ति पृथिवीं दश वर्षशतानि च ॥ नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥३०॥ भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तैः संस्थिते ततः ॥ किलिकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः ॥ ३१ ॥ शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः ॥ इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३२ ॥

शिवस्वातिरिति स्वामिपादादयः । तस्य अरिन्दमस्तस्य गोमत्याख्यः पुत्रः ततः पुरीमान् भविता ॥ २५ ॥ मेदेति ॥ पुरीमतः सुतो मेदशिराः तस्य सुतः शिवस्कन्दः ततस्तस्मात् यज्ञश्रीः सुतो जातः । तस्य सुतो विजयो भाव्यः । तस्य चन्द्रविज्ञः तस्य सलोमधिः ॥ २६ ॥ एते इति ॥ एते बलीकप्रभृतयः पञ्चविंशतिनृपतयः त्रिंशच्च चत्वार्यब्दशतानि च षट्पंचाशच्च । एवं षडशीत्युत्तरं चतुःशतं वर्षाणि पृथिवीं भोक्ष्यन्तीत्यर्थः ॥२७॥ सप्तेति ॥ अवभृतिर्नगरी तत्पतयः आवभृत्यसंज्ञकाः आभीरजातीयाः सप्तगर्दभिसंज्ञका नृपाः दशकङ्कसंज्ञकाः षोडश ते च सर्व एव लोलुपा विषयासक्ताः॥२८॥ तत इति ॥ स्फुटम् ॥२९॥ एत इति त्रिकम् ॥ एते मौनव्यतिरिक्ताः आभीरादयः

पञ्चषष्टिर्नृपाः दशसङ्ख्यानि वर्षशतानि नवाधिकां नवतिं च एकोनशताधिकं वर्षसहस्रमित्यर्थः । पृथिवीं भोक्ष्यन्ति । ततश्च पूर्वोक्ता एवैकादश मौनास्त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति ततश्च तैः संस्थिते तेषु मौनेषु मृतेषु सत्सु किलकिलायां पुर्यां भूतनन्दोऽथ वङ्गिरिः इत्यादय इत्येते वर्षशतम् । अधिकानि षड्वर्षाणि नृपतयो भविष्यन्ति ॥३०॥३१॥३२॥ तेषामिति ॥ तेषां भूतनन्दादीनां यथायथं बाल्हिकादयस्तन्नामानस्त्रयोदश सुता भवितारः । अथ च पुष्यमित्रो नामान्यो राजन्यो भविष्यति । अस्य च दुर्मित्रो नाम पुत्रो भविष्यति ॥ ३३ ॥ एककाला इति ॥ सप्त आन्ध्राः सप्त कौशलाः वैदूरपतयः निषधाश्चैते च तद्देशनामभिः प्रख्यातास्तुल्यकालाः खण्डमण्डलेषु भूपास्तत एव तेभ्यो बाह्लिकेभ्य एव भाव्या भविष्यन्ति ॥३४॥ मागधानामिति ॥ मागधानां तु वंशे विश्वस्फूर्जिर्नाम पुत्रो भविता पुरञ्जयः पुराणां जेता स च परः प्राचीनः पुरञ्जयः योऽन्यः पुरंजयो नामेत्युक्तस्ततो द्वितीय इव प्रतापेनातिप्रसिद्धः अन्यानेव वर्णान् ब्राह्मणादिस्थानीयान् पुलिन्दयदुमद्रकसंज्ञान् म्लेच्छप्रायान्करिष्यति अपरानिति

तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ॥ पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३३ ॥ एककाला इमे भूपाः सप्तान्ध्राः सप्त
कौशलाः ॥ वैदूरपतयो भाव्या नैषधास्तत एव हि ॥ ३४॥ मागधानां तु भविता विश्वस्फूर्जिः पुरंजयः ॥ करिष्यत्यपरो वर्णान् पुलिन्दय-
दुमद्रकान् ॥ ३५ ॥ प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ॥ वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ अनुगङ्गामाप्रयागं गुप्तां भोक्ष्य-
ति मेदिनीम् ॥ ३६ ॥ सौराष्ट्रावन्त्यभीराश्च शूद्रा अर्बुदमालवाः ॥ व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥ ३७ ॥ सिन्धोस्तटं चन्द्र-
भागां कौन्तीं काश्मीरमण्डलम् ॥ भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥ ३८ ॥ तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः ॥
एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥ ३९ ॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ॥ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥ ४० ॥

वा पाठः । तत्र अन्यान् पुलिन्दादिसंज्ञान् वर्णान्करिष्यति ॥ ३५ ॥ प्रजाश्चेति सार्द्धम् ॥ सच पद्मवत्यां पुरि स्थितः यतो वीर्यवान् क्षत्रमुत्साद्य अब्रह्मभूयिष्ठाः अत्रैवर्ण्य-प्रचुराः प्रजाः स्थापयिष्यति । अनुगङ्गां गङ्गाद्वारमारभ्य आप्रयागं प्रयागपर्यन्तं गुप्तां पालितां मेदिनीं भोक्ष्यति ॥ ३६ ॥ सौराष्ट्रेति ॥ तदनन्तरं च सौराष्ट्रावन्त्यादिदेशव-र्त्तिनो द्विजाः व्रात्या उपनयनरहिताः अत एव शूद्रप्रायाः जनाधिपा राजानो भविष्यन्ति ॥ ३७ ॥ सिन्धोरिति ॥ सिन्धोर्नदविशेषस्य तटं तत्स्थानदेशान् चन्द्रभागां नदीं तत्तटदेशान् कौन्तीं पुरीं काश्मीरमण्डलं च शूद्रव्रात्याद्याः अब्रह्मवर्चसः वेदाचारशून्याः तथा म्लेच्छाश्च भोक्ष्यन्ति ॥ ३८ ॥ तुल्येति ॥ इमे च म्लेच्छप्रायाः भूभृतस्तु-ल्यकालाः भविष्यन्ति । किंच एते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारस्तीव्रमन्यवः अतिक्रोधिनश्च भविष्यन्ति ॥ ३९॥ स्त्रीबालेति ॥ स्त्रीबालगोद्विजघातिनः परदारधनयोरादृता आदरयुक्ताः तद्ग्रहणशीलाः उदितप्रायाः अस्तमितप्रायाश्च "क्षणे तुष्टाः क्षणे रुष्टास्तुष्टा रुष्टाः क्षणे क्षणे"॥ अल्पसत्वा अल्पधै-

र्यबलादियुक्ताः अल्पकायुषश्च ॥ ४०॥ असंस्कृता इति ॥ असंस्कृता गर्भाधानादिसंस्काररहिताः स्ववर्णाश्रमोचितक्रियाहीनाः रजसा तमसा वृताः । अतो राजन्यरूपिणः म्लेच्छास्ते प्रजाः भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥ ४१ ॥ तदिति ॥ तन्नाथास्ते उक्तविधा नाथा येषां ते जनपदादेशवर्त्तिनो मनुष्यास्तेषामिव शीलमाचारो वादश्च तद्वन्तः अन्योऽन्यतो राजतश्च पीडिताः क्षयं यास्यन्ति ॥ ४२ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकायाम् ॥ गङ्गासहायो विवृतिं द्वादशस्याऽऽदिमे व्यधात् ॥ १ ॥ द्वितीये तु कलेर्दोषा अथ कल्किप्रसादतः ॥ तेषां क्षये कृतयुगं श्लोकाः सार्द्धाश्चतुःकृताः ॥ अनुष्टुभोऽपि तावन्तं उवाचेत्येकमेव तु ॥ ततश्चेति ॥ हे राजन् बलिना कालेन ततोऽग्रेऽनुदिनं धर्मसत्यादिका दयान्ताः आयुर्बलं स्मृतिश्चैतानि नङ्क्ष्यन्ति ॥ १ ॥ वित्तमिति ॥ जन्मनिमित्तः सदाचारनिमित्तो वा यो गुणः लोके उत्कर्षस्तस्योदयो वित्तमेव वित्तवतो नीचस्याप्युत्कर्षः । नतु तद्धीनस्योत्तमकुलोत्पत्यादिमतोऽपीत्यर्थः । तथा धर्मन्याययोर्व्यवस्थायां बलमेव कारणं नतु यथार्थमित्यर्थः ॥ २ ॥ दाम्पत्य इति ॥

असंस्कृताः क्रियाहीना रजसा तमसा वृताः ॥ प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ॥ ४१ ॥ तन्नाथास्ते जनपदास्तच्छीलाचारवादि-
नः ॥ अन्योऽन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥४२॥ इति श्रीभा० महापु० द्वादशस्कन्धे प्रथमोऽध्यायः ॥१॥ श्रीशुक उवाच ॥ तत-
श्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ॥ कालेन बलिना राजन्नङ्क्ष्यन्त्यायुर्बलं स्मृतिः ॥ १ ॥ वित्तमेव कलौ नृणां जन्माचारगुणोदयः ॥ धर्म-
न्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥ दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥३॥ लिङ्ग-
मेवाश्रमख्यातावन्योऽन्यापत्तिकारणम् ॥ अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥ अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ॥
स्वीकार एव चोद्वाहे स्नानमेवं प्रसाधनम् ॥ ५ ॥ दूरे वार्ययनं तीर्थं लावण्ये केशधारणम् ॥ उदरम्भरिता स्वार्थः सत्यत्वे धाष्टर्यमेव हि ॥ ६ ॥

दाम्पत्ये भार्यापतिभावे परस्पराभिरुचिरेव हेतुः नतु कुलगोत्रवृद्धेच्छादिः । व्यावहारिके क्रयविक्रयादिव्यवहारे मायावञ्चनमेव हेतुर्नतु निष्कपटतया वर्त्तनम् । स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुः न कुलमाचारो वा । विप्रत्वे सूत्रधारणमेव न तु शौचसन्तोषादिविप्रलक्षणम् ॥ ३ ॥ लिङ्गमिति ॥ आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकमेव हेतुर्न त्वाचारविशेषः । अन्योन्यापत्तौ परस्परनमस्कारादिव्यवहारे च कारणं लिङ्गमेवेत्यन्वयः । अवृत्त्या धनादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयो भवति । पाण्डित्ये चापलं वचः बहुभाषणमेव कारणं न तु विद्याभ्यासः ॥ ४ ॥ अनाढ्यतेति ॥ असाधुत्वे नीचत्वे चौर्याद्यभियोगे च अनाढ्यता दरिद्रतैव हेतुः न जात्यादि । साधुत्वे उत्कृष्टत्वे च दम्भः व्याजेन वर्त्तनं हेतुर्न त्वाचारः । उद्वाहे विवाहे परस्परस्वीकार एव हेतुः नतु शास्त्रीयो विधिः । प्रसाधनं देहमलापनयनमेव स्नानं न तु शास्त्रीयं तीर्थावगाहनम् ॥५॥ दूरे इति ॥ दूरे वर्त्तमानं वार्ययनं जलाशय एव तीर्थं नतु गुर्वादि गङ्गादि वा । लावण्ये निमित्ते केशधारणमेव भूषणादेरविद्यमानत्वात् । उदरभरणमेव

स्वार्थः परमपुरुषार्थः नतु धर्मादिः । सत्यत्वे धाष्टर्यमेव हेतुः नतु यथार्थभाषणम् ॥ ६ ॥ दाक्ष्यमित्यर्द्धम् ॥ कुटुम्बभरणमेव न तु धर्मादिपुरुषार्थसंपादनम् । दाक्ष्यं निपुणत्वम् । यशोऽर्थे एव धर्मसेवनं नतु परलोकार्थे ॥ ७ ॥ एवमिति ॥ एवं दुष्टाभिः प्रजाभिः क्षितिमण्डले आकीर्णे व्याप्ते सति ब्राह्मणादीनां मध्ये यो बली स एव नृपो भवितेत्यन्वयः ॥ ८ ॥ प्रजा इति ॥ लुब्धैरर्थकामपरैरतएव निर्घृणैर्निष्कृपैर्दस्युधर्मभिर्लुम्पकै राजन्यैराच्छिन्ना अपहृता दारा द्रविणानि च यासां ताः प्रजा गिरिकाननमेव यास्यन्ति ॥ ९ ॥ शाकेति ॥ शाकमूलामिषाणि क्षौद्रं मधु फलपुष्पे च अष्टिर्बीजं च तान्येव भोजनं यासां ताः । तत्राप्यनावृष्ट्या यो दुर्भिक्षः आहारालाभः करश्च स्वामिग्राह्यो भागस्ताभ्यां पीडिताः प्रजाः विनङ्क्ष्यन्ति ॥ १० ॥ शीतेति ॥ तथा शीतवातादिभिः अन्योऽन्यतश्च क्षुत्तृड्भ्यां व्याधिभिः चिन्तया च प्रजाः सन्तप्स्यन्ते । सन्तापेनेति पाठे विनङ्क्ष्यन्तीति पूर्वस्यानुषङ्गः ॥ ११ ॥ त्रिंशदित्यर्द्धम् ॥ कलौ त्रिंशद्विंशतिवर्षाणि नृणां परमायुर्भविष्यतीति शेषः । यद्वा । शीतवातेत्यर्द्धं स्वपूर्वश्लोऽके-

दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ॥ ७ ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ ८ ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥ ९ ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥ अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः ॥ १० ॥ शीतवातातपप्रावृड्हिमैरन्योऽन्यतः प्रजाः ॥ क्षुत्तृड्भ्यां व्याधिभिश्चैव संतापेन च चिन्तया ॥ ११ ॥ त्रिंशद्विंशति वर्षाणि परमायुः कलौ नृणाम् ॥१२॥ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ॥ वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १३ ॥ पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १४ ॥ शूद्रप्रायेषु वर्णेषु च्छागप्रायासु धेनुषु ॥ गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥ १५ ॥ अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ॥ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १६ ॥ इत्थं कलौ गतप्राये जनेषु खरधर्मिणि ॥ धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १७ ॥

न्वेति । ततः क्षुत्तडादिनिमित्तैः त्रिंशदादिवर्षाणि परमायुरिति ॥ १२ ॥ क्षीयमाणेष्विति पञ्चकम् ॥ देहिनां कलिदोषतः देहेषु क्षीयमाणेषु ह्रस्वप्रमाणेषु दुर्बलेषु च वर्णाश्रमवतां नृणां धर्मपथे वेदमार्गे च नष्टे सति तथा अन्यधर्मेऽपि पाखण्डप्रचुरे राजसु च दस्युप्रायेषु चौरतुल्येषु । "प्रायो बाहुल्यतुल्ययोः" । येन केनापि प्रकारेण धनादिग्रहणतात्पर्येषु अन्येषु च नृषु चौर्यानृतवृथाहिंसाद्या नानावृत्तयो येषां तेषु तथाभूतेषु सत्सु ब्राह्मणादिवर्णेषु शूद्रप्रायेषु स्वस्वाचारभ्रष्टेषु धेनुषु छागप्रायासु प्रमाणतः क्षीरतः हिंस्यत्वतश्च अजतुल्यासु संन्यासाद्याश्रमेषु गृहप्रायेषु गृहिवन्मैथुनादिविषयभोगपरायणेषु बन्धुषु यौनप्रायेषु योनिसंबन्धो यौनस्तत्प्रायेषु ओषधीषु अणुप्रायासु अतिस्वल्पगुणासु स्थास्नुषु महावृक्षेषु शमीप्रायेषु परिमाणतः छायातः फलतश्च शमीवद्धस्वेषु मेघेषु विद्युत्प्रायेषु तडिद्बहुलेषु स्वल्पजलेषु सद्मसु गृहेषु शून्यप्रायेषु अतिथिभोजनादिधर्मरहि-

तेषु सत्सु इत्थं जनेषु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये समाप्तप्राये सति भगवान्धर्मत्राणाय सत्वेन शुद्धसत्वमयेन वपुषाऽवतरिष्यति ॥ १३॥ १४॥ १५॥ १६॥ १७॥ चराचरेति ॥ चराचरगुरोरीश्वरस्याखिलात्मनः विष्णोर्जन्मकर्तृसाधूनां धर्मत्राणाय कर्मणः अपनुत्तये नाशाय मोक्षाय भवति ॥ १८ ॥ शम्भलेति ॥ शम्भलग्रामे मुख्यस्य श्रेष्ठस्य महात्मनो नाम्ना विष्णुयशसो ब्राह्मणस्य भवने कल्किर्नाम भगवान्प्रादुर्भविष्यति ॥ १९ ॥ अश्वमिति युग्मम् ॥ आशु शीघ्रं गच्छतीति तथा तम् अमाधवो दम्यन्ते येन तं देवदत्तनामानमश्वमारुह्य अष्टैश्वर्याणि अणिमादीनि गुणाश्च सत्यसंकल्पशौर्यादयस्तैरन्वितः अप्रतिमद्युतिः जगत्पतिः कल्किः आशुना शीघ्रगामिना तेन हयेन क्षोण्यां विचरन् नृपलिङ्गच्छदः राजवेषेण छन्नान् कर्मणा तु दस्यून् कोटिशोऽसिना निहनिष्यति ॥ २० ॥ २१ ॥ अथेति सार्द्धम् ॥ एवमखिलेषु दस्युषु उपद्रवकारिषु अधर्मिषु हतेषु सत्सु अथानन्तरं वासुदेवस्य भगवतः कल्केरङ्गरागेण चन्दनादिना योऽतिपुण्यगन्धोऽनिलस्तं स्पृशन्तीति तथा तेषां पौरजानपदानां जनानां मनांसि विशदानि

**चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणाय साधूनां जन्मकर्मापनुत्तये ॥ १८॥ शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ॥ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १९ ॥ अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ॥ असिना साधुदमनमष्टैश्वर्यगुणान्वितः ॥ २० ॥ विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ॥ नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति ॥ २१ ॥ अथ तेषां भविष्यन्ति मनांसि विशदानि वै ॥ वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २२ ॥ तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति ॥ वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते ॥ २३ ॥ यदाऽवतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः ॥ कृतं भविष्यति तदा प्रजासूतिश्च सात्विकी ॥ २४ ॥ यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥ एकराशौ समेष्यन्ति तदा भवति तत्कृतम् ॥ २५॥ येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः॥ ते त उद्देशतः प्रोक्ताः वंशीयाः सोमसूर्ययोः ॥ २६ ॥**

विवेकयोग्यानि निर्मलानि भविष्यन्ति ॥ २२ ॥ तेषामिति ॥ वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते सति तेषां जनानां प्रजाविसर्गः पुत्राद्युत्पत्तिरूपः स्थविष्ठः स्थूलो विस्तृतः संभविष्यति ॥ २३ ॥ यदेति ॥ हरिर्धर्मपतिः धर्मपालको भगवान्कल्किर्यदाऽवतीर्णो भविष्यति । तदा कृतयुगं भविष्यति । प्रजानां प्रसूतिश्च सात्विकी भविष्यति ॥ २४ ॥ यदेति ॥ यदा चन्द्रः सूर्यः तिष्यः पुष्यः बृहस्पतिश्चेति एकराशौ तत्रापि पुष्यनक्षत्रे समेष्यन्ति योगमेष्यन्ति । तदा तत्कृतयुगं भविष्यति । अत्र स्वामिपादाः । यद्यपि प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां पुष्ययोगः संभवति तथापि तेषां सहप्रवेशोऽत्र विवक्षितः । समेष्यन्तीति वचनात् इति प्राहुः । यद्यपि सह प्रवेशोऽपि कलौ बहून् वारान् भवति तथापि उपलक्षणमात्रमेतदिति स्वामिपादाभिप्रायोऽतो न दोषः ॥ २५ ॥ येऽतीता इति ॥ उद्देशतः क्रमेण संक्षेपतः ।

स्फुटमन्यत् ॥ २६ ॥ आरभ्येति ॥ भवतस्तव जन्म आरभ्य यावन्नन्दाभिषेचनं तावत्समयान्तरे वर्षाणां सहस्रं पञ्चदशवर्षोत्तरं शतं चेति पञ्चदशाधिकानि एकादशशतानि भवन्ति इति । अत्र श्रीस्वामिपादाः कयाऽपि विवक्षयाऽवान्तरसङ्ख्येयम् । वस्तुतः परीक्षिन्नन्दयोरन्तरं तु द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति । यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशती राजानः सहस्रसंवत्सरं भोक्ष्यन्तीति नवमस्कन्ध उक्तं ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरमिति ततः परं च प्रद्योतना अष्टत्रिंशोत्तरशतं शिशुनागाश्च षष्ठ्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् इति प्राहुः । विवक्षा चात्र शुद्धक्षत्रवंशावधेरिति स्वामिपादा एव विष्णुपुराणटीकायामाहुः । केचित्तु "आरभ्य भवतो जन्म" इति श्लोके शतमित्यत्र छान्दसमेकत्वं पञ्चशतानीत्यर्थः । तथाच वर्षसहस्रं दशोत्तराणि पञ्चशतानि चेत्यर्थः । एतच्च स्कान्दैकवाक्यत्वाल्लब्धम् । तथाहि सप्तर्षीणां प्रतिनक्षत्रं शतवर्षात्मको भोगः परीक्षित्समये मघायां सप्तर्षीणां स्थितिः तेषां मघास्थितिकाले कलेः प्रवृत्तिरिति भागवते स्पष्टेन । तेन कलेः शतवर्षमध्य परीक्षितो जन्मेति निश्चीयते । ततश्च कलेः प्रायेणाशीतिवर्षेषु गतेषु परीक्षितो जन्म ततः दशाधिकसार्द्धसहस्र १५१० मितेषु वर्षेषु गतेषु नन्दाभिषेचनम् । पुत्रसहितनवनन्दानां राज्यकालश्च शतवर्षात्मकः । एवं च कलेः नवत्यधिकषोडशशती १६९० मितवर्षपर्यन्तो नन्दराज्यपरमावधिरित्यनुमीयते । स एव कालः स्कान्दे विशिष्योक्तः । यथा ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये ॥ "भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति" इति ॥ अस्यार्थः द्विसहस्रेषु द्विसहस्रपर्यन्ते । निर्धारणे

**आरभ्य भवतो जन्म यावन्नन्दाऽभिषेचनम् ॥ एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २७ ॥**

सप्तमी । दशाधिकशतत्रये स्थिते सतीति शेषस्तथा च नवत्यधिकषोडशशतवर्षेषु कलेर्गतेष्वित्यर्थलाभः । नन्दराज्यमित्यस्य नन्दानां राज्यमित्यर्थः । उत्तरत्रापि यानिति बहुवचननिर्देशात् इति कल्पयन्ति । परं त्वेतदपि "यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षय" इति भागवतश्लोकेन विरुध्यते । यतः परीक्षिज्जन्म नन्दाभिषेकान्तरबोधकसप्तर्ष्यधिष्ठितनक्षत्रमघापूर्वाषाढाकालः एकादशशतासन्न एव नाधिकः किंच विष्णुपुराणे प्रकृतश्लोके शतं पञ्चदशोत्तरमित्यत्र शतस्थाने ज्ञेयमिति पाठ उपलभ्यते । तत्र पञ्चशतानीत्यपि वक्तुं न शक्यते । परेतु "आरभ्य भवतो जन्म" इत्यत्रत्यां सङ्ख्यां पञ्चदशोत्तरैकादशशतमितामेव यथाश्रुतं मन्यन्ते । परंतु तत्संवादाय मागधराजानां मार्जारिप्रभृतिरिपुञ्जयान्तानां राज्यकालसङ्ख्याबोधके ये बार्हद्रथभूपाला भाव्याः।साहस्रवत्सरमिति श्लोके साहस्रपदं बहुत्वमात्रपरतया सहस्रार्द्धसन्नपरं व्याख्याय पञ्चप्रद्योतनदशशुङ्गराज्यकालवर्षाणि । तत्र संयोज्य पञ्चदशोत्तरामेकादशशतीं वर्षाणामदर्शयन् । अन्ये तु एकादशशतानि पञ्चदशोत्तराणीत्येषैव सङ्ख्या प्रमाणी कर्त्तव्या या तु न्यूनं सार्द्धसहस्रं वर्षाणां परीक्षिन्नन्दान्तरसङ्ख्या नवमद्वादशस्कन्धवचनानुसारिणी प्रतीयते सा तु मार्जारिप्रभृतीनां शुङ्गान्तानां खण्डमण्डलपतीनां विनाऽप्यानन्तर्यं सङ्ख्यातत्वादित्याहुः । अत्र यद्यपि ज्योतिःशास्त्ररीत्या शास्त्रान्तरैश्च भूयान्विरोधः प्रतीयते । तथाऽपि तत्परिहारे ग्रन्थबाहुल्यभयादुपरम्यते टीकाशेषभागे च पर्यङ्काख्ये लेखिष्यते॥२७॥

सप्तर्षीणां त्विति ॥ अत्रायमर्थः । उत्तरध्रुवतारानिकटे प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किंचिदुन्नतरेखाग्रस्थानीयो मरीचिस्ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यः ततः पश्चादीषदुन्नतरेखामूलस्थानीयोऽङ्गिरास्ततः पश्चाच्चतुरस्रताराचतुष्के ऐशान्याम् । अत्रिस्ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहस्तत उत्तरतः क्रतुः । एवं स्थिते तेषां सप्तर्षीणां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमाश्विन्यादिष्वन्यतमं नक्षत्रं निशि दृश्यते ॥ २८ ॥ तेनेति ॥ तेन नक्षत्रेण युक्ता एत ऋषयो नृणामब्दशतं तिष्ठन्ति ते च द्विजास्त्वदीये काले अधुना मघाः आश्रिता वर्तन्ते । तथा च पूर्वयोः क्रतुपुलहयोर्मघानां च साम्यावस्थित्युपक्रमकाल एव कलिप्रवेशकाल इति सूचितम् । तेनाश्लेषायां कृष्णप्रादुर्भावः मघाश्रितेषु तेषु श्रीकृष्णान्तर्धानं कलिप्रवेशश्च । ततः पूर्वाषाढां प्राप्तेषु कलेर्वृद्धिरित्युत्तरग्रन्थाज्ज्ञेयम् ॥ २९ ॥ विष्णोरिति ॥ यदा असौ विष्णोर्भगवतो भानुरवतारः श्रीकृष्णाख्यः दिवं वैकुण्ठं गतस्तदा कलिर्लोकमविशत् । यत्र यस्मात्

सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २८ ॥ तेनैव ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ॥ ते त्वदीये द्विजाः काल अधुना चाश्रिता मघाः ॥ २९ ॥ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः ॥ तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥ ३० ॥ यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३१ ॥ यदा देवर्षयः सप्त मघासु विचरन्ति हि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३२ ॥ यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ॥ तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३३ ॥ यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ॥ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३४ ॥ दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम् ॥ भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३५ ॥

कलिप्रवेशाज्जनः पापे रमते ॥ ३० ॥ यावदिति ॥ यावत्स रमापतिः पादपद्माभ्यां पृथिवीं स्पृशन्नास्ते स्म तावत्स पृथिवीं पराक्रान्तुमभिभवितुं नाशकत् न समर्थोऽभूत् ॥ ३१ ॥ यदेति ॥ यदैव सप्तदेवर्षयो मघासु विचरन्ति स्म तदा तु दिव्येन मानेन सन्ध्यांशाभ्यां सह द्वादशाब्दशतात्मकः कलिः सन्ध्यामतिक्रम्य लोकं प्रविष्टः ॥ ३२ ॥ यदेति ॥ यदा महर्षयः मघाभ्यः पूर्वाषाढां यास्यन्ति तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नन्दात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः ॥ ३३ ॥ ननु कलेः प्रथमसन्ध्यायां कृष्णोऽवतीर्ण इति नव्या वदन्ति तन्नेत्याह—यस्मिन्निति ॥ श्रीकृष्णो यस्मिन्नेवाहनि दिवं यातस्तस्मिन्नेवाहनि तत्रापि तस्मिन्नेव क्षणे कलियुगं प्रतिपन्नं प्रजाभिभवे योग्यं जातमिति पूर्ववृत्तान्तज्ञाः प्राहुः ॥ ३४ ॥ दिव्येति ॥ दिव्यानां देवमानवर्षाणां सहस्रस्यान्ते चतुर्थे कलियुगे व्यतिक्रान्ते सति पुनः कृतयुगं भविष्यति । यदा नृणां मनः आत्मनः स्वरूपस्य प्रकाशकं भविष्यति तदा कृतं भविष्यतीत्यर्थः ॥ ३५ ॥

राजवंशोक्तां स्थितिं ब्राह्मणा दिवंशेष्वप्यतिदिशति–इतीति ॥ इत्येवंभूत एष मानवो वैवस्वतमनोर्वंशो यथा सङ्ख्यायते याभिरुच्चनीचावस्थाभिः सम्यक् कथ्यते तथा विट्शूद्रविप्राणामपि तास्ता अवस्था युगे युगे बोध्या इत्यर्थः । तास्ता इत्यत्र वंशा इति पाठान्तरम् ॥ ३६ ॥ एतेषामिति ॥ नामैव लिङ्गं ज्ञापकं येषां तेषां महात्मनां कथामात्रमेवावशिष्टं येषां तेषाम् एतेषां पुरुषाणां भुवि कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा अतो नात्र रागः कार्यः ॥ ३७ ॥ कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह–देवापिरिति ॥ शन्तनोर्भ्राता देवापिः सोमवंशजः इक्ष्वाकुवंशजो मरुश्च सूर्यवंशजः एतौ महायोगबलेनान्वितौ कलापग्रामे बदर्याश्रमस्थे योगिनामावासे प्रसिद्धे आसाते ॥ ३८ ॥ ताविति ॥ तौ च कलेरन्ते कृतयुगादौ वासुदेवेन भगवताऽनुशिक्षितौ उपदिष्टवर्णाश्रमधर्मौ इह लोके एत्य आगत्य वर्णाश्रमधर्मं पूर्ववत्प्रथयिष्यतः ॥ ३९ ॥ प्रतिचतुर्युगमयमेव प्रकार इत्याह–कृतमिति ॥ स्फुटम् ॥ ४० ॥ राजन्निति स्फुटम् ॥ ४१ ॥ कृमीति ॥ यस्य च राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यान्ते मरणे सति कृमयो विष्ठाभस्मेति वा संज्ञा भविष्यति । तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद नैव वेद महामूर्खः स एव यतो भूतद्रोहात् द्रोग्धुर्निरयो भवति ॥ ४२ ॥ अबुधाः ममत्वप्रकारमाह–कथमिति ॥ सेयमखण्डा भूर्मे पूर्वजैः पुरुषैर्धृता सेदानीं मत्पूर्वा च सती मत्पुत्रस्य पौत्रस्य वंशजस्य च कथं स्यादित्येवम् ॥ ४३ ॥ तेज इति ॥ अबुधाः तेजोऽबन्नमयम् उपलक्षणतया पञ्चभूतपरिणामरूपं कायमेवात्मतया गृहीत्वा अभिमत्य महीं च ममतया गृहीत्वा उभौ महीकायौ हित्वाऽन्ते प्रारब्धावसाने अदर्शनं गताः मरणं प्राप्ताः । यद्वा । कथमित्यादिद्वयम् एकान्वयम् ॥ ४४ ॥ ये इति ॥ हे राजन् ये ये राजानः ओजसा बलेन भुवं भुञ्जन्ति स्म ते सर्व एव कथासु क्रियमाणासु कथामात्ररूपाः

इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ॥ ३६ ॥ एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३७ ॥ देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ॥ कलापग्राम आसाते महायोगबलान्वितौ ॥ ३८ ॥ ताविहेत्य कलेरन्ते वासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥ ३९ ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ४० ॥ राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ॥ भूमौ ममत्वं कृत्वाऽन्ते हित्वेमां निधनं गताः ॥ ४१ ॥ कृमिविड्भस्मसंज्ञाऽन्ते राजनाम्नोऽपि यस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ ४२ ॥ कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥ ४३ ॥ तेजोऽबन्नमयं कायं गृहीत्वाऽऽत्मतयाऽबुधाः ॥ महीं ममतया चोभौ हित्वाऽन्तेऽदर्शनं गताः ॥ ४४ ॥ ये ये भूपतयो राजन्भुञ्जन्ति भुवमोजसा ॥ कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४५ ॥ इति श्रीभागवते द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

